४१ संख्यककर्णवालिसंस्थ सिद्धान्तविद्यालयात्
श्रीहेमचन्द्र-भट्टाचार्य्येण
प्रकाशितम् ।

---

कलिकाता-महानगर्य्यां
४१ संख्यककर्णवालिसंस्थ सिद्धान्तयन्त्रे
श्रीहेमचन्द्रभट्टाचार्य्येण मुद्रितम् ।



মহামহোপাধ্যায় শ্রীহরিদাস সিদ্ধান্তবাগীশ

# विज्ञापनम् ।

हन्त ! दृश्याने खलु जगत्यां प्रायेण सर्ववस्तूनामेव नूतनस्यादरो गरीयान् । नवीनः पुमान् नवीना रमणी नवञ्च नारिकेलमित्यादिकं नवीनं वस्तुजातं कस्यादरं नाकर्षति । संस्कृतग्रन्थविषये तु विपरीत एवायं नियमः ; तुच्छमपि प्राचीनमतिसमीचीनं मन्यमानः सादरमादत्ते, चमत्कारिणमपि नवीनमतचिविचलितचित्तस्तुपापि विलोकयितुं विकल्पते लोकः । अतएवैतत् दुःसहसमाक्षेपविकलहृदयः कालिदासोऽपि मालविकाग्निमित्रे— "पुराणमित्येव न साधु सर्व्वं

न चापि काव्यं नवमित्यवद्यम् ।"

इति साक्षेपमाख्यातवान् । तत् किमयं भारतस्यैव स्वभावः ? उत वा भारतस्यावनतिस्वभावः ?। तत्र प्राचीनकाले नवीनादरणदर्शनात् भारतस्यावनतिस्वभाव एवायमिति सिद्धान्तयन्ति तत्त्वविदः । ब्रुवन्ति च ते—"यदा पुनरिमे भारतवासिनो विद्वेषविषविहीनाः सन्तः स्वदेशीयनवीनमादर्त्तुं शिक्षिष्यन्ते , प्रवर्त्तिष्यन्ते च तदा नवनवाविष्कारेषु साधारणाः , तन्मूला चोन्नतिरवश्यम्भाविनी" इति । हन्त ! न जाने तादृशः कालः कदागमिष्यति, अस्तुत एवागमिष्यति नवेति । अस्माकन्तु ईदृशनवीनावहेलनसमय एव नवीनं ग्रन्थं विरचयतां यशोलेशलिप्सापि हृदये नोदयते, व्ययबहुलतया अर्थलिप्सामपि व्यर्थामेव समर्थयते मनः , तथापि तु पाठार्थिनां सुविधाविधानाय महीयानयमायास इति ।

विनीत—

१८४४ शकाब्दीय सौराषाढस्य द्वाविंशतितमदिवसे ] श्रीहरिदासशर्म्मणः ।

# नाट्योल्लिखितव्यक्तिगणः।

## पुरुषगणः।

| | |
|---|---|
| सूत्रधारः | प्रधाननटः। |
| चारुदत्तः | उज्जयिनीस्थो भद्रलोकः। |
| मैत्रेयः | चारुदत्तवयस्यः। |
| विटः | मिश्रितलम्पटो भद्रलोकः। |
| शकारः | राज्ञो भोग्यस्त्रिया भ्राता। |
| चेटः | शकारस्य भृत्यः। |
| संवाहकः | चारुदत्तस्य भावमर्द्दको भृत्यः परञ्च बौद्धसन्न्यासी। |
| माथुरः | द्यूतसभाध्यक्षः। |
| द्यूतकरः | कश्चित् द्यूतसेवी। |
| दर्द्दुरकः | भूतपूर्वद्यूतसेवी। |
| कर्णपूरकः | वसन्तसेनाभृत्यः। |
| चेटः | वर्द्धमानकनामा चारुदत्तभृत्यः। |
| शर्विलकः | दुर्द्धर्षः कश्चित् ब्राह्मणयुवा। |
| चेटः | वसन्तसेनाया गोशकटचालकः। |
| कुम्भीलाः | वसन्तसेनाभवनभृत्याः केचित् जारजाः। |
| विटः | वसन्तसेनासहचरो भद्रलोकः। |
| दारकः | रोहसेनो नाम चारुदत्तपुत्रः। |
| स्थावरकः | शकारस्य भृत्यः। |
| आर्य्यकः | गोपपुत्रो भावी राजा। |
| वीरकः | पालकराजप्रधानसेनापतिः। |
| चन्दनकः | पालकराजसेनापतिः। |
| भिक्षुः | संवाहक एव। |
| शोधनकः | विचारालयभृत्यः। |
| अधिकरणिकः | विचारकः। |
| श्रेष्ठिकायस्थौ | विचारालयकर्म्मचारिणौ। |
| चाण्डालौ | घातकौ। |

---

## स्त्रीगणः।

| | |
|---|---|
| नटी | सूत्रधारस्य स्त्री। |
| वसन्तसेना | वेश्याकन्या। |
| रदनिका | चारुदत्तस्य दासी। |
| मदनिका | वसन्तसेनाया दासी। |
| चेटी | वसन्तसेनाया अपरा दासी। |
| वधूः | धूतानाम्नी चारुदत्तस्य पत्नी। |
| छत्रधारिणी | वसन्तसेनाया इतरा दासी। |
| चेटी | धूताया दासी। |
| वृद्धा | वसन्तसेनाया माता। |

## अथ कविसमयनिरूपणम् ।

यद्यपि शूद्रककवेः समयनिरूपणं स्पष्टप्रमाणाभावेन दुष्करमिव प्रतिभाति, तथाप्यशक्यमित्यपि वक्तुं न शक्यते । तथा च "मृच्छकटिकं सर्व्वप्राचीनम्" इति हि प्रचरति सम्प्रदायसिद्धश्चिरन्तनः प्रवादः । तत्र चादिमां सीमामन्विष्यता नाधिकं परिश्रमितव्यम् । अस्ति हि मृच्छकटिके चाणक्यनामोल्लेखः (क) ; चाणक्यश्च चन्द्रगुप्तमन्त्री, चन्द्रगुप्तश्च ग्रीक्देशीयमहावीरेण आलेक्जाण्डारेण सह सम्मिलित आसीत् । आलेक्जाण्डारश्च खृष्टजन्मनः पूर्व्ववर्त्तिनि ३२७ वत्सरे भारतमाक्रमितुमाजगाम । अतश्च शूद्रको राजा खृष्टजन्मनः पूर्व्ववर्त्ति ३२७ वत्सरात् परमाविर्बभूवेत्यवश्यमेवावधारणीयम् ।

पश्चिमां सीमामन्विष्यता तु सर्व्वमेतत् पर्य्यालोचनीयम् । यथा चन्द्रगुप्तपौत्रः खल्वशोकः, नवीनं साम्राज्यमधिगतो नितरामत्याचारेण "चण्डाशोकः" इति निन्दितोपाधिना प्रजाभिराख्यायमानः गच्छता कालेन स्वयमपि स्वकर्म्मणा ग्लानिमापन्नो बौद्धधर्म्ममाश्रयन् तञ्च धर्म्मं स्वदेशे भारतवर्षे प्रचारयन् देशान्तरेष्वपि चीनजापानादिषु प्रचारितवान् । अत्रान्तरे बौद्धधर्म्मो राजधर्म्मतया राजचेष्टया च भारते प्रायेण सर्व्वत्रैवास्पदमासादयामास । तेन च तदानीन्तनभारतीयप्रधाननगर्य्यामुज्जयिन्यामपि बौद्धधर्म्मः प्रबलतामुपलेभे इत्यवश्यमङ्गीकार्य्यम् । अथ च मृच्छकटिक एव विपुलतरमार्य्यसनातनधर्म्मानुष्ठानं दृश्यते ।

(क) "अम्बषाने पलाश्रन्ती मह्लगन्धेण शुङ्दा ।
केशविन्दे पलामिद्दा चाणक्केणेव्व दौवदी ॥"
मृच्छकटिकाप्रथमाङ्के ३९ श्लोक. । ( ८१ पृष्ठे )

यथा कविरयं स्वयमेवाश्वमेधेन यजति (ख) ; चारुदत्तो ब वैश्वदेवं निर्वाहयते सन्ध्याञ्चोपास्ते (ग) ; वसन्तसेना च स्व. देवपूजां निर्वर्त्तयति (घ), ब्राह्मण: शर्विलक: कार्त्तिकेयं न स्कुरुते, यज्ञोपवीतञ्च दधाति (ङ), राजा पालकश्च यज्ञम तिष्ठति, यज्ञे पशुहत्याञ्च सूचयति शर्विलक: (च) ; तेन स्मृतिस्मृत्युक्तधर्म्ममयमेवेदं मृच्छकटिकमिति सर्व्वथा मन्तव्यम् ततश्च अशोकेन बौद्धधर्म्मप्रचारात् पूर्व्वमेवेदं शूद्रकेण विरचि मित्यकामेनाप्यवश्यमङ्गीकार्य्यम्। न च संवाहकेन बौद्धसन्यासा लम्बनादत्र बौद्धधर्म्माख्यानमप्यस्तीति वाच्यम् (छ) ; विरलं तत्। किञ्च तत्पूर्व्वमेव च बुद्धदेवाविर्भावात् अशोकेन तद्धर्म्म ग्रहणात् प्राक् अराजधर्म्मतया प्रजाभिर्बाध्यमानो बौद्धधर्म्म विरलप्रचार आसीत्। ततश्च एकमात्रसंवाहकस्यैव बौद्धधर्म्मा श्रयणं दर्शितम्। बहुकालात् परं बौद्धधर्म्मे शैथिल्यमापन्ने भग वता शङ्करेण बौद्धधर्म्मं निरस्य संस्थापिते वा सनातनधर्म्म

---

(ख) "परमसमुदयेनाश्वमेधेन चेष्टा" प्रथमाङ्के ४ श्लोक'। (६ पृष्ठे)

(ग) चारु। "वयस्य! समाप्तजपोऽस्मि। तत् साम्प्रत गच्छ, मातृभ्यो बलि मुपहर।" प्रथमाङ्के। (७४ पृष्ठे)

(घ) चेटी। "अज्जए! अत्ता आदिसदि गहादा भविअ देवदाण पु यिज्जत्तेहि त्ति।" द्वितीयाङ्के। (१२५ पृष्ठे)

(ङ) "नमो वरदाय कुमारकार्त्तिकेयाय" "इद यज्ञोपवीत प्रमाणसूत्र भविष्यति तृतीयाङ्के। (२१७ पृष्ठे) (२१८ पृष्ठे च)

(च) "पशुवत् यज्ञवाटस्थो दुरात्मा पालको हत।" दशमाङ्के ५१ श्लोकं (७५२ पृष्ठे)

(छ) "अज्जए! अह एदिणा जूदिअल्लावमाणेण सक्क-समणके हुविस्सं।" द्वितीया। (१८२ पृष्ठे)

हिण मृच्छकटिकं निर्म्मितमित्युक्तौ तु अस्य सर्व्वप्राचीनता-
ो व्याहन्येत।

अतः खृष्टजन्मपूर्व्वतृतीयशताब्दीसमय एव शूद्रकस्याावि-
समय इति प्रतीयते। एवञ्च शकुन्तलानाटकादिभ्यः प्राचीन-
। "मृच्छकटिकं सर्व्वप्राचीनम्" इति साम्प्रदायिकप्रवादोऽपि
च्छते।

केचित्तु शूद्रककविं खृष्टीयपञ्चशताब्दीयं वदन्ति।

—:०:—

## अथ स्वरूपादिनिरूपणम्।

मृच्छकटिकं नामेदं प्रकरणम्। एतद्वृत्तस्य लौकिकत्वात्
कल्पितत्वाच्च। यथा साहित्यदर्पणे—

> "भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
> शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।
> सापायधर्मकामार्थपरो धीरप्रशान्तकः॥"

तत्र ब्राह्मणश्चारुदत्तो धीरप्रशान्तलक्षणो नायकः। यथा
—

> "सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्॥"

अत्रैव्याहचिर्वेश्याजातीया वसन्तसेना, कुलजा स्वीया धूता-
च नायिका। यथा—

> "नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्।
> तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः।
> कितवद्यूतकारादिविटचेटकसङ्कुलः॥"

लम्बी पुष्पभूषिते। वेश्या तु तरङ्गदत्ते। द्वे अपि मृच्छकटिके।" इति च
तेनेदं दर्पणोक्ततृतीयभेदान्तर्गतं प्रकरणम्। प्राधान्यात्तु वसन्तसेनैव
लीकवाद।

"धीरा कलाप्रगल्भा स्यात् वेश्या सामान्यनायिका ।"

"एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।"

"विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।"

तत्रापि धूर्त्ता मध्या धीरा च । तल्लक्षणन्तु दर्पणादावुन्नेयम् ।

वसन्तसेनाया अभिसारात् पूर्वं पूर्वरागाख्यो विप्रलम्भ-शृङ्गारः, तस्याश्चारुदत्तगेहेऽवस्थानसमये सम्भोगशृङ्गारः, तथा शकारकर्त्तृकमोटनाच्च परं करुणविप्रलम्भः । यथा—

"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥"

"दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥"

"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥"

बाहुल्येन वैदर्भी रीतिः । तथा च—

"माधुर्य्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥"

प्रायेण प्रसादो गुणः । यथा तत्रैव—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥"

तदत्र संग्रहश्लोकः —

नेता प्रशान्तो द्विजचारुदत्तः नेत्री तु धूर्त्ता च वसन्तसेना ।
विभिन्नशृङ्गाररसः किलाङ्गी वैदर्भरीतिश्च गुणः प्रसादः ॥



# मृच्छकटिकम्।

---

## प्रथमोऽङ्कः।

---

पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥१॥

नमो गणेशाय।

सुवर्णकृतसद्वर्णं राजद्राजतशैलवत्।
सर्वदं सर्वदा भूयात् सशिवं सशिवं शिवम् ॥१॥

कलानिधेः शूद्रकभूपतेरिमां वक्त्रचन्द्रिकां नित्यनिसर्गनिर्मलाम्।
टीकाभरन्मे गगने सतां गणे क्रियादपूर्वां किल पूर्ववत् प्रियाम् ॥२॥

अथ कश्चित् कविप्रवरो लोकान्तरगतशूद्रकनृपतेः कीर्तिनाम्नो स्थितिप्रचारार्थं तदीय ज्ञायादान् वाञ्छितार्थलाभाद्वीकारमादाय मृच्छकटिकं नाम प्रकरणं निर्मातुमिच्छन् तस्य निर्विघ्नपरिसमाप्त्यै "बहुविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेत्" इत्यालङ्कारिकवचनप्रामाण्यात् बहुविघ्नोपशान्त्यै सूत्रधारपठनीयां नान्दीमुपनिबध्नाति—

पर्यङ्केति। पर्यङ्कस्य साधारणखट्वाया, यद्वा पादे सह तिर्यग्दण्डेन संयोग ग्रन्थि, यो बन्धो बन्धनरज्जुः, तद्वत् द्विगुणितो द्विगुणतामापन्नः, यो भुजगः सर्पः, तेन

आश्लेषस वीत आलिङ्गनवत् दृढवेष्टित जानुनी जानुद्वय यस्य तस्य सर्पेण दृढबद्धजानुद्वयावस्थस्य पद्मासनस्थस्येत्यर्थः । एतेन यथा पादै सह तिर्यग्दण्डाना सन्धिदेशे द्विगुणित रज्जुभिर्दृढबद्धतया उपरि गुरुतरभारपातेऽपि खट्वाया स्खलन न सम्भवति, तथा सर्पेण जानुयुगलस्य दृढबद्धतया एकभावेन सुदीर्घकालमध्युपविष्टस्य कदाचिदसहत्वादस्किंतभावेन पद्मासनस्य स्खलन न सम्भवतीति दर्शितम् ।

अन्त शरीराभ्यन्तर एव प्राणाना प्राणादिवायुपञ्चकस्य अवरोधेन, व्युपरत स्वयमेव निवृत्त सकल ज्ञान बाह्यपदार्थबोधो यस्मिन् कर्मणि तद्यथा तथा करणानि इन्द्रियाणि कर्णनयनादीनि येन तस्य । "सामान्यकरणवृत्ति प्राणाद्या वायव पञ्च" इति साङ्ख्यकारिकोक्ते प्राणानामिन्द्रियवृत्तिरूपत्वात् तन्निरोधेनैव च वृत्तिमतामिन्द्रियाणामपि निरोधावश्यम्भावात सकलबाह्यपदार्थज्ञाननिवृत्तिरिति भाव ।

तथा तत्त्वदृष्ट्या यथार्थज्ञानेन प्रकृतिपुरुषयोर्विवेकज्ञानेनेत्यर्थ आत्मन्येव स्वजीव चैतन्य एव, व्यपगत निवृत्त करण शरीर यस्य त निराकारमित्यर्थ, आत्मान ब्रह्म चैतन्यम, पश्यत "तत्त्वमसि" इति महावाक्यानुसारेणावलोकयत अभेदेन जीवात्मपरमात्मानौ ध्यायत इत्यर्थ ।

ईदृशस्य शम्भोर्महादेवस्य शून्यस्य आकाशवन्निराकारतया शून्यप्रायस्य, ब्रह्मचैतन्यस्य, ईक्षणेन प्रागुक्तप्रकारेण दर्शनेन घटितो निष्पादित लयो जीवात्मन परमात्मनि लीनता यस्मिन स चासौ ब्रह्मलय परमात्मविषयकर्वति स तथोक्त शुद्धचैतन्यविषयक इत्यर्थ, समाधिर्ध्यानम् वो युष्मान् सामाजिकान् पातु रक्षतु । समाधिकर्त्तृकरक्षणीतया ग्रन्थकर्त्तृकारकमर्णमवाचिष्यत इति बोध्यम् ।

अत्र प्रथमचरणे लुप्तोपमालङ्कार ।

स्रग्धरा वृत्तम्—'म्रभ्नैर्याना त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात ॥१॥

---

পর্য্যঙ্কের সংযোগস্থলের বন্ধনরজ্জুর ন্যায় দ্বিগুণিত সর্প যাঁহার জানু যুগলকে আলিঙ্গনবৎ বেষ্টন করিয়া রহিয়াছে, শরীরের ভিতরে প্রাণাদি

अपि च. (क)

पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः ।
गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥२॥

नान्द्यन्ते सूत्रधार. (१) (ख) । अलमनेन परिषत्कुतूहलविमर्द-

(क) अपि च अन्यत् नान्द्यात्मकं वाक्यान्तरं तदित्यर्थः ।

पात्विति । श्यामो जलपूर्णत्वात् श्यामवर्ण. अम्बुदो मेघ एव उपमा उपमानं यस्य स, नील कालकूटविषतेजसा नीलवर्णः कण्ठो यस्य तस्य महादेवस्य, कण्ठो गलदेश, वो युष्मान् सामाजिकान्, पातु रक्षतु । यत्र कण्ठे, गौर्या पार्वत्या. भुजो लतेव सा, विद्युतो लेखा रेखा इव राजते स्वर्णवर्णत्वात् शोभते ।

अत्र "नीलकण्ठस्य कण्ठ" इति लाटानुप्रास', "श्यामाम्बुदोपम" इति आर्थी समासगतोपमा, "भुजलता" इति शम्भुकण्ठे लताया असम्भवात् लुप्तोपमैव न तु रूपकम्, "विद्युल्लेखेव" इति श्रौती समासगतोपमा च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

पथ्यावक्त्रं वृत्तम्—"युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्" इति लक्षणात् ॥२॥

---

পঞ্চ বায়ুকে অবরুদ্ধ করায় যাঁহার ইন্দ্রিয়সকল রুদ্ধ হইয়া গিয়াছে এবং তাহাতে বাহিরের সকল জ্ঞান নিবৃত্তি পাইয়াছে, যিনি তত্ত্বজ্ঞানবশতঃ নিজের আত্মাতেই নিরাকার পরমাত্মাকে দেখিতেছেন এবং উক্তরূপে শূন্যপ্রায় পরমাত্মার দর্শননিবন্ধন যাঁহার জীবাত্মা পরমাত্মাতে লীন হইয়া রহিয়াছে, সেই মহাদেবের পরমাত্মবিষয়ক ধ্যান, আপনাদিগকে রক্ষা করুক ॥১॥

(ক) অপি চ। নীলকণ্ঠ মহাদেবের নীলবর্ণমেঘের তুল্য কণ্ঠদেশ, আপনাদিগকে রক্ষা করুক, যে কণ্ঠদেশে বিদ্যুতের রেখার ন্যায় পার্বতীর বাহুলতা বিরাজ করিতেছে ॥২॥

---

(१) सूत्रधार• इत्यत परमपि मूल इत्यधिकः पाठ क्वचित् ।

पयामि—यदिदं वयं मृच्छकटिकं नाम प्रकरणं प्रयोक्तुं व्यवसिताः; एतत् कविः किल—(घ)

"तं विद्यो चतुरकर्म्मज्ञो नक्रुत्यो यम्बपाठक।
मयथार्य्यमिण पूर्वं परिपेत् स्यादृगवरा॥"

(घ) पयामीति। अर्ह्रोकविधिनिदेशाधीनानाम आर्य्याणां मिश्रा प्रधानानाम्, प्रणिपत्य नमस्कृत्य, एवं विज्ञापयामीत्यन्वयः। मृदो मृत्तिकाया शकटिका यत्र तत् अस्मिन्निति मृच्छकटिकम्। एतच्च पश्चात् स्फुटीभविष्यति। नाम तदाख्यया प्रसिद्धम्, प्रकरणं तदाख्यं रूपकविशेषम् प्रयोक्तुम् अभिनेतुम्, व्यवसिता उद्यताः। एतस्य मृच्छकटिकनामकप्रकरणस्य, कविर्वर्णयिता रचयिता—"द्विरदेन्द्रगति" इत्यादिना वक्ष्यमाणेनान्वीयते। आर्य्यमाह प्राह—

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।
तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृत॥"

"प्रधाने शिल्पिने मिश्र" इति धरणिः।

साहित्यदर्पणे "नायिकानायकाख्याना स ञ्ज्ञा प्रकरणादिषु" इत्युक्ते प्रतिकात्वाभिप्रायात् "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्" इत्युक्तानुसारात् अस्य नाटकप्रकृतिकत्वाच्च मृच्छकटिकम् इति गर्भितार्थप्रकाशकमेव नाम निर्द्दिष्टम्। एतच्चास्माभि साहित्यदर्पण-टीकायामप्युक्तम्। प्रकरणलक्षणमाह तत्रैव—

"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।
सापायधर्म्मकामार्थपरो धीरप्रशान्तक॥"

---

(খ) নান্দীপাঠের পর সূত্রধার। (গ) সভ্যগণের কৌতুকনাশক অতিরিক্ত নান্দীপাঠের পরিশ্রম নিরর্থক। (ঘ) আমি সভামহোদয়গণকে প্রণাম করিয়া এইরূপ জানাইতেছি যে, আমরা এই যে মৃচ্ছকটিক-নামে প্রকরণ অভিনয় করিতে প্রবৃত্ত হইয়াছি, ইহার কবি—

द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च।
द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः ॥३॥

अपि च, (ङ)

ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां
ज्ञात्वा शर्वप्रसादाद्व्यपगततिमिरे चक्षुषी चोपलभ्य।
राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा,
लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥४॥

द्विरदेन्द्रेति। द्विरदेन्द्रस्य करिश्रेष्ठस्य गतिरिव गतिर्गमनं यस्य सः करियूथपतिरिव मन्दगमन इत्यर्थः, चकोरः पक्षीव नेत्रे यस्य सः, परिपूर्णः इन्दुश्चन्द्र इव मुखं यस्य सः शोभनो विग्रहः शरीरं यस्य सः द्विजेषु क्षत्रियेषु मुख्यतमः स्वजातिधर्मपरायणत्वात् प्रधानतमः। न नु "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः" इति वचनात् द्विजेषु ब्राह्मणक्षत्रियवैश्येषु मुख्यतमः प्रधानतमो ब्राह्मण एवेति वाच्यम्, समरव्यसनी इति वक्ष्यमाणेन क्षत्रियधर्मेण समरव्यसनेन क्षत्रियत्वस्यैव नियमात्। तथा अगाधमसीमं सत्त्वं बलं यस्य सः अतएव शूद्रं करीन्द्रं कायतीति शूद्रकः पृषोदरादित्वात् साधुः, इति प्रथितः शूद्रक इति नाम्ना प्रसिद्ध इत्यर्थः, कविर्बभूव।

अत्र प्रथमार्द्धं तिसृणामुपमानां मिथोनिरपेक्षतया संसृष्टिः।

औपच्छन्दसिकं नाम वृत्तम्—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्" इति लक्षणात् ॥३॥

(ङ) अपि च अन्यविधगुणभूषितश्चायमित्यर्थः। एवमुत्तरत्रापि।

ऋग्वेदमिति। शूद्रकः ऋग्वेदम् सामवेदम् गणितम् षड्शास्त्रम् कलाः नृत्यगीतादि

শূদ্রকনামে প্রসিদ্ধ ছিলেন। তাঁহার গমন করীন্দ্রের ন্যায়, নয়ন চকোর পক্ষীর তুল্য, মুখ পূর্ণচন্দ্রের সমান এবং শরীর পরমসুন্দর ছিল এবং তিনি ক্ষত্রিয়দিগের মধ্যে প্রধান ও অমিতবলশালী ছিলেন।৩।

अपि च,

समरव्यसनी प्रमादशून्यः ककुदं वेदविदां तपोधनश्च ।
परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥५॥

अतिकालज्ञस्य दशदिनादिरूपेण निजायुष्कालनिरूपणासम्भवात् "लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः" इत्युक्तिः कथमपि न सङ्गच्छते, इति चेदत्र ब्रूमः —

दशदिनाधिकशताब्दमायुर्लब्ध्वा शूद्रके मृते राज्याभिषिक्तात् तदात्मजात् निमित्तधनलाभाकाङ्क्षया सम्पन्नदशातः परं दैववशात् दैन्यमापन्नः कश्चन कविप्रवरः शूद्रककर्तृकत्वप्रकारेण मृच्छकटिकं नामेदं प्रकरणं निर्माय तस्मै शूद्रकपुत्राय समर्पयामास। सम्भवति च धनार्थमपि काव्यनिर्माणम्। तथा चोक्तम्—"काव्यं यशसेऽर्थकृते" इत्यादि। धावको नाम कविर्निजमुद्राविनिमयेन स्वकृतिं रत्नावलीं नाम नाटिकां श्रीहर्षाय राज्ञे ददाविति काव्यप्रकाशटीकाकारैर्गीयते—"श्रीहर्षादेर्धावकादीनामिव" इति। न च रत्नावल्यामपि समुपलभ्यते तद्विनिमयवार्ता, एवमिहापि। अपि च मध्याह्नदिनकरकिरणमध्यवर्तिनो जनस्य घनतमसान्धकारच्छन्नालयावीक्षितेव राजचक्रवर्तिनः शूद्रकस्य नितान्तमेव चारुदत्तदशा कष्टेनैव कल्पनायामप्याविर्भवति; सम्प्रत्याविर्भवति तु स्वयमेवानुभूयमानतया चारुदत्तस्येव सम्पन्नदशातः परं दैन्यमापन्नस्य जनस्य। सुतरामुक्त प्रत्यय एव साधीयानिति सुधियः प्रमाणम्।

केचित्तु जीवन्नेव शूद्रकोऽग्निं प्रविष्ट इति "लब्ध्वा चायुः शताब्दम्" इत्यादिकमाहुः। "प्रविष्टः" इति तु "अनागते" इतिवत् भविष्यति काले क्तप्रत्यय इत्याहुः।

परं न पर्याप्तमिदमिति मन्ये ॥४॥

(৪) আর, শূদ্রক ঋগ্বেদ, সামবেদ, অঙ্কশাস্ত্র, নৃত্যগীতাদি কলা-বিদ্যা, রতিবিষয়িণীবিদ্যা ও হস্তিশাস্ত্র জানিয়া, মহেশ্বরের অনুগ্রহে তিমিররোগবিহীন নয়নযুগল লাভ করিয়া, পুত্রকে রাজা দেখিয়া, বিপুল আয়োজনে অশ্বমেধযাগ করিয়া এবং এক শত বৎসর দশদিন আয়ু পাইয়া, পরে অগ্নিতে প্রবেশ করিয়াছিলেন ॥৪॥

अस्याञ्च तत्कृतौ—(च)

अवन्तिपुर्य्यां द्विजसार्थवाहो युवा दरिद्रः किल चारुदत्तः।
गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना ॥६॥

पुनरपि शूद्रकस्यैव गुणान्तराणि विशिनष्टि समरेति। शूद्रकः किल शूद्रक इति प्रसिद्धः क्षितिपालो राजा समरे व्यसनी अप्रमादी च। एतेन महावीर इति ध्वनितम्। वेदविदां ककुदः प्रधानः, तप एव धनं धनवदादरणीयं यस्य सः परवारणैः शत्रुपक्षीयहस्तिभिः सह बाहुयुद्धे लुब्धः अभिलाषी च बभूव।

एतच्च श्लोकद्वयं भारतीवृत्तेरङ्गम् कविप्रशंसया तत्प्रबन्धस्यापि प्रशस्यतासूचनेन तत्र सभ्यानां कुतूहलोत्पादनात्। यथा साहित्यदर्पणे—"उन्मुखीकारः प्रशंसातः प्ररोचना।"

"प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः।

काल्पभारिणी वृत्तम् ॥५॥

(च) अस्यामिति। शूद्रककृते अस्मिन् प्रकरणे इत्यर्थः।

प्रागेव सभ्यानां सामान्यतो वृत्तान्तावबोधाय नायकं नायिकां वस्तु च सूचयितुमाह अवन्तीति। अवन्तिपुर्य्याम् उज्जयिन्याम् सार्थं सङ्घेन वणिक्सम्प्रदायं वहतीति सार्थवाहो वणिक्, द्विजो ब्राह्मणजातिः सार्थवाहश्चेति द्विजसार्थवाहो वाणिज्यकारी ब्राह्मण इत्यर्थः। दरिद्रः चारु ददातीति चारुदत्तः, "क्तिच्क्तौ च संज्ञायामाशिषि" इति क्तप्रत्ययात्, चारुदत्तो नाम युवा आसीदिति शेषः। यस्य च चारुदत्तस्य वसन्तस्य ऋतोः पुष्पादिभि

---

এবং সেই রাজা শূদ্রক যুদ্ধোৎসাহী, প্রমাদবিহীন, বেদজ্ঞশ্রেষ্ঠ, তপস্বী ও পরপক্ষীয় হস্তীর সঙ্গে বাহুযুদ্ধাভিলাষী ছিলেন ॥৫॥

(চ) তাঁহার কৃত এই মৃচ্ছকটিকপ্রকরণে—

উজ্জয়িনীনগরে চারুদত্তনামে, ব্রাহ্মণজাতীয় অথচ বাণিজ্যব্যবসায়ী এক দরিদ্র যুবক ছিলেন এবং বসন্তকালের শোভার ন্যায় বসন্তসেনানামে একটি বেশ্যা, সেই চারুদত্তের গুণে অনুরক্ত হইয়াছিল ॥৬॥

तयोरिदं सत्सुरतोत्सवाश्रयं नयप्रचारं व्यवहारदुष्टताम् ।
खलस्वभावं भवितव्यतां तथा चकार सर्व्वं किल शूद्रको नृपः ॥७॥

कला शोभा इव वसन्तस्य उन्मादकस्य ऋतोः सेना इव वसन्तसेना तदाख्या, गुणेषु सौन्दर्य्यौदार्य्यादिषु अनुरक्ता, गणिका वेश्या, सा तु गणिकाकन्यात्वात् न पुनर्गणिकाचारित्वा दिति बोध्यम् ।

अत्र श्रौती उपमालङ्कारः ।

उपेन्द्रवज्रा वृत्तम्—"उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ॥६॥

तयोरिति । इदं मृच्छकटिकं नाम प्रकरणम्, तयोर्वसन्तसेनाचारुदत्तयोः सत् साधु, यत् सुरतं रमणं सदेव उत्सवः आमोदव्यापारः स एव आश्रयो विषयो यस्य तत् । अत्र च शूद्रको नृपः, नयस्य नीतेः प्रचारं परस्मात् प्रायेण सर्व्वत्रैव प्रकाशम्, व्यवहारस्य न्यायालये चारुदत्तशकारयोर्विवादविचारस्य दुष्टतां शकारस्याभिर्योगेनैव निर्वाहितत्वात् असमीचीनताम्, खलानां शकारादीनां स्वभावं चरित्रम्, तथा भवितव्यताम् आर्य्यक राजत्वचारुदत्तमुक्तिप्रभृतिघटितां नियतिम्, एतत् सर्व्वं चकार रचितवान् । अतोऽन्येन कविना न किञ्चित् कृतमित्यर्थः ।

अत्र प्रथमचरणात् परम् 'अत्र' इत्यनभिधानात् न्यूनपदतादोषः, तु 'इहानयोः सत्-सुरतोत्सवाश्रयं' इति प्रथमचरणपाठेन समाधेयः । "द्विजानामसवर्णासु कन्यासूपयमस्तथा" इत्यादिकमुद्वाहतत्त्वधृतमादित्यपुराणादि वचनजातमनार्षमेव किन्तु समाजगतिदर्शिना केनचित् प्रक्षिप्तम् । आर्षत्वेऽपि शूद्रकसमये यावत् सामाजिकैर्नत्र परिगृहीतम् । अत एव नाम्बिकाप्रभिनेऽपि "दैष्या वर्णावरो भार्या" इति दृश्यते । इतश्च वसन्तसेनाया असवर्णत्वेऽपि ब्राह्मणस्य चारुदत्तस्य सम्परिणयो न दोषाय । सुतरां गान्धर्वविवाह-प्रयोजकमिव तयोर्भाविविवाहप्रयोजकं सुरतं निर्दोषं परस्परगुणानुरागप्रयुक्तत्वात् साध्वेवेति 'सत्सुरतोत्सवाश्रयम्' इत्युक्तमिति दिक् ।

वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥७॥

রাজা শূদ্রক শ্রেষ্ঠ চারুদত্ত ও বসন্তসেনার নির্দোষ প্রণয়োৎসব,

परिक्रम्यावलोक्य च । अये ! शून्येयमस्मत्सङ्गीतशाला । क्व नु गताः कुशीलवा भविष्यन्ति ? । विचिन्त्य । आं ज्ञातम् । (क)

शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् ।
मूर्खस्य दिशः शून्याः, सर्वं शून्यं दरिद्रस्य ॥८॥

(क) प्रयेति । परिक्रम्य कुशीलवानामन्वेषणाय कियन्तं पादक्षेपं कृत्वा। अये इति विषादसूचकमव्ययम् । कुत्सितं शीलमेषामस्तीति कुशीलवा नटाः, केशादित्वात् वप्रत्ययः । आमिति स्मरणार्थमव्ययम् ।

"अये क्रोधे विषादे च" इत्यादिर्मेदिनी । "भरता इत्यपि नटाश्चारणास्तु कुशीलवाः" इत्यमरः । "आं स्मृतौ वाक्यधारणे" इति विश्वः ।

शून्यमिति । अपुत्रस्य अजातपुत्रस्य मृतपुत्रस्य वा जनस्य गृहं शून्यं सर्वपदार्थरहितमिव प्रतिभातीत्यर्थः चित्तप्रफुल्लताया अभावादिति भावः । एवं सर्वत्र । तथा तदेव गृहम्, चिरशून्यं यावज्जीवमेव शून्यम्, यस्य जनस्य सन् मित्रं साधुः सुहृत् नास्ति तथा च अविवाहितावस्थायामपुत्रस्यापि गृहं जनकजनन्यादिभिः पूर्णमेव प्रतिभाति तैरेव मनःस्फूर्तिसत्त्वात्, किन्तु यस्य सन्मित्रं नास्ति तस्य पुत्रादिपरिपूर्णमपि गृहं चिरकालमेव शून्यमिव प्रतिभाति मनःस्फूर्तेरभावादिति भावः । मूर्खस्य दिशः स्वभवनं विना अन्या दिशः शून्याः आत्मनः सर्वविषयेऽयोग्यताया अभावेन सर्वत्रैवावलम्बनाभावादित्याशयः । दरिद्रस्य तु सर्वमेव गृहं दिगादिकञ्च शून्यम्, निर्धनतया सर्वत्रैव मनःस्फूर्तेरभावादित्यभिप्रायः । एवञ्च ममापि निर्धनतया वेतनलाभाभावात् कुशीलवाः स्वेच्छाचारिणः सन्तः काव्यकाल एव यथेष्टस्थानं गता इति शोकाशयः ।

अत्र चतुर्ष्वेव चरणेषु चतस्रः प्रतीयमानोत्प्रेक्षा, तथा "आं ज्ञातम्" इत्यनेन दरिद्रप्रस्तुतः अपुत्रादयश्चाप्रस्तुता इत्येतेषां शून्यतारूपैकगुणसम्बन्धात् दीपकालङ्कारः । तथा च

---

নীতির প্রচার, ব্যবহারের ( মোকদ্দমার ) দোষ, খলের চরিত্র এবং দৈব—এই সমস্তই নিবদ্ধ করিয়া গিয়াছেন ॥৭॥

कृतञ्च सङ्गीतकं मया। अनेन चिरसङ्गीतोपासनेन ग्रीष्मसमये प्रचण्डदिनकरकिरणोच्छुष्कपुष्करवीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते (ज)। तद्यावद्गृहिणीमाहूय

---

"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते" इति साहित्यदर्पणलक्षणे अप्रस्तुतप्रस्तुतयोः, इति मत्वर्थगतैकत्वेन विवक्षितम्, तथा तत्र धर्मान्तर्गतगुणस्तु द्रव्यभिन्नो इतिमस्माभी याथ इत्युक्तमस्माभिस्तत्रत्यटीकायाम्। एवमपुत्राद्यपेक्षया दरिद्रस्य सर्वशून्यत्वेन स्वप्नत्वात् व्यतिरेकाय समीक्षा परस्परनिरपेक्षतया संसृष्टिः।

किन्तु एकस्यैव शून्यशब्दस्य पुनः पुनरुपादानेऽपि नागरीकृतत्वदोषः, एकविधशब्दप्रयोगस्यैवात्र वैचित्र्याधायकतया चमत्कारजनकत्वाभावेन सहृदयानामुद्वेगजनकत्वात्।

आर्या जातिः—"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या॥"

इति लक्षणात् ॥८॥

(ज) कृतञ्चेति। चिरं दीर्घकालं सङ्गीतस्य उपासनेन अभ्यासेन तत्परिश्रमेणेत्यर्थः। प्रचण्डाः प्रखरा ये दिनकरकिरणास्तैरुच्छुष्कं निरालम्बं यत् पुष्करं पद्मं तस्य बीजमिव। प्रचलिते घूर्णिते तारके तारादृये ययोस्ते। अक्षिणी नयनद्वयम्। खटखटायेते खटखटं कुरुतः। उपमालङ्कारः।

---

(ছ) (ইতস্ততঃ কয়েকবার পদক্ষেপপূর্ব্বক দর্শন করিয়া)। হায়! আমাদের এই সঙ্গীতশালা যে শূন্য দেখিতেছি। (তা হ'লে) নটগণ কোথায় গেল? (চিন্তা করিয়া) ও! বুঝিতে পারিয়াছি।

অপুত্রক ব্যক্তির গৃহ শূন্য, যাহার ভাল মিত্র নাই তাহার গৃহ চিরকালই শূন্য। মূর্খের সকল দিকই শূন্য, আর দরিদ্রের সকলই শূন্য ॥৮॥

(জ) আমি সঙ্গীত করিয়াছি। দীর্ঘকাল এই সঙ্গীত করায়, গ্রীষ্মকালে প্রচণ্ড সূর্য্যের কিরণে শুষ্ক পদ্মের বীজের ন্যায় আমার নয়নযুগল ক্ষুধায় খট্ খট্ করিতেছে এবং তারা দুইটী ঘুরিতেছে।

पृच्छामि, अस्ति किञ्चित् प्रातराशो नवेति (झ)। एषोऽस्मि भोः! कार्य्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्तः (ञ)।

अविद अविद भो! चिरसंगीदोवासणेण सुक्खपोक्खरणालाइं विअ मे बुभुक्खाए मिलाणाइं अङ्गाइं, ता जाव गेहं गदुअ जाणामि, अत्थि किं पि कुडुम्बिणीए उववादिदं ण व त्ति (ट)। परिक्रम्याव-

(ट) अविद अविद भोः! चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानानि अङ्गानि। तद्यावत् गेहं गत्वा जानामि अस्ति किमपि कुटुम्बिन्या उपपादित

---

(झ) तदिति। प्रातराश इति प्रातराशः प्रातःकालीनस्य आशः, पूर्वाह्णकालादिसंध्याया भोजनेनैव निर्व्वाहितत्वात् इदानीं च रात्रिशयनादिकाले रात्रिपाकसम्पन्नताया असम्भवात् प्रातःकाले यत्किञ्चित्कालिकं भुज्यते तदस्ति न वेत्यर्थः।

(ञ) एष इति। भो इति सभ्यानां सम्बोधनम्। कार्य्यवशात् स्त्रिया सहालाप-रूपप्रयोजनवशात्। स प्राकृतभाषाव्यवहारी आ यदि सर्व्वं नावबुध्येतेति भावः। प्रयोग-वशात् "कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः" इति दर्पणकारादिभिरालङ्कारिकैः प्रयो-जनविशेषे सति उत्तमादीनामपि पात्राणां भाषान्तरव्यवहारनियमवशाच्चेत्यर्थः।

(ट) अविदेति। अविदेति प्राकृतादिभाषायां निर्व्वेदविस्मयसूचकमव्ययम्। सन्तापि-तार्थं विकलिता। शुष्कं यत् पुष्करं पद्मं तस्य नालानि दण्डानि। बुभुक्षया क्षुधया। कुटु-म्बिन्या भार्य्यया।

"भार्य्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी" इत्यमरः।

---

(ঝ) অতএব গৃহিণীকে ডাকিয়া জিজ্ঞাসা করি—"প্রাতঃকালের খাদ্য কিছু আছে কিনা"। (ঞ) সভামহাশয়গণ! প্রয়োজন ও নিয়মবশতঃ এই আমি প্রাকৃতভাষাভাষী হইলাম।

(ট) হায়! হায়! দীর্ঘকাল সঙ্গীত করায় আমার অঙ্গসমূহ শুষ্ক পদ্মের নালের ন্যায় ক্ষুধায় ম্লান হইয়া গিয়াছে। অতএব ঘরে যাইয়া জানি,

लोक्य च। एदं तं अम्हाणं गेहं, ता पविसामि। प्रविश्यावलोक्य च। हीमाणहे! किं णु क्खु अम्हाणं गेहे अवरं विअ संविहाणअं वट्टदि। आआमितण्डुलोदअप्पवाहा रच्छा, लोह-कड़ाह परिवत्तण-कसणसारो किदविसेसआ विअ जुअदी अहिअदरं सोहदि भूमी। सिणिद्धेण गन्धेण उद्दीवन्ती विअ अहिअं बाधेदि मं बुभुक्खा ता किं पुव्वविहिदं णिहाणं उववण्णं भवे? आदु अहं ज्जेव बुभुक्खादो ओदणमअं जीअलोअं पेक्खामि (ठ)। णत्थि

न वेति। (ठ) इदं तदस्माकं गृहम् तत् प्रविशामि। आश्चर्यम्। किं नु खलु अस्माकं गृहे अपरमिव संविधानकं वर्त्तते। आयामिततण्डुलोदकप्रवाहा रथ्या, लौहकटाह परिवर्त्तन कृष्णसारा कृतविशेषका इव युवती अधिकतरं शोभते भूमिः। स्निग्धेन गन्धेन उद्दीप्यमानेव अधिकं बाधते मां बुभुक्षा। तत् किं पूर्वविहितं निधानम् उपपन्नं

(ठ) इदमिति। संविधानकम् आयोजनम्। अस्मार्ते कामयते। आयामितं सुदीर्घां दूरगामिनं तण्डुलोदकानां तण्डुलप्रक्षालनजलानां प्रवाहा यस्यां सा लौह कटाहानां परिवर्त्तनेन भुक्तोत्थं आनीय स्थापनेन कृष्णः कृष्णवर्णः सारः प्रधानांशो यस्याः सा अतएव कृतो विशेषको मसीतिलको यस्याः सा तादृशी युवतीव। अतीपमालङ्कारः। उद्दीप्यमानेव वर्द्धमानेव। पूर्वेण पूर्ववर्त्तिना केनचित् जनेन विहितं कृतं भूगर्भे प्रोथितमित्यर्थः निधानं निधिं धनभाण्डमिति यावत् उपपन्नं लब्धम्। निधिलाभेऽपि आत्मीयभोजनादिभिकल्पमेव क्रियते लोकैरिति हि रीतिः। ओदनमयम् अन्नमयम्।

যে গিন্নী কিছু তৈয়ারী করিয়া রাখিয়াছে কি না। (ঠ) (ইতস্ততঃ কয়েক বার পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই আমাদের সেই ঘর, অতএব প্রবেশ করি। (প্রবেশপূর্ব্বক দর্শন করিয়া) কি আশ্চর্য্য। আমাদের বাড়ীতে অন্য কোন সমারোহ উপস্থিত হইয়াছে নাকি? চাউল ধোয়া জলের ধারা, রাস্তার বহুদূরে চলিয়াছে লোহার কড়ার কালী লাগায়

किल पादरासो अम्हाणं गेहे । पाणच्चअं बाधेदि मं बुभुक्खा । इध सव्वं णवं विअ संविहाणअं वट्टति । एक्का वण्णअं पीसेदि, अवरा सुमणाइं गुम्फेदि (ड)। विचिन्त्य। किं णु एदं। भोदु, कुडुम्बिणीं सद्दाविअ परमत्थं जाणिस्सं। नेपथ्याभिमुखमवलोक्य। अज्जे ! इदो दाव। (ढ)

भवेत् ? अथवा आत्मनैव बुभुक्षया ओदनमयं जीवलोकं पश्यामि। (ड) नास्ति किल प्रातराशोऽस्माकं गृहे। प्राणात्ययं बाधते मां बुभुक्षा। इह सर्वं नवमिव संविधानकं वर्त्तते। एका वर्णकं पिनष्टि, अपरा सुमनसः गुम्फति। (ढ) किन्नु इदम्। भवतु, कुटुम्बिनीं शब्दायित्वा परमार्थं ज्ञास्यामि। आर्ये ! इतस्तावत् !

---

(ड) नास्तीति। प्राणानामत्ययो विनाशो यस्मिन् कर्मणि तद्यथा तथा। संविधानकम् आयोजनम्। एका काचित् स्त्री वर्णकं हरिद्रादिप्रसाधनद्रव्यम्, पिनष्टि चूर्णयति। सुमनसः कुसुमानि गुम्फति ग्रथ्नाति।

(ढ) किन्नु इति। कुटुम्बिनीं भार्याम्, शब्दायित्वा आहूय परमार्थं यथार्थवृत्तान्तम्। "वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम्" इति साहित्यदर्पणात् आर्ये इति नट्याः सम्बोधनम्। इत आगम्यतामिति शेषः।

---

ভূমিখানি কুঙ্কুমতিলকধারী যুবতীর ন্যায় অধিক শোভা পাইতেছে, সুগা-ন্ন স্নিগ্ধগন্ধে উদ্দীপিত হইয়া আমাকে অধিক পীড়া দিতেছে। তবে কি পূর্ব্ব কোন ব্যক্তির রক্ষিত ধনভাণ্ডার পাওয়া গিয়াছে? না, আমিই ক্ষুধার জ্বালায় জগৎটাকে অন্নময় দেখিতেছি। (ড) আমাদের ঘরে প্রাতঃকালের খাদ্য কিছু নাই। এদিকে ক্ষুধা আমাকে এত পীড়া দিতেছে যে, প্রাণ যেন বাহির হইয়া যাইতেছে। এখানে সমস্তই যেন নূতন আয়োজন হইয়াছে। একটী স্ত্রীলোক হরিদ্রা চূর্ণ করিতেছে, অপর একটী

नटी । प्रविश्य । अज्ज ! इअह्मि । (ण)

सूत्र । अज्जे ! साअदं दे ? । (त)

नटी । आणवेदु अज्जो, को णिओओ अणुचिट्ठीअदुत्ति । (थ)

सूत्र । अज्जे ! । चिरसङ्गीतोपासनेन इत्यादि पठित्वा । अत्थि किं पि अम्हाणं गेहे असिदव्वं ण वेत्ति । (द)

(ण) आर्य्ये ! इयमस्मि । (त) आर्य्ये । स्वागतं ते ? ।

(थ) आज्ञापयतु आर्य्य, को नियोग अनुष्ठीयतामिति ।

(द) आर्य्ये ! अस्ति किमपि अस्माकं गेहे अशितव्यं न वेति ।

(ण) नटीति । इयमहम् अस्मि आगतास्मीत्यर्थः ।

(त) सूत्रेति । स्वागतं सुखेनागमनं किमिति काकुः । आदरप्रदर्शनायोक्तिरियम् ।

(थ) नटीति । नियोगो भवत आदेशः अनुष्ठीयतां सम्पाद्यतां मयेति शेषः इति आज्ञापयतु इत्यन्वयः ।

(द) सूत्रेति । अशितव्यं भोक्तव्यम् ।

ফুলের মালা গাঁথিতেছে। (ঢ) (চিন্তা করিয়া) এ ব্যাপারটা কি ? হউক, গিন্নীকে ডাকিয়া যথার্থ বৃত্তান্ত জানিব (নেপথ্যের দিকে দৃষ্টিপাত করিয়া) আর্য্যে। এদিকে [আইস]।

[ণ] নটী। [প্রবেশ করিয়া] আর্য্য। এই আমি [আসিয়াছি]।

[ত] সূত্র। আর্য্যে। তোমার শুভাগমন ত ?।

[থ] নটী। আপনি আদেশ করুন, আমি আপনার কোন্ নিয়োগ অনুষ্ঠান করিব।

[দ] সূত্র। আর্য্যে। [দীর্ঘকাল সঙ্গীত করায় ইত্যাদি বলিয়া] আমাদের ঘরে কিছু খাদ্য আছে কিনা ?।

नटी। अज्ज! सव्वं अत्थि। (ध)

सूत्र। किं किं अत्थि?। (न)

नटी। तं जधा गुडोदणं, घिअं, दहीं, तण्डुलाइं, अज्जेण अत्तव्वं रसाअणं सव्वं अत्थि त्ति। एव्वं दे देवा आसासेदु। (प)

सूत्र। किं अम्हाणं गेहे सव्वं अत्थि, आदु परिहससि?। (फ)

(ध) आर्य! सर्वमस्ति। (न) किं किमस्ति?।

(प) तद्यथा—गुडौदनम्, घृतम्, दधि, तण्डुलाः, आर्येण अत्तव्यं रसायनम्, सर्वमस्तीति। एवं ते देवा आशासताम्।

(फ) किमस्माकं गृहे सर्वमस्ति? अथवा परिहससि?।

---

(प) नटीति। गुडेन ओदनमनयोरिति गुडौदनम्। "आचमनविरोधकानाम्" इति समाहारद्वन्द्वे नपुंसकत्वम्। अथवा गुडयुक्तमोदनं गुडौदनम्, अत्तव्यं भोक्तव्यम्, रसानां स्वादुरसानाम्, अयनम् आश्रयीभूतं पायसपिष्टकादि। इत्यादिकं सर्वमस्तीत्यर्थः। ते तव सम्बन्धे देवा एवम् एतेषामुक्तानां द्रव्याणामस्तित्वम्, आशासताम् आशीर्वादविषयी-कुर्वन्ताम्। एवमित्यादिकम् अमङ्गलवदुक्तमिति बोध्यम्। अन्यथा सूत्रधारस्य कालिक-प्रत्ययं स्यात्।

---

[ধ] আর্য্য! সমস্তই আছে।

[ন] সূত্র। কি কি আছে?।

[প] নটী। তাহা শুনুন—গুড়, ভাত, ঘী, দই, চাউল এবং আপনার যাহা যাহা খাদ্য, সেই সব পীঠে পায়সপ্রভৃতি আছে। দেবতারা আপনাকে এইরূপ আশীর্বাদ করুন।

(ফ) সূত্রধার। কি, আমাদের ঘরে সব আছে? না পরিহাস করিতেছ?।

नटी। स्वगतम्। परिहसिस्सं दाव। प्रकाशम्। अज्ज! अत्थि आवणे। (ब)

सूत्र। सक्रोधम्। आः अणज्जे! एव्वं दे आसा छिज्जिस्सदि अभावं अ गमिस्ससि, जं दाणीं अहं वरण्डलम्बुओ विअ दूरं उक्खिविअ पाडिदो। (भ)

नटी। मरिसेदु मरिसेदु अज्जो। परिहासो क्खु मए किदो। (म)

(ब) परिहसिष्यामि तावत्। आर्य्य! अस्ति आपणे।

(भ) आः अनार्य्ये! एवं ते आशा छेत्स्यति, अभावञ्च गमिष्यसि, यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः।

(म) मृष्यतु मृष्यतु आर्य्यः। परिहासः खलु मया कृतः।

---

(ब) नटीति। आपणे पण्यविक्रयस्थाने। न तु स्वगृहे इत्याशयः।

(भ) सूत्रेति। एवमित्थम्। छेत्स्यति छिन्ना भग्ना भविष्यति। अकर्मकत्वविवक्षा। अभावम् एव विधाता द्रव्याणामिति शेषः, गमिष्यसि प्राप्स्यसि। वरण्डलम्बुको गुटिका। तथा च यथा क्रीडार्थिभिः गुटिका उत्थाप्य पात्यते, तथाहि मामपि दत्त्वा पुनरहं निराकृत इति भावः। पृथ्वीधरस्तु वरण्डो दीर्घकाष्ठं तस्य लम्बुकः लम्बमान-निबद्धो घटिकाम्बुक इत्याह। स हि द्रोण्या पानीयोद्धारे दूरमुत्थाप्य अधः पात्यते इत्याह।

---

(ব) নটী। (স্বগত) পরিহাস করিব। (প্রকাশ্যে) আর্য্য। দোকানে আছে।

(ভ) সূত্রধার। (ক্রোধের সহিত) আঃ অনার্য্যে! তোর আশাও এইভাবে ছিন্ন হইবে এবং তুইও এই সব জিনিষের অভাব অনুভব করিবি। যে হেতু, তুই এখন আমাকে দোলফুলখেলার গুটীর মত দূরে উঠাইয়া ফেলিয়া দিয়াছিস্।

सूत्र। ता किं उण इदं णवं विअ संविहाणअं वट्टदि, एक्का वण्णअं पीसेदि, अवरा सुमणाओ गुम्फेदि, इअं अ पञ्चवण्णकुसुमोवहारसोहिदा भूमी। (य)

नटी। अज्ज! उववासो गहिदो। (र)

सूत्र। किंणामधेओ अअं उववासो?। (ल)

नटी। अहिरूववदी णाम। (व)

(य) तत् किं पुनरिदं नवमिव संविधानकं वर्त्तते? एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति, इयञ्च पञ्चवर्णकुसुमोपहारशोभिता भूमिः।

(र) आर्य्य! उपवासो गृहीतः।

(ल) किं नामधेयोऽयमुपवासः।

---

(म) नटीति। मृष्यतु मृष्यताम्।

(य) नवेति। पञ्चवर्णानां रक्त-नील-पीत कृष्ण शुभ्राणां कुसुमानाम्, उपहारेण निक्षेपेण शोभिता।

(र) नटीति। उपवास उपवासात्मकं व्रतम्।

(व) नटीति। अभिरूपः सुन्दरः पतिर्यस्मात् सः। अनेनोपवासेन पतिः सुन्दरो भवतीत्यर्थः। एतेन सूत्रधारस्य कुरूपत्वं सूचितम्।

---

(ম) নটী। আর্য্য! ক্ষমা করুন ক্ষমা করুন। আমি পরিহাসই করিয়াছি।

(য) সূত্রধার। তবে এই সব যেন নূতন আয়োজন হইয়াছে কেন? একজন হরিদ্রা চূর্ণ করিতেছে; অপরে ফুলের মালা গাঁথিতেছে এবং পাঁচ রঙের ফুল ছড়াইয়া দেওয়ায় এই জায়গাখানি বেশ দেখা যাইতেছে।

(র) নটী। আর্য্য! আমি একটি উপবাস আরম্ভ করিয়াছি।

(ল) সূত্রধার। এই উপবাসের নাম কি?।

सूत्र। अज्जे! इहलोइओ, आदु पारलोइओ?। (श)

नटी। अज्ज! पारलोइओ। (ष)

सूत्र। सरोषम्! पेक्खन्तु पेक्खन्तु अज्जमिस्सा, ममकेरकेण भत्तपरिव्वएण (१) पारलोइओ भत्ता अण्णेसीअदि। (स)

(व) अभिरूपपतिनाम।

(श) आर्य्ये! इहलौकिक अथवा पारलौकिक?।

(ष) आर्य्य! पारलौकिक।

(स) प्रेक्षन्तां प्रेक्षन्ताम् आर्य्यमिश्राः मदीयेन भक्तपरिव्ययेन पारलौकिको भर्त्ता अन्विष्यते।

(श) सूत्रे ति। इहलोके भव इहलौकिक। "क्वचिदुत्तरपदस्य" इति परपदे वृद्धि। ऐहिक एव पत्यौ अभिरूपतासम्पादक ग्रन्थर्थ। परलोके भव इति पारलौकिक। "क्वचिदुभयपदस्य" इत्युभयपद एव वृद्धि। जन्मान्तरीयपत्यन्तर अभिरूपताप्रयोजक इति तात्पर्य्यम्।

(स) सूत्र ति। भक्तपरिव्ययेन अन्नव्ययेन। भक्तानां मदीयतया तदुपम्यापि मदीयत्वमेवेति तात्पर्याधिकारेणोपपत्ति। भर्त्ता अभिरूपपतिरिति यावत्। यदीय द्रव्य तदर्थं वीपकारकरण न्याय्यमिति मदीयभक्तव्ययेन जन्मान्तरीयभर्त्तुरुपकार चिकीर्षा नितरामेवानार्य्ये ति भाव।

(व) নটী। ইহার নাম অভিরূপপতি।

[শ] সূত্রধার। আর্য্যে! ইহার ফল কি ইহলোকেই হইবে? না পরলোকে?।

[ষ] নটী। আর্য্য! পরলোকে হইবে।

[স] সূত্রধার। [ ক্রোধের সহিত ] মহাশয়গণ। দেখুন দেখুন। আমার অন্ন ব্যয় করিয়া পরলোকের [সুন্দর] স্বামী খুঁজিতেছে।

(१) मदएण भत्तपरिव्वएण।

नटी। अज्ज! पसीद पसीद। तुमं ज्जेव मम जम्मन्तरे वि भत्ता भविस्ससि त्ति। (१) (छ)

सूत्र। अअं उववासो केण दे उवदिट्ठो ?। (२) (च)

नटी। अज्जस्स ज्जेव पिअवअस्सेण चुण्णवुड्ढेण। (३) (क)

सूत्र। सक्रोधम्। आः दासीए पुत्ता चुण्णवुड्ढा! कदा णु क्खु तुमं कुविदेण रस्सा पालएण णवबहूकेसकलावं विअ सुअन्ध (४) कप्पिज्जन्तं पेक्खिस्सम्। (ख)

(छ) आर्य्य! प्रसीद प्रसीद। त्वमेव मम जन्मान्तरेऽपि भर्त्ता भविष्यसीति।

(च) अयमुपवासः केन ते उपदिष्टः ?।

(क) आर्य्यस्यैव प्रियवयस्येन चूर्णवृद्धेन।

(छ) नटीति। त्वमेवेति। "पूर्वजन्मनि या विद्या पूर्वजन्मनि यद्धनम्। पूर्वजन्मनि या नारी अग्रे धावति धावति॥" इति वचनादित्याशयः। इति व्रतं तवैवाभिरूपता सम्पादकत्वान्मम अन्याय्यावस्थामिति भावः।

(क) नटीति। आर्य्यस्यैव न पुनर्मम प्रियवयस्येन न तु अन्येन, अतो न प्रतारणाय सम्भावनेति भावः। चूर्णेन इष्टकादिचूर्णकरणात् चूर्णविक्रयेण वा वृद्धो वृद्धिमुपगतः प्राप्त इति यथाकथञ्चित् व्युत्पत्तिः।

[ছ] নটী। আর্য্য! প্রসন্ন হউন প্রসন্ন হউন। পরলোকেও আপনিই আমার স্বামী হইবেন।

[চ] সূত্রধার। তোমাকে এই উপবাস করিতে কে উপদেশ দিয়াছে ?।

[ক] নটী। আপনারই প্রিয় সখা চূর্ণবৃদ্ধ।

(१) भविस्ससि त्ति उववसिदह्मि। (२) अअ अअ उववासो केण उवदिट्ठो। (३) चुण्णवुड्ढेण। (४) केसहत्थं विअ सुअन्धं।

নটী। পসীদদু অজ্জো। অজ্জস্স জ্জে ব পারলোইঅো অঅ উববাসো (১)। ইতি পাদয়ো পততি। (গ)

সূত্র। অজ্জে। উট্ঠেহি, কধেহি এত্থ উববাসে কেণ কজ্জং ?। (২) (ঘ)

(খ) আ দাস্যাঃ পুত্র! চূর্ণবৃদ্ধ! কদা নু খলু ত্বাং কুপিতেন রাজ্ঞা পালকেন নববধূকেশকলাপমিব সুগন্ধং ছেদ্যমানং প্রেক্ষিষ্যে।

(গ) প্রসীদতু আর্য্যঃ। আর্য্যস্যৈব পারলৌকিকোঽয়মুপবাসঃ।

(ঘ) আর্য্যে! উত্তিষ্ঠ কথয় অত্র উপবাসে কেন কার্য্যম্ ?।

---

(খ) মূঢ়েতি। পালকেন তদাখ্যেন। দৃষ্টান্তমাহ—নববধূকেশকলাপমিব ইতি। তথা চাহ কালমঞ্জরী দুর্গসিংহঃ—"মুগ্ধযিতার শ্রাবিশ্রথনা নববধূটীম" ইতি। পুষ্পমাল্যেন সুরভিতৈলেন চ শোভনো গন্ধো যস্য তম্।

(গ) নটীতি। আর্য্যস্যৈব ভবত এব পারলৌকিকঃ—জন্মান্তরে অভিরূপতা রূপ ফলসম্পাদকঃ।

(ঘ) সূত্রেতি। কেন অনেন কার্য্য প্রয়োজনম্।

---

[খ] সূত্রধার। (ক্রোধের সহিত) আ দাসীর পো চূর্ণবৃদ্ধ। রাজা পালক ক্রুদ্ধ হইয়া নব বধূর কেশকলাপের ন্যায় কখন তোকে সুগন্ধ অবস্থায় কাটিয়া ফেলিবেন, তাহা আমি দেখিব ?।

(গ) নটী। আপনি প্রসন্ন হউন। আপনারই পরলোকীয় ফলজনক এই উপবাস। (এই বলিয়া পায়ের উপর পড়িল।)

(ঘ) সূত্রধার। আর্য্যে। উঠ, বল—এই উপবাসে কাহাদ্বারা প্রয়োজন সিদ্ধ হইবে ?।

---

(১) পসীদদু পসীদদু অজ্জো। ণ অজ্জস্স জ্জেব পারলোইঅো অঅং উববাসো পডিবিহীঅদি। (২) উট্ঠেহি উট্ঠেহি কধেহি কধেহি ইধ।

नटी। अम्हारिसजणजोग्गेण बम्हणेण उवणिमन्तिदेण। (ङ)

सूत्र। तेण हि गच्छदु अज्जा। अहं पि अम्हारिसजण-जोग्गं बम्हणं उवणिमन्तेमि। (च)

नटी। जं अज्जो आणवेदि। इति निष्क्रान्ता। (छ)

सूत्र। परिक्रम्य। हीमाणहे। ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अम्हारिसजणजोग्गो बम्हणो अण्णेसिदव्वो।

(ङ) अस्मादृग्जनयोग्येन ब्राह्मणेन उपनिमन्त्रितेन।

(च) तेन हि गच्छतु आर्य्या। अहमपि अस्मादृग्जनयोग्यं ब्राह्मणमुपनिमन्त्रयामि।

(छ) यदार्य्य आज्ञापयति।

---

(ङ) नटीति। अस्मादृग्जनस्य दरिद्रलोकस्य योग्येन दरिद्रतया उपयुक्तेन उपनिमन्त्रितेन भोजनार्थमाहूतेन कार्य्यमिति पूर्व्वान्वयः। उत्कृष्टभोजिनो धनिनो दरिद्रगृहे निकृष्टभोजनं दुःखकरमेवेति तत्र पुण्यर्थमपीत्येन पापमेव स्यादिति न तत्र प्रयोजनमिति भावः।

(च) सूत्रेति। अस्मादृग्जनयोग्यं दरिद्रमित्यर्थः। स्वगृह एव व्रतानुष्ठाने तत्र च ब्राह्मणभोजनावश्यकत्वे तत्पूर्व्वमेवात्मनो भोजनमन्याय्यम्। अभुक्ता स्थितौ च दारुणक्षुधायातना इत्यत आत्मनोऽर्थं त्वरयन्त्या आत्मन एव ब्राह्मणनिमन्त्रणायेङ्‌ इति बोध्यम्।

(ज) सूत्रेति। एवम् इत्यम्। मैत्रेयो नाम। अतिशु भोक्तुम् अयथो अथ

---

(ঙ) নটী। আমাদের মত লোকের পক্ষে উপযুক্ত নিমন্ত্রিত ব্রাহ্মণদ্বারা।

(চ) সূত্রধার। তাহা হইলে তুমি যাও, আমিও আমাদের মত লোকের উপযুক্ত ব্রাহ্মণ নিমন্ত্রণ করি।

(ছ) নটী। আর্য্য যাহা আদেশ করেন। (এই বলিয়া নিষ্ক্রান্ত হইল।)

विलोक्य। एसो चारुदत्तस्स मित्तं मित्तेओ इदो ज्जेव आअच्छदि भोदु, पुच्छिस्सं दाव। अज्ज मित्तेअ! अम्हाणं गेहे असिदुं अग्गणी भोदु अज्जो। (ञ)

नेपथ्ये। भोः! अण्णं बम्हणं उवणिमन्तेदु भवम्! वावुदो दाणिं अहम्। (झ)

(ञ) आश्चर्य्यम्? सत् कथं मया एवं सुसमृद्धायामुज्जयिन्याम् अस्मादृशजनयोग्यो ब्राह्मणः अन्वेष्टव्यः। एष चारुदत्तस्य मित्रं मैत्रेय इत एवागच्छति। भवतु प्रक्ष्यामि तावत्। आर्य्य! मैत्रेय! अस्माकं गेहे अशितुमग्रणीर्भवतु आर्य्य॥

(झ) भोः! अन्यं ब्राह्मणमुपनिमन्त्रयतु भवान्! व्यापृत इदानीमहम्।

---

वर्त्ती आर्य्यो भवान्। एतेनान्येऽपि ब्राह्मणा निमन्त्रणीया इति सूचितम्। शूद्रेषु "दास गोपालकुलमित्रार्द्धसीरिणाम्। भोज्यान्नता स्मृतास्य" इत्यादौ शास्त्रस्थसूत्रकारान्नग्रहणीय-निषेधस्य तदानीमपि साधारणसामाजिकव्यवहारकौशलात् सूत्रधारस्य मैत्रेयकुलमित्रत्वाच्च उत्तमब्राह्मण एव चारुदत्तमित्रं मैत्रेयं सूत्रधारेण भोजने निर्वाचनमासीत् इति बोध्यम्।

(झ) नेपथ्य इति। नेपथ्यं वेशरचनास्थानम्। व्यापृत कार्य्यान्तरे विशेषेणा-सक्तः। अतएव भोजनार्थं न विलम्बितुमर्हामीति भावः। मैत्रेयकथितमेतत्।

---

(ঞ) সূত্রধার। (পদক্ষেপ করিয়া) কি আশ্চর্য্য! হা! আমি এইরূপ সুসমৃদ্ধ উজ্জয়িনীনগরে কি করিয়া, আমাদের মত লোকের উপযুক্ত ব্রাহ্মণ অন্বেষণ করিব। (দেখিয়া) এই যে চারুদত্তের মিত্র মৈত্রেয় এদিকেই আসিতেছেন। হউক, জিজ্ঞাসা করিব। আর্য্য! মৈত্রেয়! আমাদের গৃহে ভোজন করিবার নিমিত্ত আপনি অগ্রগামী হউন।

(ঝ) নেপথ্যে। মহাশয়! আপনি অন্য ব্রাহ্মণকে নিমন্ত্রণ করুন। আমি এখন কার্য্যান্তরে ব্যাপৃত রহিয়াছি।

सूत्र। अज्ज! सम्पण्णं भोअणं णीमवत्तंअ। अविग्घ-दक्खिणा कावि दे भविस्सदि। (ञ)

पुनर्नेपथ्ये। भोः जं दाणिं पढमं ज्जेव पच्चादिट्ठोसि, ता को दाणिं दे णिब्बन्धो पदे पदे मं अणुबन्धेदुम्। (१) (ट)

सूत्र। पच्चादिट्ठोम्हि एदिणा। भोदु, अण्णं बम्हणं उवणिमन्तेमि। (ठ)। इति निष्क्रान्तः।

(ञ) आर्य! सम्पन्नं भोजनं निरुपद्रवम्। अपि च दक्षिणा कापि ते भविष्यति।

(ट) भोः! यदिदानीं प्रथममेव प्रत्यादिष्टोऽसि, तत् क इदानीं ते निर्बन्धः पदे पदे मामनुबन्धुम्।

---

(ञ) सम्पन्नेति। भुज्यते यत् तत् भोजनं स्वाद्वन्नव्यञ्जनादिकम्, सम्पन्नं सर्वथा निष्पन्नम्। अतो न विलम्बसम्भव इति भावः। ननु पीठपातादिसम्पादनेनापि कथञ्चिद्विलम्बो भविष्यतीत्याह निरुपद्रवेति। निर्गतं विगतम् उपद्रवः प्रतिपक्षः अपरं भोजको यस्य तत् तादृशम्। भवन्तं विना अन्यः कश्चिदपि भोजको नास्तीति ततः पीठपातादिसम्पादनेनापि न विलम्बसम्भावनेति भावः। विशेषेण प्रलोभनार्थमाह अपि च दक्षिणेत्यादि।

(ट) पुनरिति। पदे पदे प्रतिपदक्षेपम्, अनुबन्धुं भोजनाय अनुनेतुम्। निर्बन्धः आग्रहातिशयः। इदमपि मैत्रेयस्यैवोत्तरम्।

---

(ঞ) সূত্রধার। আর্য্য! খাদ্য প্রস্তুত, কোন বাধাও আর নাই, আপনার দক্ষিণাও কিছু হইবে।

(ট) পুনরায় নেপথ্যে। মহাশয়! প্রথমেই যে আপনাকে আমি প্রত্যাখ্যান করিয়াছি, তথাপি প্রত্যেক পদক্ষেপে আমাকে অনুরোধ করিবার জন্য আপনার এ কোন্ আগ্রহ।

---

(१) अणुबन्धिदुम्।

## आमुखम्। (१) (ड)

प्रविश्य प्रावारहस्तो मैत्रेयः। "अण्ण वम्हणम्" इति पूर्वोक्तं पठित्वा।

अधवा मए वि मित्तेएण परस्स आमन्तणआइं भक्खिद-

(ठ) प्रत्यादिष्टोऽस्मि एतेन। भवतु, अन्यं ब्राह्मणमुपनिमन्त्रयामि।

---

(ठ) सर्वेति। एतेन मैत्रेयेण। अन्यमिति। अन्यथा ममापि भोजनं न स्यात्, तथा च सति दारुणक्षुधायातनेयं दुःसहैव तिष्ठेदिति भावः।

(ड) आमुखमिति। आ सम्यक् मुखम् अभिनेयवस्तुन आद्यभाग इत्यामुखम्। तच्च प्रस्तावना। तथा च साहित्यदर्पणे—

"नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥"

इदञ्च आमुखं प्रयोगातिशयो नाम। तथा चात्र नट्या ब्राह्मणनिमन्त्रणार्थं एकस्मिन् प्रयोगे प्रवर्त्तिते सति "एसो चारुदत्तस्स मित्तं मित्तेओ इदो ज्जेव आअच्छदि" इत्यादिप्रयोगान्तरप्रयोगेण मैत्रेयरूपपात्रस्य प्रवेशः सूचित इति। यथा साहित्यदर्पणे—

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥"

[illegible] साहित्यदर्पणटीकायामस्माभिः प्रदर्शित इत्यनुसन्धेयम्।

---

(ঠ) সূত্রধার। ইনি প্রত্যাখ্যান করিলেন। হইবে, অন্য ব্রাহ্মণ নিমন্ত্রণ করি। (এই বলিয়া চলিয়া গেল।)

(ড) প্রস্তাবনা।

(১) ইত্যামুখম্।

ब्बाइं (१)। हा अवत्थे! तुलीअसि। जो णाम (२) अहं तत्तभवदो चारुदत्तस्स रिद्धीए अहोरत्तं पअत्तणसिद्धेहिं उग्गार-सुरहि-गन्धेहिं मोदकेहिं ज्जेव असिदो अब्भन्तरचदुस्साल-दुआरएउवविट्ठो मल्लक-(३) सदपरिवुदो चित्तअरो विअ अङ्गु-

(ढ) अथवा मयापि मैत्रेयेण परस्य आमन्त्रणकानि प्रतीक्ष्याणि। हा अवस्थे! तुलयसि। यो नामाहं तत्र भवतः चारुदत्तस्य ऋद्ध्या अहोरात्रं प्रयत्नसिद्धैः उद्गारसुरभिगन्धैः मोदकैरेव अशितः अभ्यन्तरचतुःशालद्वारे उपविष्टः मल्लकशतपरिवृतश्चित्रकर इव

(ढ) प्रविश्येति। आमर्यादायाम्, व्रियते आच्छाद्यते अनेन पूर्वकायमिति प्रावारः, करणे घञ्। प्रावार उत्तरीयवस्त्रं हस्ते यस्य सः। "द्वौ प्रावारोत्तरासङ्गौ" इत्यमरः। "अथ वयस्य" इत्यादि पूर्वोक्तस्य पुनः पाठो भोजनप्रतिबन्धे कार्यान्तरव्यापृतत्वापेक्षया अथवेत्यादि पश्चात्तनस्याभिधानप्रक्रमार्थं। मयापि धनिचारुदत्ताश्रितेनापीति तात्पर्यम्, परस्य चारुदत्तभिन्नस्य, आमन्त्र्यन्ते आहूयन्ते येषु इत्यामन्त्रणकानि आमन्त्रणानन्तरखाद्यानि अन्नादीनि। "कृत्ययुटोऽन्यत्रापि" इति ताद्र्थ्ये युट्, कुत्सायाञ्च कप्रत्ययः। अवस्थे! वर्त्तमानदैन्यदशे! तुलयसि तुलां तृणकतुल्यलघु करोषि लोकमिति शेषः, सर्वविधगौरवहानिकरणादिति भावः। ऋद्ध्या सम्पदा सम्पत्तिस्थितिसमय इत्यर्थः। प्रयत्नेन आदरेण सिद्धैर्निष्पन्नैः, उद्गारेऽपि मोदकस्य एव उत्थानेन सुरभिर्घ्राणतर्पणो गन्धो येषां तैः, अशितं भोजनमस्यास्तीति अशितः सन्, अर्श आदित्वादच्। अभ्यन्तरे यत्

(ঢ) উত্তরীয়হস্তে প্রবেশ করিয়া মৈত্রেয় ("অস্তু ব্রাহ্মণ নিমন্ত্রণ করুন" এই পূর্ব্বোক্ত পাঠ করিয়া) অথবা আমি মৈত্রেয়ও, পরের বাড়ী ভোজন করিব। হায় অবস্থা! তুমি মনুষ্যকে তূলার ন্যায় লঘু করিয়া থাক। যে আমি, মাননীয় চারুদত্তের সমৃদ্ধির সময়ে অহোরাত্র যত্নপূর্ব্বক নিষ্পাদিত এবং নাসিকার তৃপ্তিসাধক-সৌরভযুক্ত মোদকই ভোজন করিয়া, ভিতরের চতুঃশালার দ্বারদেশে উপবিষ্ট হইয়া, বহুতর বাটনের পাত্রে

(१) पडिच्छिदव्वाइं। (२) दाणि। (३) मल्लक।

लीहिं छिविअ छिविअ अवणेमि, णअरचत्तरवुसहो विअ रोमन्थाअमाणो चिट्ठामि, सो दाणिं अहं तस्स दलिद्ददाए जहिं तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि । (ठ)

अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा अपनयामि, नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि । स इदानीमहं तस्य दरिद्रतया यस्मिन् तस्मिन् चरित्वा गेहपारावत इव आवासनिमित्तमत्र आगच्छामि ।

---

चतुःशाल तस्य द्वारे । मल्ल एव मल्लक अनुकम्पायां कप्रत्ययः । मल्लकाः भोजनीयद्रव्यपूर्णपात्राणि नीलपीतादिवर्णपूर्णपात्राणि च तेषां शतेन समूहेन परिवृत परिवेष्टितः । "मल्लं पात्रे कपोले च मत्स्यभेदे बलीयसि" इति मेदिनी । चित्रकर आलेख्यनिर्माता । अपनयामि अपसारयामि । वर्णपात्रशतेन परिवृतश्चित्रकरो यथा अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा वर्णपात्रेभ्यो बहुतरवर्णानानीय वामकरतलादौ एकमिश्रितवर्णं निर्माय तत्पात्राण्यपसारयति, तद्वत् अहमपि मोदकानि भुक्त्वा अन्नभोजनसमये व्यञ्जनादिपात्रशतेन परिवृतः सन् तेषामादरप्रदर्शनार्थं तत्पात्राणि अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा बुभुक्षाया अभावादपसारयामीति सरलार्थः । नगरस्य यत् चत्वरमङ्गनं तस्य वृषभो वृष स इव । उद्गीर्य भुक्तद्रव्यस्य पुनश्चर्वणं रोमन्थः । "रोमन्थः स्यात् पशूद्गारो रोमन्थः कीटवर्त्तनम्" इत्यनेकार्थध्वनिमञ्जरी । रोमन्थायमान उद्गीर्य पुनश्चर्वणेन ताम्बूलादिचर्वणेन च हनुदेशं चालयन्नित्यर्थः । तस्य चारुदत्तस्य । गेहपारावत इव गृहपालितकपोत इव । आवासनिमित्तम् अवस्थितिनिमित्तम् ।

---

পরিবেষ্টিত হইয়া, চিত্রকরের ন্যায় অঙ্গুলিদ্বারা স্পর্শ করিয়া করিয়া সরাইয়া রাখিয়াছি এবং নগরাঙ্গনস্থিত বৃষের ন্যায় হনুচালন করিয়া অবস্থান করিয়াছি, সেই আমি এখন, চারুদত্তের দরিদ্রতানিবন্ধন, গৃহকপোতের ন্যায় যেখানে সেখানে বেড়াইয়া, বাস করিবার জন্য এখানে আসিয়া থাকি।

एसो अ अज्जचारुदत्तस्स पिअवअस्सेण चुण्णवुड्ढेण (१) जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति । ता जाव अज्जचारुदत्तं पेक्खामि । परिक्रम्य अवलोक्य च । एसो चारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाणं बलिं हरन्तो (२) इदो ज्जेव आअच्छदि । (ग)

(क) एष च आर्य्यचारुदत्तस्य प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकः अनुप्रेषितः, सिद्धीकृतदेवकार्य्यस्य आर्य्यचारुदत्तस्य उपनेतव्य इति । तद्यावदार्य्य चारुदत्तं प्रेक्षे । एष चारुदत्तः सिद्धीकृतदेवकार्य्यो गृहदेवताभ्यो बलिं हरन् इत एवागच्छति ।

(ख) एष इति । जातीकुसुमेन वासितः स्वगन्धवासितया सुरभीकृतः । सिद्धीकृतं निष्पादितं देवकार्य्यं देवपूजा येन तस्य । उपनेतव्यः दातव्य इति आदिश्य अनुप्रेषित इत्यन्वयः । प्रेक्षे पश्यामि । "नामुचित विमल पावकम्" इति भारवीर्ना... पुनरेव इति । बलिं पूजोपहारम् हरन् ददत् । "बलिः पूजोपहारे स्यात्" इत्यमरः ।

विदूषकस्येयं प्राच्या भाषा—"प्राच्या विदूषकादीनाम्" इति साहित्यदर्पणात् ।

(গ) মাননীয় চারুদত্তের প্রিয়সখা চূর্ণবৃদ্ধ, জাতীকুসুমবাসিত এই উত্তরীয় বস্ত্রখানি পাঠাইয়া দিয়াছেন এবং বলিয়াছেন যে, "আর্য্য চারুদত্ত দেবতার্চ্চনা সম্পাদন করিয়া ব্যস্ত হইলে ইহা তাঁহার নিকট উপস্থিত করিও।" অতএব আর্য্যচারুদত্তের সহিত সাক্ষাৎ করি। (কতিপয় পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই যে চারুদত্ত, দেবতার্চ্চনা সম্পাদন করিয়া গৃহদেবতাদিগের উদ্দেশে উপহার দিতে দিতে এই দিকেই আসিতেছেন।

(१) चुण्णवुड्ढेण । (२) करन्तो ।

ततः प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च। (त)

चारु। ऊर्द्ध्वमवलोक्य सनिर्वेदं निःश्वस्य। (थ)

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः।
तास्वेव सम्प्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥८॥

इति मन्दं मन्दं परिक्रम्योपविशति।

इदमेव विदूषकवाक्यमारभ्य द्वितीयाङ्कसमाप्तिपर्यन्तो मुखसन्धिः। तथा चात्र वसन्तसेनाचारुदत्तयोर्भाविसमागमरूपफलस्य प्रथमहेतुभूतः परस्परानुरागो बीजं नामार्थप्रकृतिः। यथा साहित्यदर्पणे—

"अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥"

एवं भाविसमागमरूपमुख्यफलसिद्धये नायिकाया वसन्तसेनायाश्चारुदत्तहस्ते अलङ्कारन्यासौत्सुक्यम् आरम्भो नामावस्था। यथा तत्रैव—

"भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।"

एवञ्च "यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥" इति लक्षणसङ्गतिः।

अस्य च उपक्षेपादीनि द्वादशाङ्गानि सलक्षणानि यथास्थानं वक्ष्यामः।

(त) तत इति। यथानिर्दिष्टः गृहदेवताभ्यो बलिहरणप्रवृत्तः। रदना दन्ता अस्याः सन्तीति रदनिका "स्त्रविषये इको वाच्यः" इति मत्वर्थे इकप्रत्ययः, प्रशस्तदन्तशालित्वादस्या दास्या रदनिकेति नाम।

(थ) चारु इति। ऊर्द्ध्वमवलोकनं दैवोद्देश्यार्थम्। निर्वेदेन दारिद्र्यजनितया आत्मावमाननया सहेति सनिर्वेदम्।

---

(त) তদনন্তর যথানির্দ্দিষ্টরূপে চারুদত্ত ও রদনিকার প্রবেশ।

विदू। एसो अज्जचारुदत्तो। ता जाव सम्पदं उवसप्पामि। (उपसृत्य।) सोत्थि भवदे। वड्ढदु भवं। (ट)।

---

यासामिति। यासां मम गृहदेहलीनां गृहसम्मुखस्थस्थानानाम् बलि तण्डुलादि पूजोपहारः सपदि तत्क्षणात् सर्वतस्त एव हंसैः सारसादिपक्षिगणैश्च विलुप्तपूर्वो भक्षितपूर्वः। सम्प्रति विरूढा लोकसञ्चाराभावादुत्पन्ना तृणाङ्कुरा दूर्वादि तृणाङ्कुरा यासु तासु तास्वेव गृहदेहलीषु कीटमुखैः अवलीढः अर्द्धभुक्तः, बीजाञ्जलिः अञ्जलिपरिमितधान्यादि पतति जीर्णभित्त्युपरिदेशादिति शेषः। अभूतपूर्वमिदं दारिद्र्यकष्टमिति भावः।

अत्र अप्रस्तुतयोः हंसगणसारसगणयोरेकलोपक्रियाभिसम्बन्धात् तुल्ययोगिता तथा तृणाङ्कुरोत्पत्तिबीजाञ्जलिपतनरूपकार्येण दारिद्र्यरूपकारणस्य स्पष्टसूचनात् पर्यायोक्तञ्च अनयोः परस्परनिरपेक्षतया संसृष्टिः। द्वयोरपि एकधर्माभिसम्बन्धे तुल्ययोगिता भवत्येवेति दर्शितमस्माभिः साहित्यदर्पणटीकायाम्।

चारुदत्तस्य उत्तमपात्रतया शिक्षिततया चेदं संस्कृतं पाठ्यम्। यथा साहित्यदर्पणे—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्।"

"गृहावग्रहणी देहली" इत्यमरः। "दद्याद्बलिं विधाने च बलिं द्वारे गृहस्य च" इति मार्कण्डेयपुराणम्।

वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥९॥

---

(থ) চারুদত্ত। (ঊর্দ্ধে দৃষ্টিপাতপূর্ব্বক নির্ব্বেদের সহিত নিশ্বাস ত্যাগ করিয়া)

পূর্ব্বে, আমার গৃহের যে সম্মুখস্থ ভূমিতে গৃহদেবতাদিগকে তণ্ডুল প্রভৃতি উপহার দান করিলে তৎক্ষণাৎ হংস ও সারসপক্ষিগণ তাহা ভক্ষণ করিয়া যাইত, সম্প্রতি সেই ভূমিতেই দূর্ব্বাপ্রভৃতি তৃণাঙ্কুর জন্মিয়াছে এবং কীটমুখ হইতে অর্দ্ধভুক্ত ধান্যাদিবীজ প্রচুর পরিমাণে পতিত হইতেছে ॥৯॥

(এই বলিয়া ধীরে ধীরে পাদচারণ করিয়া উপবেশন করিলেন।)

चारु। अये! सर्वकालमित्रं मैत्रेयः प्राप्तः। सखे! स्वागतम्। आस्यताम्। (ध)

विदू। जं भवं आणवेदि। उपविश्य। भो वअस्स! एसो दे वअस्सेण चुण्णवुड्ढेण (१) जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स तुए उवणेदव्वो त्ति। समर्पयति। (न)

(द) एष आर्य्यचारुदत्तः। तद्यावत् साम्प्रतमुपसर्पामि। स्वस्ति भवते। वर्द्धतां भवान्।

(न) यद्भवान् आज्ञापयति। भो वयस्य! एष ते वयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकः अनुप्रेषितः, सिद्धीकृतदेवकार्य्यस्य आर्य्यचारुदत्तस्य त्वया उपनेतव्य इति।

---

(द) विदू इति। स्वस्ति मङ्गलम्। वर्द्धताम्, अभ्युदयेनेति भाव।

(ध) चारु इति। अयि इत्यानन्दसम्भ्रमे। तथा च विश्व—"अयी क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च।" सर्वेष्वेव कालेषु सम्पत्सु विपत्सु चेत्यर्थः। मित्रं सखा। एतेन मैत्रेयस्य महाहितकारित्वं व्यज्यते। प्राप्त उपस्थितः, स्वागतं सुखेनागमनं किमिति काकु। आस्यतामुपविश्यताम्।

(न) विदू इति। उपनेतव्यो दातव्यः, इति आदिश्य अनुप्रेषित इति पूर्व्वेणैवान्वयः।

---

(द) বিদূষক। এই যে আর্য্য চারুদত্ত! অতএব এখন উঁহার নিকট উপস্থিত হই। (নিকটে যাইয়া) আপনার মঙ্গল হউক, আপনি উন্নতি লাভ করুন।

(ধ) চারুদত্ত। এই যে! সকল সময়ের বন্ধু মৈত্রেয় উপস্থিত। সখে! তোমার শুভাগমন ত? উপবেশন কর।

---

(१) जुण्णवुड्ढेण।

चारु। गृहीत्वा सचिन्तं स्थितः। (प)

विदू। भो! इदं किं चिन्तीअदि?। (फ)

चारु। वयस्य!

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥१०॥

(फ) भो! इदं किं चिन्त्यते?।

---

(प) चारु इति। भूतपूर्वधनिनश्चारुदत्तस्य इदानीं सहसादरिद्रभावात् परदत्त सुरभीपटावदर्शनात् विषादोदयेन सचिन्तत्वं बोध्यम्।

सुखमिति। घना निविडा ये अन्धकारास्तेषु दीपदर्शनमिव दुःखान्यनुभूय हि दुःखान्यनुभूय विद्यमानस्यैव जनस्य सुखं शोभते चमत्करोतीति। तु किन्तु, सुखात् सम्पत्तिनिबन्धनसुखानुभवात् परमित्यर्थः, यो नरो दरिद्रतां दरिद्रतानिबन्धनदुःखं याति प्राप्नोति अनुभवति, स नरः शरीरेण धृतः आश्रितः सन्, मृतो मृतावस्थ एव

---

(ন) বিদূষক। আপনি যাহা আদেশ করেন। (উপবেশন করিয়া) সখে! আপনার বয়স্য চূর্ণবৃদ্ধ, জাতীকুসুমসৌরভে সুবাসিত এই উত্তরীয় বস্ত্রখানি পাঠাইয়া দিয়াছেন (এবং বলিয়াছেন যে,) আর্য্য চারুদত্ত যখন দেবকার্য্য সম্পাদন করিয়া সুস্থ হইবেন, তখন তুমি ইহা তাঁহার নিকট উপস্থিত করিবে। (সমর্পণ করিল)।

(প) (চারুদত্ত গ্রহণ করিয়া চিন্তার সহিত অবস্থান করিতে লাগিলেন)।

(ফ) বিদূষক। সখে! এ কি চিন্তা করিতেছেন?।

विदू। भो वअस्स! मरणादो दालिद्दादो वा कदरं दे रोअदि। (ब)

चारु। वयस्य!

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥११॥

(ब) भो वयस्य। मरणात् दारिद्र्याद्वा कतरत् ते रोचते?।

---

जीवति, जीवति च सर्वव मृतवदकर्मण्यो हेयश्च भवतीत्यर्थः। अतएवाहमपि सम्पन्नदशातः परं दारिद्र्यदशोपनिपातात् जीवन्मृत एवास्मीति भावः।

अत्र अप्रस्तुतात् नरसामान्याभिधानात् प्रस्तुतचारुदत्तरूपनरविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः प्रधानं, व्यापकत्वात्, तथा श्रौती उपमा, मृतो मृतरूप इत्यर्थावगमात्, असमासगतं निरङ्गकेवलरूपकञ्च गुणभूतम्, व्याप्यत्वात्, इत्येतेषां गुणप्रधानभावादङ्गाङ्गिभावेन सङ्करः। तथा प्रथमपादे एकवाक्यत्वाभावेन 'विद्यमानस्य' इत्यस्य पदान्तरस्य अवश्यमध्याहरणीयतया न्यूनपदत्वदोषः, एवं चतुर्थपादे मृत एवेति नियमो वाच्यः, किन्तु नोक्त इति नियमे अनियमाख्यदोषः, तौ च "सुखं हि दुःखानुभवात् परं वरम्" इति प्रथमपादपाठेन "धृतः स तन्वा मृत एव जीवति" इति चतुर्थपादपाठेन च समाधेयौ।

वंशस्थविलं वृत्तम् ॥१०॥

(ब) विदू इति। अत्र वाशब्दः समुच्चये। तथा च मरणं दारिद्र्यञ्चेत्यर्थः। अतएवोभयत्रापि ल्यब्लोपे पञ्चमी। कतरत् उभयोर्मध्ये किमित्यर्थः।

---

চারুদত্ত। সখে! নিবিড় অন্ধকারে দীপ দর্শনের ন্যায়, দুঃখ অনুভবের পরই সুখ শোভা পায়, কিন্তু যে ব্যক্তি, সুখের পর দারিদ্র্যদুঃখ প্রাপ্ত হয়, সে শরীরধারী থাকিয়া মৃত অবস্থায় জীবিত থাকে ॥১০॥

(ব) বিদূষক। সখে! মরণ ও দারিদ্র্য, এই দু'য়ের মধ্যে কোন্‌টীতে আপনার রুচি হয়?।

विदू । भो वअस्स ! अलं सन्तावेण (१)। पणइजण-संकामिदविहवस्स सुरलोअपीटसेसस्स विअ पड़िवअंदस्स परिक्खओ वि दे अहिअदरं रमणीओ (भ)।

(भ) भो वयस्य ! अलं सन्तापेन। प्रणयिजनसंक्रमितविभवस्य सुरलोकपीतशेषस्येव प्रतिपच्चन्द्रस्य परिक्षयोऽपि ते अधिकतरं रमणीयः।

---

दारिद्र्यादिति। अत्रापि वाशब्दः पूर्ववदेव समुच्चये, ल्यब्लोपे च पञ्चमीयम्। मरणस्य वस्तुतः प्रीतिजनकत्वाभावात् "कथयामि प्रीयमाणः" इति न चतुर्थी किन्तु सम्बन्धविवक्षया षष्ठ्येव। मरणं रुचिं प्रति हेतुमाह अल्पेति। अल्पकालमात्रस्थितिकत्वात् अल्पः क्लेशः यस्मिन् तत् तादृशं मरणं किन्तु दारिद्र्यम् न विद्यते अन्तः शेषो यस्य तत् तादृशम्, दुःखं दुःखजनकम्। हन्त। तदेवेदं दारिद्र्यं समीपे स्थितमिति भावः।

अत्र द्वितीयपादे गम्य। दारिद्र्यात्पीड़नात् शाब्दी परिसंख्या, पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गम्, उपमानभूतमरणापेक्षया उपमेयभूतदारिद्र्यस्य आधिक्यवर्णनात् व्यतिरेकश्चेति पूर्ववदेवामीषां सङ्करः। किन्तु दारिद्र्यमरणशब्दयोरमङ्गलपदोपादानेऽपि न अश्लीलत्वं कथितपदत्वं वा दोषः गत्यन्तराभावात् दुःखव्यञ्जकत्वाच्च।

आर्या जातिः ॥११॥

(भ) विदू इति। प्रणयिजनेषु मित्रलोकेषु प्रार्थिषु च संक्रमिताः दानेन सम्प्रापिताः विभवाः धनानि येन तस्य ते तव, सुरलोकैर्देवैः पीताः शेषाः अवशिष्टाः यस्य तस्य प्रतिपच्चन्द्रस्येव, परिक्षयः एकत्र दारिद्र्यम् अन्यत्र क्षीणता। प्रतिपदग्रहणं चात्र दारिद्र्यसूचनार्थम्। श्रौतोपमालङ्कारः।

---

চারুদত্ত। বয়স্য! দারিদ্র্য ও মরণ, এই দু'য়ের মধ্যে মরণই আমার ভাল লাগে কিন্তু দারিদ্র্য নহে। কারণ, মরণের দুঃখ অল্প, আর দারিদ্র্যদুঃখের শেষ নাই ॥১১॥

(१) सन्तापिदेण।

चारु। वयस्य! न-ममार्थान् प्रति दैन्यम्। पश्य—(म)

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥१२॥

(म) चारु इति। अर्थान् प्रति अर्थव्ययविषय इत्यर्थः। दैन्यं कष्टम्।

एतदिति। भ्रमन्तः मदजलपानार्थं स्वस्वकार्यार्थं च परिचरन्तः, मधुकरा भ्रमराः, कालात्यये मदजलप्रस्रवणकालातिक्रमे, संशुष्का सान्द्रा घना मदलेखा दानजलरेखा यस्मिन् स तादृशम्, करिणः कपोलं हस्तिनो गण्डदेशमिव अतिथयः क्षीणा नष्टा अर्था धनानि यस्य तत् तथोक्तम्, इति हेतोः, अस्मदीयं गृहम्, यत् परिवर्जयन्ति परित्यज्य अन्यत्र गच्छन्ति एतत् परिवर्जनमेव तु मां दहति सन्तापयति।

अत्र श्रौती उपमालङ्कारः। तथा संशुष्कसान्द्रमदलेखमित्यत्र तथा एतच्छब्दो विधेय एव, तस्य च प्राङ्निर्देशेनाप्राधान्यप्रतीतेर्वाक्यगतो विधेयाविमर्शदोषः, स तु "क्षीणार्थमित्यतिथयः परिवर्जयन्ति यन्मां गृहं दहति मामिदमेव दुःखम्" इति पाठेन समाधेयः।

वसन्ततिलका वृत्तम् ॥१२॥

---

(ভ) বিদূষক। সখে! আপনি অনুতাপ করিবেন না। কারণ, আপনার ধনসম্পত্তি, বন্ধুজন ও প্রার্থিজনে সংক্রমিত হইয়াছে, সুতরাং দেবগণ অবশিষ্ট অংশ পান করিলে পর, প্রতিপদের চন্দ্রের ন্যায় আপনার এই ক্ষয়ও, অধিকতর শোভা পাইতেছে।

(ম) চারুদত্ত। বয়স্য! আমার ধনের বিষয়ে কোন কষ্ট নাই। দেখ—

পরিভ্রমণকারী ভ্রমরগণ, গাঢ় মদজলের রেখা কালান্তরে শুষ্ক হইয়া গেলে পর, হস্তীর গণ্ডদেশ যেমন পরিত্যাগ করিয়া যায়, সেইরূপ অতিথিগণ, ইহার ধন নষ্ট হইয়া গিয়াছে ইহা ভাবিয়া যে আমার

विदू। भो वअस्स! एदे क्खु दासीए पुत्ता अत्थकल्ल-वत्ता वरड़ाभीदा विअ गोवालदारआ अरण्णे जहिं जहिं ण खज्जन्ति तहिं तहिं गच्छन्ति। (घ)

चारु। वयस्य!

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति।
एतत्तु मां दहति, नष्टधनाश्रयस्य
यत् सौहृदादपि जनाः शिथिलीभवन्ति ॥१३॥

(घ) भो वयस्य! एते खलु दास्याः पुत्रा अर्थकल्यवर्त्ताः, वरटाभीता इव गोपाल-दारका अरण्ये यस्मिन् यस्मिन् न खाद्यन्ते तस्मिन् तस्मिन् गच्छन्ति।

---

(घ) विदू इति। दास्याः पुत्रा इति निन्दावाद। कल्ये प्रत्युष एव वर्त्तन्ते न तु पूर्वाह्णादौ भोजनवेलायां भोज्यद्रव्यक्रयणापचीयत्वादिति कल्यवर्त्ता क्षणस्थायिन इत्यर्थः, अर्थाश्च ते कल्यवर्त्ताश्चेति अर्थकल्यवर्त्ता "अग्निस्तोम" इत्यादिवत् विशेषणस्य परनिपातः, क्षणस्थायीनि धनानीत्यर्थः। अरण्ये वने, वरटा दंशमशकादिकीटविशेषा (बल्ता, बोल्ता इति—वङ्गभाषा) ताभ्यो भीता, गोपालदारका गोपबालका इव, यस्मिन् यस्मिन् स्थाने गृहे च न खाद्यन्ते न दश्यन्ते भोगमभुज्यन्ते च, तस्मिन् तस्मिन् स्थाने गृहे च गच्छन्ति। निन्दितानि खलु धनानि उपभोगक्षीणानां कृपणानामेव गृहं गच्छन्तीति उदारेण त्वया न तदर्थं शोकः करणीय इति भावः।

अत्र श्रौती उपमालङ्कारः। "गन्धोली वरटा द्वयोः" इत्यमरः।

বাড়ী পরিত্যাগ করিয়া যায় এই ঘটনাই আমাকে দগ্ধ করিতেছে ॥১২॥

(ঘ) বিদূষক। সখে! বনের ভিতরে বোলতার (বল্লার) দংশনভয়ে ভীত গোপবালকদিগের ন্যায়, এই দাসীর পো (নিন্দিত) ক্ষণস্থায়ী ধনসম্পত্তি, যেখানে যেখানে না খায়, সেইখানে সেইখানে যায়।

अपि च,

दारिद्र्याद्ध्रियमेति, ह्रीपरिगतः प्रभ्रश्यते तेजसः,
निस्तेजाः परिभूयते, परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥१४॥

सत्यमिति। विभवनाशकृता धनक्षयजनिता चिन्ता मे मम नास्ति, इति सत्यम्। कुत इत्याह—हि यस्मात्, धनानि भाग्यक्रमेण भवन्ति पुनर्यान्ति च। न किन्तु, एतन्मां दहति सन्तापयति, यत् जना नष्टो धनमेवाश्रयो यस्य तस्य निर्धनीभूतस्य जनस्योपर्यं, सौहृदादपि प्रणयादपि शिथिलीभवन्ति। तथापि तापयतीति भावः।

अत्र भवन्ति यान्तीत्यनेकक्रियायोर्धनानीत्येककर्तृकारकत्वात् दीपकम्, नष्टधनाश्रयस्येति अप्रस्तुतनिर्धनसामान्यात् प्रस्तुतचारुदत्तप्रतीतेरप्रस्तुतप्रशंसा चानयोः परस्परनिरपेक्षतया च संसृष्टिः। तथा पूर्वार्द्धेन वाक्यगतो विधेयाविमर्शदोषः, स तु "यत् सौहृदादपि जनाः शिथिलीभवन्ति चौदार्यकस्य वत मा गुरु सन्दधातीति" इति पाठेन समाधेयः।

वसन्ततिलका वृत्तम् ॥१३॥

दारिद्र्यादिति। दारिद्र्यात् ह्रियमेति लज्जां प्राप्नोति, स्त्रीत्व इति सर्वत्र ज्ञेयं, सभादौ उपयुक्तवेशभूषाद्यभावाद्विन्द्यवनादिश्रयः इति भावः। ह्रीपरिगतो लज्जायुक्तः, तेजसः प्रभावात्, प्रभ्रश्यते स्वयमेव स्खलितो भवति, लज्जावशादेव तेजःस्फुरणस्य बाधकत्वादित्याशयः। निस्तेजाः परिभूयते लोकैस्तिरस्क्रियते, तिरस्कारे निस्तेजस्कतया प्रतितिरस्काराक्षमत्वादित्यभिप्रायः। परिभवात् निर्वेदम् आत्मावमाननाम्, आपद्यते प्राप्नोति, आत्मनि धिक्कारोपस्थितेरिति भावः। निर्विण्णो निर्वेदप्राप्तः, शुच-

चারুদত্ত। বয়স্য! সত্যই আমার ধনসম্পত্তিনাশ হেতু কোন চিন্তা নাই। কারণ, ধন, ভাগ্যক্রমে হয়, আবার যায়। কিন্তু এই ঘটনাই আমাকে দগ্ধ করে যে, নির্ধনব্যক্তির প্রণয়বন্ধন হইতেও, লোক শিথিল হইয়া যায় ॥১৩॥

मेति शोकं प्राप्नोति, 'हा मम दुरवस्था' इत्येवमवस्थास्मरणादित्याशयः। शोकपिहितः शोकावृतचित्तः, बुद्ध्या कर्त्तव्यज्ञानेन, परित्यज्यते, शोकातुरस्य उन्मत्तप्रायत्वादित्यभिप्रायः। निर्बुद्धिः कर्त्तव्यज्ञानहीनः, क्षयमेति नाशं प्राप्नोति, अकर्त्तव्यकरणेन गुरुतरानर्थपातादिति भावः। अतएवोक्तं गीतायाम्—"बुद्धिनाशात् प्रणश्यति" इति। अहो आश्चर्यम्, निर्धनता एका दरिद्रता, सर्वासामेवापदाम्, आस्पदं प्रतिष्ठास्थानं प्रयोजिकेत्यर्थः, मूलीभूतत्वादित्याशयः। ममापि ईदृगेव जातमिति समुदितवतश्चारुदत्तस्याभिप्रायः।

अत्र निर्धनता सर्वापदामास्पदम् इति वाक्यार्थः कारणत्वेन सर्वानेव पूर्ववाक्यार्थानपेक्षत इति वाक्यार्थहेतुकं काव्यलिङ्गम् "यत्त्वन्नेत्रसमानकान्ति" इत्यादि दर्पणोदाहरणवत्, अप्रस्तुतात् लोकसामान्यात् प्रस्तुतस्य लोकविशेषस्य चारुदत्तस्य प्रतीतेरप्रस्तुतप्रशंसा, तथा पूर्वपूर्ववाक्यस्थह्रीप्रभ्रंशादीनां विशेष्याणां परपरवाक्येषु विशेषणत्वेन स्थापनादेकावल्यलङ्कारश्च, "वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु" इत्यादि दर्पणोदाहरणवत्। अतएव तत्रैवोक्तं "क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते" इति। एषाञ्च गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

तथा ह्रियमिति इति इकारस्य ह्री इति संयोगपूर्वत्वेऽपि "प्रह्रे वा" इति पिङ्गलेन वैकल्पिकगुरुत्वविधानात् न गुरुत्वमिति न हतवृत्ततादोषः, किन्तु एति इति क्रियाया वारम्बार्योपादानादनवीकृतत्वदोषः, तथा परस्मैपदात्मनेपदयोर्भेदेन प्रत्ययभेदादेक-

---

আরও দেখ—

মানুষ, দারিদ্র্যবশতঃ সর্বত্র লজ্জা পায়, লজ্জা পাইয়া প্রভাব হইতে বিচ্যুত হয়, প্রভাবচ্যুত হইয়া লোকের তিরস্কারের পাত্র হইয়া পড়ে, তিরস্কারবশতঃ আত্মগ্লানি অনুভব করে, আত্মগ্লানি অনুভব করিয়া শোকপ্রাপ্ত হয়, শোকাচ্ছন্ন হইয়া বুদ্ধিবিহীন হইয়া পড়ে, বুদ্ধিবিহীন হইয়া পরিশেষে ক্ষয়প্রাপ্ত হয়। অতএব কি আশ্চর্য্য! এক নির্ধনতাই সমস্ত বিপদের কারণ ॥১৪॥

विदू । भो वअस्स ! तं ज्जेव अत्थकल्लवत्तं सुमरिअ अलं सन्तप्पिदेण । (र)

चारु । वयस्य ! दारिद्र्यं हि पुरुषस्य—

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात् परिभवो
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च ॥१५॥

(र) भो वयस्य । तमेव अर्थकल्यवर्त्तं कृत्वा अलं सन्तापितेन ।

---

विधा भग्नप्रक्रमता कर्त्तृकर्म्मवाच्यभेदेन प्रत्ययभेदाच्च अपरविधा भग्नप्रक्रमता, तथा शुचम् इति शोक इति च प्रकृतिभेदादन्या भग्नप्रक्रमता इति बहव एव भग्नप्रक्रमतादोषाः, एव सर्व्वापदाम् इत्यत्र नियमार्थक एवशब्दो वाच्यः, किन्तु नोक्त इति नियमे अनियमाख्यदोषश्च । एषाञ्च पाठपरिवर्त्तनेन परिहारे सम्भवेऽपि मूलोच्छेदप्रसङ्ग इति विरम्यते ।

शार्द्दूलविक्रीडितं वृत्तम्—"सूर्य्याश्वैर्मसजास्तताः सगुरवः शार्द्दूलविक्रीडितम्" इति लक्षणात् ॥१४॥

(र) विदू इति । पूर्व्ववदेव व्याख्यानात् अर्थकल्यवर्त्तं प्रातराशं धनमित्यर्थः । सन्तापितेन सन्तप्तीकृतेन चित्तेन ।

निवास इति । दारिद्र्यमिति पूर्व्वगद्यस्य सर्व्वत्रान्वेति । चिन्तायाः उद्वेगस्य-दुश्चिन्तायाः, निवासः स्थितिस्थानमित्यर्थः, दारिद्र्ये सति असम्भवविषयेऽपि उद्वेग आविर्भवतीति भावः । परपरिभवः विना कारणं परकर्त्तृकतिरस्कारजनकमित्यर्थः, दरिद्रं हि विना कारणमेव परस्तिरस्करोतीत्याशयः । अपरमन्यविषमं वैरं शत्रुता तत्कारणमिति तात्पर्य्यम्, धनस्य वैरं सकारणकम्, दरिद्रं प्रति वैरन्तु अकारणमेव पर

---

(व) विदूषक। ভোঃ। সেই ক্ষণভঙ্গুর ধনকে স্মরণ করিয়া, সন্তাপ করা নিরর্থক।

तद्वयस्य ! कृतो मया गृहदेवताभ्यो बलिः । गच्छ, त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर । (ल)

करोतीति भावः । मित्राणां सुहृदाम् जुगुप्सा निन्दा तज्जनकमित्यर्थः, सुहृदोऽपि दरिद्रमकारणमेव निन्दन्तीत्यभिप्रायः । स्वजनानामात्मीयानां जनानां तदितरेषां लोकानाञ्च विद्वेषस्य करणं जनकम्, सर्व एव विना कारणं विद्विषन्तीत्याशयः । वनं गन्तुं बुद्धिर्भवति । चकारस्त्वर्थे । किन्तु कलत्रात् भार्यात्, परिभवस्तिरस्कारः तिरस्कारपूर्वकतत्प्रतिबन्धजनकमित्यर्थः । तथा हृदिस्थः शोकाग्निः शोकाग्निभूतम् अथ च न दहति न भस्मसात् करोति, किन्तु सन्तापयति च ।

अत्र दारिद्र्यं हेतुः निवासादिकञ्च तत्कार्यं तयोरभेदेनाभिधानात् हेत्वलङ्कारः "हृदिस्थः शोकाग्निः" इति निरङ्गकेवलरूपकम् अधिकरूपे इतीमन्यपि दाहरूपतत्कार्याभावात् विशेषोक्तिः, तथा दहति सन्तापयतीत्यनेकक्रियायोः शोकाग्निरित्येककर्तृकारकत्वात् दीपकम् इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । एवं परिभवश्चास्य हि पाठात् कथितपदतादोषः, स च "कलत्राण्निहन्ति" इति पाठेन समाधेयः ।

हृदि तिष्ठतीति हृदिस्थः "प्राग्घ सप्तम्या कृति" इत्यलुक् समासः ।

शिखरिणी वृत्तम्—"रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥१५॥

(ल) तद्दिति । मातृभ्यो ब्राह्मीप्रभृतिभ्यः बलिं पूजोपहारम् उपहर मम प्रति निधिभाविन प्रदेहि । मातरः सप्त यथा—

চারুদত্ত। বয়স্য! এব দারিদ্র্যই, পুরুষের দুশ্চিন্তার আবাসস্থান, পরকর্তৃক তিরস্কারের কারণ, লোকের সঙ্গ অষ্টপ্রকার শত্রুতার হেতু, বন্ধুজনকর্তৃক নিন্দার কারণ এবং আত্মীয়জনের সহিত বিদ্বেষের হেতু। বনে যাইতে ইচ্ছা হয় কিন্তু ভার্যা হইতে তখন তিরস্কার চলিতে থাকে, আবার সেই দারিদ্র্য হৃদয়স্থিত শোকাগ্নিরূপে থাকিয়া একেবারে দগ্ধ করে না বটে, কিন্তু সন্তপ্ত করিতে থাকে ॥১৫॥

विदू। ण गमिस्सं। [ब]

चारु। किमर्थम्?।

विदू। जदो एव्वं पूइज्जन्ता वि देवदा ण दे पसीदन्ति। ता को गुणो देवेसुं अच्चिदेसुं। [ग]

चारु। वयस्य! मा मैवम्। गृहस्थस्य नित्योऽयं विधिः। [घ]

(ब) न गमिष्यामि।

(ग) यत एव पूज्यमाना अपि देवता न ते प्रसीदन्ति। तत् को गुणो देवेषु अर्चितेषु।

---

"ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा।
कौमारी चैव चामुण्डा चर्चिकेत्यष्ट मातरः॥"

(घ) चारु इति। नित्योऽयं विधिरिति। तथा चाह्निकतत्त्वे मार्कण्डेयम्—

"स्नात्वा प्रातर्यथैव कर्त्तव्यो बलिकर्म च।
अनश्नतापि सततमन्यथा किल्बिषी भवेत्॥"

ततकालस्तु सायकाल एव। अतएवानुपदं विदूषक आह—"एतस्यां प्रदोषवेलायाम्" इति।

---

(ल) ভো বয়স্য! আমি গৃহদেবতাদিগকে পূজার উপহার দিয়াছি। যাও, তুমিও চতুষ্পথে যাইয়া মাতৃগণকে পূজার উপহার দাও।

(ব) বিদূষক। আমি যা'ব না।

চারুদত্ত। কেন?।

(গ) বিদূষক। যে হেতু, এইরূপ পূজা করিলেও দেবতারা আপনার প্রতি প্রসন্ন হন না। সুতরাং দেবতাদের পূজা করিলে ফল কি?।

(ঘ) চারুদত্ত। বয়স্য! না, না, এরূপ বলিও না। কারণ, এই কার্য্য গৃহস্থের পক্ষে অবশ্যকর্ত্তব্য।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥१६॥

तद्गच्छ, मातृभ्यो बलिमुपहर।

विदू। भो ण गमिस्सं। अण्णो को वि पउञ्जीअदु। मम उण बम्हणस्स सव्वं ज्जेव विपरीदं परिणमदि, आदंसगदा विअ छाआ, वामादो दक्खिणा दक्खिणादो वामा। अस्सं अ, एदाये पदोसवेलाए इध राअमग्गे गणिआ विडा चेड़ा राअ-

(स) भो! न गमिष्यामि। अन्य कोऽपि प्रयुज्यताम्, मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति, आदर्शगता इव छाया वामतो दक्षिणा दक्षिणतो वामा।

तपसेति। देवता तपसा उपवासादिविधकर्मेण मनसा मानसिकध्यानेन, वाग्भिः स्तवादिभिर्वाक्यैः बलिकर्मभिः पूजोपहारदानादिभिः कार्यैश्च नित्यं पूजिता सत्यः, शमिनां शान्तचेतसां जनानां सम्बन्धे, तुष्यन्ति। अत्र विचारितैः वितर्कितैः किं निष्फलं फलाफलवितर्कं व्यर्थं। फलस्यैव प्रत्यक्षदर्शनात् नित्यत्वेन वेदविधानात् इति भावः ॥१६॥

(स) विदू इति। आदर्शगता दर्पणपतिता। छाया प्रतिबिम्बम्, वैपरीत्यं द्योतयति वामत इति। वामतो भागात् दक्षिणा दक्षिणभागस्थिता, दक्षिणतो भागात्

কায় মনো-বাক্যে এবং উপহারদানে দেবতাদিগের নিত্যই পূজা করিলে তাঁহারা, শান্তচিত্ত মানবদিগের প্রতি অবশ্যই সন্তুষ্ট হইয়া থাকেন, এ বিষয়ে বিচারের প্রয়োজন কি? ॥১৬॥

অতএব যাও, মাতৃগণকে যাইয়া পূজার উপহার দাও।

(স) বিদূষক। সখে! আমি যাইব না, অন্য কোনও লোককে নিযুক্ত কর। কারণ, বস্তুতঃ যাহা দেহের বামভাগ, দর্পণপতিত প্রতি-বিম্বের তাহা যেমন দক্ষিণভাগ এবং যাহা দেহের প্রকৃত দক্ষিণভাগ,

वल्लहा अ, पुरिसा सञ्चरन्ति। ता मण्डूअलुद्धस्स कालसप्पस्स मूसिओ विअ अहिमुहावदिदो वज्झो दाणिं भविस्सं। तुमं इध उवविट्ठो किं करिस्ससि?। [स]

चारु। भवतु। तिष्ठ तावत्। अहं समाधिं निर्वर्त्तयामि। [क]

अन्यच्च एतस्यां प्रदोषवेलायाम् इह राजमार्गे गणिका विटा चेटा राजवल्लभाश्च पुरुषाः सञ्चरन्ति। तत् मण्डूकलुब्धस्य कालसर्पस्य मूषिक इव अभिमुखापतितो वध्य इदानीं भविष्यामि। त्वमिह उपविष्टः किं करिष्यसि?।

वामा वामभागस्थिता। तथा च शरीरस्य यो वामभागः दर्पणपतितप्रतिविम्बस्य स दक्षिणभागो भवति यश्च दक्षिणभागः दर्पणपतितप्रतिविम्बस्य स वामभागो भवतीति द्रष्टव्यम्। विटा वक्ष्यमाणलक्षणाः, चेटाः मद्याजनकिङ्कराः। मण्डूकलुब्धस्य भक्षयितुं भेकमभिलषतः।

अत्र गणिका विटाश्चेटा राजवल्लभाश्च इत्यनेन वसन्तसेना विट चेट शकाराणां प्रवेशः सूचितः। "नानुचितं विरूपं पात्रम्" इति भरतोक्तेः।

(क) चारु इति। समाधिं मनः कालीमध्यानजपादिकम् निर्वर्त्तयामि निष्पादयामि। ततो गमिष्यामीति भावः।

তাহা যেমন দর্পণপতিত প্রতিবিম্বের বামভাগ হয়, সেইরূপ আমার সমস্তই বিপরীতভাবে পরিণত হয়। আরও কারণ আছে—এই প্রদোষকালে এই রাজপথে বেশ্যা, লম্পট, ভৃত্য ও রাজপ্রিয় পুরুষগণ বিচরণ করে। সুতরাং ভেকলোভী কালসর্পের নিকটে মূষিকের ন্যায়, আমি কাহারও সম্মুখে পড়িয়া এখন তাহার বধ্য হইব? তুমি এখানে বসিয়া কি করিবে?।

(২) চারুদত্ত। হউক, তুমি থাক, আমি সায়ংসন্ধ্যা সম্পাদন করি।

नेपथ्ये। तिष्ठ, वसन्तसेने! तिष्ठ। [च]

ततः प्रविशति विट-शकार-चेटैरनुगम्यमाना वसन्तसेना। (क)

विटः। वसन्तसेने! तिष्ठ तिष्ठ।

किं त्वं भयेन परिवर्त्तितसौकुमार्य्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती।
उद्विग्न-चञ्चल-कटाक्ष-विसृष्ट-दृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि ?॥१७॥

(च) नेपथ्य इति। नेपथ्यात् विटस्योक्तिरियम्।

(क) तत इति। विटशकारयोर्लक्षणमुक्तं साहित्यदर्पणे—

"सम्भोगहीनसम्पद्विटस्तु धूर्त्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥"
"मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः॥"

बाहुल्येन तालव्यशकारपाठित्वादेवास्य शकार इति वा। चेटस्तु शकारस्य भृत्यः।

किमिति। त्वं भयेन, परिवर्त्तितं त्यक्तं सौकुमार्य्यं गमनकोमलता मन्दगमनं यया सा, नृत्यप्रयोगे विशदौ दक्षौ, चरणौ, क्षिपन्ती सत्वरं पातयन्ती, उद्विग्ना उद्वेगयुक्ता अतएव चञ्चलाः कटाक्षा यस्मिन् कर्मणि तद्यथा स्यात्तथा विसृष्टा निक्षिप्ता दृष्टिर्यया सा तादृशी सती, व्याधस्य अनुसारेण पश्चाद्धावनेन चकिता त्रस्ता, हरिणीव किं कथं यासि। अधुना नास्ति ते किमपि भयमिति भावः।

अत्र श्रौती उपमालङ्कारः। तथा हरिणी याति त्वम् यासि इति पुरुषभेदात्

(ক) নেপথ্যে। থাম, বসন্তসেনা! থাম।

(খ) তদনন্তর বসন্তসেনা এবং তাহার পশ্চাৎ পশ্চাৎ বিট, শকার ও চেটের প্রবেশ।

বিট। বসন্তসেনা! থাম থাম।

शकारः । चिट्ठ वशन्तशेणिए ! चिट्ठ । [ख]

किं याशि, धावशि, पलाअशि, पक्खलन्ती
वाशू ! पशीद ण मलिश्शशि, चिट्ठ दाव ।
कामेण दज्झदि हु मे हलके तवश्शी
अङ्गाललाशिपड़िदे विअ मंशखण्डे ॥१८॥

(ख) तिष्ठ वसन्तसेनिके ! तिष्ठ ।
किं यासि, धावसि, पलायसे, प्रस्खलन्ती
वासु ! प्रसीद न मरिष्यसि, तिष्ठ तावत् ।
कामेन दह्यते खलु मे हृदयं तपस्वि
अङ्गारराशिपतितमिव मांसखण्डम् ॥१८॥

"लतेव राजसे तन्वि ।" इति दर्पणोदाहृतवत् भग्नप्रक्रमतादोष, स च 'याता' इति पाठेन समाधेय । 'याता' इत्यत्रापि वर्तमान एव क्तप्रत्यय इति नानुपपत्ति ।

वसन्ततिलका वृत्तम् ॥१७॥

किमिति । हे वासु ! बाले ! किं कथम्, यासि कदाचित् मन्द गच्छसि कदाचित् प्रस्खलन्ती उन्मनस्कतया विन्यासात् स्खलितपदा सती धावसि द्रुत गच्छसि, पलायसे कदाचित् 'भुक्कायिता गच्छसि, स्थिर गच्छ त्याजय' । अस्मान् प्रति प्रसीद । अस्मानेऽपि न मरिष्यसि, अतएव तिष्ठ तावत् यावत् काम वय वक्तव्य ब्रूम इति भाव । अङ्गारराशौ काष्ठस्याग्निपुञ्जे पतित मांसखण्डमिव, तपस्वि क्षुद्रम्, मे मम हृदयम्, कामेन कामानलेन, दह्यते खलु, अतएवाश्वमस्माकं मूर्च्छाना-पन्न इति भाव ।

তুমি গমনের কোমলতা ( মন্দগমন ) পরিত্যাগ করিয়া, নৃত্যকার্য্যে নিপুণ চরণযুগলকে নিক্ষেপ করতঃ, ব্যাধের অনুসরণে সন্ত্রস্ত হরিণীর ন্যায়, উদ্বেগব্যঞ্জক চঞ্চল কটাক্ষে দৃষ্টিপাত করিয়া, ভবে কেন পলায়ন করিতেছ ? ॥১৭॥

चेट । अज्जुके ! (१) चिट्ठ चिट्ठ । [ग]

उत्तासिता गच्छसि अन्तिका मे
संपुस्सपुच्छा [२] विअ गिम्हमोरी ।
ओवग्गदी शामिअभट्टके मे
वस्से गडे कुक्कुडशावके व्व ॥१८॥

(ग) अज्जुके ! तिष्ठ तिष्ठ ।

उत्त्रासिता गच्छसि अन्तिका मे सम्पूर्णपक्षेव ग्रीष्ममयूरी ।
अवल्गति स्वामी भट्टारको मे वने गतः कुक्कुटशावक इव ॥१८॥

---

अत्र यथा कथञ्चिदुपमालङ्कारः । "वामा स्यात् वाम " इति शाकारोक्तावमरः ।
"शकाराणां शकारादीनां शाकारीं सम्प्रयोजयेत्" इति साहित्यदर्पणात् शकारस्येयं शाकारी भाषा । तालव्यशकारबहुलत्वादियमस्याः शाकारीति संज्ञा ।

वसन्ततिलकं वृत्तम् ॥१८॥

(ग) चेट इति । अज्जुके गणिके ! । "नाट्योक्तौ गणिकाज्जुका" इत्यमरः । उत्त्रासिता इति । मे मम अन्तिका ज्येष्ठा भगिनी प्रभुणा शकारेण काम्यमाना तया ज्येष्ठा भगिनीव मम माननीयत्वाश्रय, सम्पूर्णौ बलवत्तया परिपूर्णीभूतौ पक्षौ यस्याः सा तद्वत् विशालविचित्रशाटीव वस्त्रदेहत्वादिति भावः ग्रीष्ममयूरीव तथैव कामेन क्लान्तीभूतत्वादित्यभिप्रायः । ग्रीष्मतापेन हि मयूरा क्लान्ततया गच्छन्तीति द्रष्ट

---

(খ) শকার। থাম বসন্তসেনা! থাম।

তুমি এদিক ওদিক পড়িতে পড়িতে যাইতেছ কেন? দৌড়াইতেছ কেন? এবং পলাইতেছ কেন?। বালিকে! প্রসন্ন হও মরিবে না একটু থাম। জ্বলন্ত কাষ্ঠরাশির মধ্যে পতিত মাংসখণ্ডের ন্যায় আমার ক্ষুদ্র হৃদয়, কামানলে দগ্ধ হইতেছে।১৮।

(গ) চেট। ওহে বেশ্যা! থাম থাম।

---

(१) अज्जए । (२) स पुष्पपुच्छा ।

विट'। वसन्तसेने! तिष्ठ तिष्ठ।

किं यासि बालकदलीव विकम्पमाना
रक्तांशुकं पवनलोलदशं वहन्ती।
रक्तोत्पलप्रकरकुट्मलमुत्सृजन्ती
टङ्कैर्मनःशिलगुहेव विदार्य्यमाणा ॥२०॥

ष्यम्। उत्ताम अस्या सन्नात इत्युभासिता अतीवभीता गच्छसि। अकारणमितदिति भाव। तत्र हेतुमाह—वने गत अरण्ये स्थित, कुक्कुटस्य समासव्यातपक्षिविशेषस्य शावक इव, भट्टारको राजा राजेव प्रभावशालीत्यर्थं स मम स्वामी प्रभु, अवधन्नाति त्वदर्थं ससम्भ्रम गच्छति।

शकारभ्रमतया अस्यापि शकारवदेव शाकारी भाषा। तदुक्ती च अतएवात्र उपमासु अनौचित्यदोष सहनीय। "अम्बिका भगिनी ज्येष्ठा" इत्यमर।

इन्द्रवज्रा छन्दः—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् ॥१९॥

किमिति। टङ्कैः पाषाणविदारणास्त्रैः विदार्य्यमाणा मनःशिला अस्या अस्तीति मनःशिला अत्र आदित्वादर्श स्त्रियामाप्रत्यय सा चासौ गुहा चेति मनःशिलगुहा कर्म्मधारये पूर्वपदपुंवद्भाव। केचित्तु मनःशिलमेव मन्दमाचक्षते। मनःशिलाविदारणे हि सती रक्ता आभा प्रसरतीति सादृश्य समुत्प्रेक्षितं। सा इव, रक्तोत्पलस्य च प्रकार

---

তুমি আমার জ্যেষ্ঠভগিনীর মত, সুতরাং গ্রীষ্মকালে সম্পূর্ণপক্ষা ময়ূরীর মত ভীত হইয়া অকারণ পলাইতেছ। বনস্থিত কুক্কুটশিশুর ন্যায়, আমার রাজতুল্য প্রভু ( তোমার জন্য ) দৌড়াইতেছেন ॥১৯॥

বিট। বসন্তসেনা! থাম থাম।

টঙ্ক-( শাবল ) দ্বারা বিদার্য্যমাণ মনঃশিলার গুহার ন্যায় রক্তোৎপলের মুকুলসমূহ নিপাতিত করিতে করিতে এবং বায়ুকম্পিতাঞ্চল রক্তবর্ণ বস্ত্র ধারণ করিয়া নূতন কদলীর ন্যায় কম্পিত হইতে হইতে যাইতেছ কেন? ॥২০॥

शकारः । चिट्ठ वसन्तशेणिए ! चिट्ठ । [घ]

मम मअणमणङ्गं मम्महं वड्ढअन्ती
णिशि अ शअणके मे णिद्दअं आक्खिवन्ती [१] ।
पशलशि भअभीदा पक्खलन्ती खलन्ती
मम वशमणुजादा लावणश्शेव कुन्ती ॥२१॥

(घ) तिष्ठ वसन्तसेनिके । तिष्ठ ।

मम मदनमनङ्गं मन्मथं वर्द्धयन्ती
निशि च शयनके मे निद्रामाक्षिपन्ती ।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
मम वशमनुजाता रावणस्येव कुन्ती ॥२१॥

समुच्छलस्य कुट्मलं आवृतं मुकुलवृन्दम्, उत्क्षिपन्ती गमनवेगेन भूमौ पातयन्ती, तथा पवनेन वायुना लोलायमाना दशा प्रान्तवर्त्तितन्तुसमवायो यस्य तत् तादृशम्, रक्तांशुकं लोहितवस्त्रम्, वहन्ती धारयन्ती, अतएव बालकदलीव नवीनरम्भायष्टिरिव, विकम्पमाना सती किं कथं यासि । नास्ति ते कम्पकारणमिति भावः ।

अत्र श्रौत्यौपम्ययोर्मिथो निरपेक्षतया संसृष्टिः । बालकदलीवति कम्पनाम एव सादृश्यमिति बालकदलीत्यस्य रक्ताशुकेन सम्बन्धाभावात् न पूर्ववद्भग्नप्रक्रमतादोषः ।

"टङ्कः पाषाणदारणः" इत्यमरः । वसन्ततिलका वृत्तम् ॥२०॥

ममेति । मम मदनं मदनवेगम् वर्द्धयन्ती रूपयौवनाभ्यामित्याशयः । निशि रात्रौ, शयनके शय्यायाम् मे मम निद्राम्, आक्षिपन्ती स्वचिन्ताद्वारा आकर्षन्ती निवा-

(घ) শকার। থাম, বসন্তসেনা। থাম।

তুমি আমার কামবেগ বৰ্দ্ধিত করিয়া, রাত্রিতে শয্যায় আমার নিদ্রার ব্যাঘাত জন্মাইয়া, এখন পড়িতে পড়িতে ভয়ে পলাইতেছ, তথাপি,

(१) पक्खिवन्ती ।

विटः। वसन्तसेने।

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता।

वयन्तीत्यर्थः, इदानीञ्च भयाद्भयभीता प्रस्खलन्ती त्वरया स्खलितपदा सती, प्रसरसि अपसृत्य अपसृत्य गच्छसि, तथापि रावणस्य कुन्तीव, मम वश धारणीयत्वेनाधीनताम्, अनुयाता प्राप्ता नान्यत्र सन्देह इति भावः।

अत्र यथा वास्तविकसादृश्याभावान्नोपमालङ्कारः, पृथगर्थत्वाभावाच्च न "प्रस्खलन्ती स्खलन्ती" इत्यत्र यमकम्, तथैव उन्मत्तवदुद्दिष्टभावेन श्रोतृकर्णे गाजनकतया रसापकर्षकत्वाभावात् "नभश्चनभश्च नभश्च" इत्यादौ नार्थगतपुनरुक्ततादोषः। अन्यत्रानुप्रासस्तु स्यादेव सर्वविलक्षणत्वात्।

शकारवचनस्य चेत्थमेव रीतिरालङ्कारिकनियमनिबद्धा। यथा पृथ्वीधरधृतम्—

"अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम्।
लोकन्यायविरुद्धञ्च शकारवचनं विदुः॥"

युक्तिश्चात्रेयमवधेया—राज्ञो भोग्यवनिताभ्राता हि नाम शकारः। अतएव हि राज्ञा परमवर्ज्यैरेऽपि तस्मिन्नत्यन्तमादरं दर्शयति, तेन चासौ महतीमेव दाम्भिकतामात्मनि पुष्णाति, अपरकर्त्तृकस्वभागनीभोगमप्यर्द्धेन महते, परमवर्ज्वरतया च उन्मत्तवदेव युक्तमयुक्तं वा अगणयन् यथा तथैव प्रलपति, यथेष्ट व्यवहरति आत्मनः प्रभुत्वमहिमानञ्च ख्यापयति, लोकश्च तं घृणाभयाभ्यां पश्यति। अतएव च अन्याभ्यभाषितेऽपि जनैः "अयं शकारवकारं भाषते" इति साट्टहासमुखेन लोकवादः।

अत्र च भयं इत्यादिकं प्रस्खलन्ती स्खलन्ती इति च पुनरुक्तम्। भयभीता इति भयशब्दो व्यर्थः। रावणस्येव कुन्ती इति हतोपमम्। एवमन्यत्राप्युन्नेयम्।

मालिनी वृत्तम्—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥२१॥

कुন্তী যেমন রাবণের বশতাপন্ন হইয়াছিলেন, সেইরূপ তুমিও আমার বশতাপন্ন হইয়াছ॥২১॥

वेगादहं प्रविसृतः पवनं निरुन्ध्यां (१)
त्वन्निग्रहे तु वरगात्रि! न मे प्रयत्नः ॥२२॥

शकारः। भावे! भावे! (ङ)

(ङ) भाव! भाव!

---

किमिति। त्वम्, पदैस्त्वरितपदन्यासैः, मम पदानि पदन्यासान्, विक्षिपन्ती अतिक्रामन्ती मत्तोऽपि द्रुतं पदन्यासं कुर्वतीत्यर्थः, पतगेन्द्रात् गरुडात् भयेन अभिभूता, व्याली सर्पी इव, किं यासि गच्छसि?। हे वरगात्रि! उत्तमशरीरे! अहं वेगात् प्रविसृतो धावितः सन्, पवनं वायुमपि, निरुन्ध्यां निरोद्धुं शक्नुयाम्, किन्तु तव निग्रहे तद्वदेव वेगात् गत्वा बलपूर्वकधारणे मे मम प्रयत्नः प्रवृत्तिर्नास्ति, कोमलाया बलप्रयोगो *नोचित इत्यतः स्वयमेवागत्य मनोरथं पूरयेति भावः।*

अत्र पवननिरोधासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, श्रौती उपमा च अनयोः परस्परनिरपेक्षतया संसृष्टिः। तथा व्याली याति, त्वन्तु यासि इति पुरुषभेदात्प्रक्रमभङ्गदोषः स च "यासीरगीव पतगेन्द्रभयाभिभूता" इति पाठेन समाधेयः।

निरुन्ध्यामिति "समर्थं नाशिषीय" इति शक्यार्थे सप्तमी।

वसन्ततिलका वृत्तम् ॥२२॥

(ङ) शकार इति। भावयति चिन्तयति गूढतत्त्वमिति भावी विद्वान्। विट प्रति तत्सम्बोधनम्। "भावी विद्वान्" इत्यमरः।

---

বিট। বসন্তসেনা! তুমি দ্রুত পদক্ষেপে আমার পদক্ষেপ অতিক্রম করিয়া, গরুড়ভয়াভিভূত সর্পীর ন্যায় কেন যাইতেছ? আমি বেগে ধাবিত হইলে, বায়ুকেও আবদ্ধ করিতে পারি, কিন্তু সুন্দরি! বেগে যাইয়া বলপূর্ব্বক তোমাকে ধরিতে আমার প্রবৃত্তি হয় না ॥২২॥

(ঙ) শকার। পণ্ডিত! পণ্ডিত!।

---

(१) न रुन्ध्याम्।

एशा णाणअ-मूशिअ-काम-कशिआ, मच्छाशिआ लाशिआ,
णिण्णाशा, कुलणाशिआ, अवशिआ, कामश्श मञ्जूशिआ।
एशा वेशवहू, शुवेशणिलआ, वेशङ्गणा वेशिआ,
एशे शे दशणामके मइ कले, अज्जावि मं णेच्छदि ॥२३॥

एषा नाणक-मोषि-काम-कषिका, मत्स्याशिका, लासिका,
निर्णाशा, कुलनाशिका, अवशिका कामस्य मञ्जूषिका।
एषा वेशवधूः, सुवेशनिलया, वेशाङ्गना, वेशिका
एतान्यस्या दश नामकानि मया कृतानि, अद्यापि मां नेच्छति ॥२३॥

---

एषा इति। एषा दृश्यमाना, नाणकं मुद्राचिह्नितनिष्कादिकं मुष्णाति चोरयतीति नाणकमोषी चोरः, तस्य कामं कामवेदनां कषति हिनस्ति या सा निवर्त्तयतीति कषणशीला धनादित्वदर्थे स्वार्थे कप्रत्ययः स्त्रियामाप्प्रत्ययश्च। चोरादीनामेव प्रायेण वेश्यागमनभक्त्यादिति भावः। तथा च दर्पणे—"तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः॥" मत्स्यान् अश्नाति खादतीति मत्स्याशिका, वेश्यानां चारुत्वेनैव मत्स्यमांसखादनादित्याशयः। लासिका नृत्यकारिणी। निर्निश्चयेन नाशः अधःपातो नरकगतिर्यस्याः सा। कुलं नायकस्य च स्वस्य वा पातकेन नाशयतीति सा। अवशैव अवशिका प्रचुरदानेनापि कस्यापि वशतामनापन्ना। अयन्तु वेश्यास्वभावः। कामस्य कामव्यवहारस्य, मञ्जूषिका पेटिका, यथा पेटिकायां वसनाभरणादिकं स्थाप्यते, तथैव वेश्यायां सर्वे कामव्यवहाराः विधाय स्थाप्यन्ते इति भावः। एषा वेशस्य वेश्यालयस्य वधूः स्त्री वसन्तसेना सुवेशानां वसनभूषणादिभिः शोभनवेशानां निलया आश्रयीभूता। तथा वेशस्य वेश्यालयस्य अङ्गना स्त्री तथा विशति कामिनमिति वेशिका। मया एतानि अस्याः वसन्तसेनायाः, दश नामकानि कृतानि पठितानि, अद्यापि इदानी

---

এই বেশ্যালয়ের বধূ—চৌরগণের কামনাশিনী, মৎস্যভোজিনী, নৃত্য-কারিণী, নিশ্চিত নরকগামিনী, নায়কগণের কুলনাশিনী, সকলের অবশ্যা,

विटः । प्रसरसि भयविक्लवा किमर्थं
प्रचलितकुण्डलघृष्टगण्डपार्श्वा ।
विट-जन-नख घट्टितेव वीणा
जलधर-गर्जित-भीत-सारसीव ॥२४॥

---

मपि मां न इच्छति रमयितेति शेषः । तथा च दशनामादिपाठे देवतापि तुष्यति पाठकस्य मनोरथं पूरयति च, इयन्तु न ; सुतरां महदिदमनुचितमिति भावः ।

"माणकम् ( क्ली ) मुद्राचिह्नितनिष्कादि" इति शब्दकल्पद्रुमः । "वेशो वेश्याजनसमाश्रयः" इत्यमरः । वेशवधूरिति निर्देशमात्रं न तु नामान्तर्गतम् । अतएव नैकादशनामापत्तिः ।

शार्दूलविक्रीडितं वृत्तम् ॥२३॥

प्रसरसीति । वेगेन गमनात् प्रचलिताभ्यां कुण्डलाभ्यां घृष्टौ गण्डयोः पार्श्वौ यस्याः सा, अतएव विटजनस्य कलाकुशलजनस्य नखैः घट्टिता सम्यक्ताडिततन्त्री वीणा इव, तथा जलधरगर्जितेन मेघगर्जनेन भीता, सारसी पक्षिणीव, भयेन विक्लवा विह्वला सती, किमर्थं प्रसरसि पलायसे अपसरसि च ; नास्ति ते भयकारणमिति भावः ।

अत्र मालोपमालङ्कारः ।

पुष्पिताग्रा वृत्तम्—"अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥२४॥

---

কামের পেটিকা ( পেটরা ), সুবেশের আধার, বেশ্যালয়ের রমণী এবং যুবকগণের চিত্তপ্রবেশিনী। এই আমি ইহার দশটী নাম করিলাম ( দশ নামের স্তব পাঠ করিলাম ), এখনও আমাকে ইচ্ছা করিতেছে না! ॥২৩॥

বিট। কর্ণের কুণ্ডল দুইটী চলিতে থাকিয়া তোমার গণ্ডদ্বয়ের পার্শ্ব ঘর্ষণ করিতেছে, এই অবস্থায় তুমি, ভয়ে বিহ্বল হইয়া, নৃত্যগীতাভিজ্ঞ

शकारः। झाणज्झणन्तबहुभूशणशद्दमिश्शं
किं दोवदी विअ पलाअशि लामभीदा।
एशे हलामि शहशत्ति जधा हणूमे
विश्शावशुश्श बहिणिं विअ तं शुभद्दं ॥२५॥

चेटः। लमेहि अ लाअवल्लहं तो खाहिशि मच्छमंशकं।
एदेहिं मच्छमंशकेहिं शुणआ मलअं ण शेवन्ति ॥२६॥

झणज्झणद्बहुभूषणशब्दमिश्रं
किं द्रौपदीव पलायसे रामभीता।
एष हरामि सहसेति यथा हनूमान्
विश्वावसोर्भगिनीमिव तां सुभद्राम् ॥२५॥

रमय च राजवल्लभं ततः खादिष्यसि मत्स्यमांसकम्।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥२६॥

---

झाणेति। 'झाणज्झणत्' इत्येवंरूपो यो बहूनां भूषणानां शब्दस्तेन मिश्रं युक्तं यथा स्यात्तथा, रामभीता द्रौपदीव किं कथं पलायसे। इति तृतीयपदम्। एष अहम्, यथा हनूमान्, विश्वावसोः सिंहलद्वीपीयनृपतिविशेषस्य भगिनीं तां प्रसिद्धां सुभद्रामिव सहसा सपदि त्वां हरामि इति। इदमपि तृतीयपदम्। यथा 'हरेति पुनरुक्तम्' इतीति ध्येयम्।

वसन्ततिलका वृत्तम् ॥२५॥

---

লোকের নখসন্তাড়িত বীণার ন্যায় এবং মেঘগর্জনে ভীত সারসপক্ষিণীর ন্যায় কি নিমিত্ত সরিয়া যাইতেছ ? ॥২৪॥

শকার। বহুতর অলঙ্কারের ঝণ্ ঝণ্ শব্দ হইতেছে এই অবস্থায় তুমি, রামভীত দ্রৌপদীর ন্যায় কেন পলায়ন করিতেছ ? যেমন হনূমান্

विटः । भवति ! वसन्तसेने !

किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम् ।
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ताद्भुतं नगरदैवतवत् प्रयासि ॥२७॥

---

रमयेति । राज्ञो वल्लभ स्यालत्वात् प्रियम् । एतेनाश्लीलत्वम् ध्वनितम् । रमय रमणेन आनन्दय । तत कारणात्, मत्स्यमांस खादिष्यसि, मदनुग्रहादिति भाव । मत्स्यमांसन्तु वेश्यानामतीव प्रियमिति प्रार्थयोक्तम् । एताभ्याम्, अस्य गृहस्थिताभ्यां मत्स्यमांसाभ्यां हेतुभ्याम्, श्वान कुक्कुरा, मृतक शव न सेवन्ते अन्यत्र गत्वा न खादन्ति । अस्य गृहे एतावन्ति मत्स्यमांसानि विद्यन्ते येषां भक्षणेन पूर्णोदरा कुक्कुरा अन्यत्र गत्वा शवमांसानि न खादन्तीति सूचितम् । नीचयोग्यमेवोक्तमिदम् ।

"प्रतिपाद चतुर्द्दशमात्रत्वात् मात्रा समक छन्द" इति पृथ्वीधर । किन्तु तृतीय पादस्य षोडशमात्रत्वदर्शनेऽपि "हि" "की" इत्येकारद्वयस्य लघुत्वस्वीकाराच्चतुर्द्दशमात्रत्व मिति । तथा चोक्तम्—

"ए ओ कारौ हलन्तस्थौ गुरू वाक्यपदान्वितौ ।
दीर्घात् परौ लघू स्यातां छन्दोविचितिभाषया ॥" इति ॥२८॥

किमिति । कटीतटे निवेशित स्थापितम्, ताराभि नक्षत्राकारचिह्नै, विचित्र आश्चर्य्य अतएव रुचिरं मनोहरम्, रशनाकलाप काञ्चीरूपभूषणम्, उद्वहन्ती धार-

---

বিশ্বাবসুর ভগিনী সেই সুভদ্রাকে হরণ করিয়াছিল, আমিও সেইরূপ হঠাৎ তোমাকে হরণ করিব ॥২৫॥

ভৃত্য। রাজার প্রিয়জনের সঙ্গে তুমি ক্রীড়া কর, তাহা হইলে তুমি মৎস্য-মাংস খাইতে পারিবে। ( ইহার বাড়ীর ) মৎস্য-মাংসে সন্তুষ্ট হইয়া কুকুরগুলি আর শবের ধারে যায় না ॥২৭॥

शकारः। अह्मेहि चण्ड' अहिशालिअन्ती
वणे (१) शिआली विअ कुक्कुलेहिं।
पलाशि शिग्घ' तुलिद' शवेग'
शवेण्टण' (२) मे हलअ' हलन्ती ॥२८॥

अस्माभिश्चण्डमभिसार्यमाणा वने शृगालीव कुक्कुरैः
पलायसे शीघ्र' त्वरित सवेगे सवृन्त मे हृदय' हरन्ती ॥२८॥

न्ती, तथा निर्भर्त्सिता निर्भत्स्य चामह'। क्षिप्ता चूर्णा चूर्णकृता मनःशिला यत तादृशेन, वक्त्रेण मुखेन उपलक्षिता त्वं यथा भीता सती नगरदेवतवत् नगराधिदेवता इव, आश्चर्य यथा स्यात् तथा किं कथं प्रयासि गच्छसि ; नास्ति ते भयकारणमिति भावः।

अत लक्षितयता श्रौती उपमालङ्कारः। तथा पूर्व्ववदेव भग्नप्रक्रमतादोषः, सोऽपि च 'प्रयासि' स्थाने 'प्रयाता' इति पाठेन समाधेयः।

"कलापी भूषणे बर्हे तूणीरे संहतेऽपि च" इति विश्वः। वसन्ततिलका वृत्तम् ॥२७॥

अस्माभिरिति। वने कुक्कुरैः शृगालीव, अस्माभिश्चण्ड' शीघ्र' यथा स्यात्तथा अभिसार्य्यमाणा अनुधाव्यमाना त्वम्, वृन्तेन मूलबन्धनेन सहेति सवृन्तम्, मे मम हृदय' हरन्ती सौन्दर्य्येणाकर्षन्ती सती, शीघ्र' पलायसे किमर्थमिति शेषः। त्वरित' सवेगमिति पुनरुक्तम्।

इन्द्रवज्रोपेन्द्रवज्रयोर्मिलनादुपजातिर्नाम ॥२८॥

বিট। বসন্তসেনা! তুমি কটিদেশে স্থাপিত, নক্ষত্রমালায় চমৎকারী ও মনোহর কাঞ্চীদাম ধারণ করিতেছ এবং মনঃশিলা চূর্ণ করিয়া তাহা মুখে লেপন করিয়াছ, এই অবস্থায় ভীত হইয়া, নগরের দেবতার ন্যায় অদ্ভুতভাবে গমন করিতেছ কেন? ॥২৭॥

(१) वने। (२) सवृन्तम्।

वसन्त। पल्लवआ! पल्लवआ! परहुदिए! परहुदिए!। (च)

शकारः। सभयम्। भावे! भावे! मणुश्शे, मणुश्शे!। (छ)

विटः। न भेतव्यं न भेतव्यम्।

वसन्त। माहविए! माहविए!। (ज)

विटः। सहासम्। मूर्ख! परिजनोऽन्विष्यते। (झ)

(च) पल्लवक! पल्लवक! परभृतिके! परभृतिके!।

(छ) भाव! भाव! मनुष्यो मनुष्य। (ज) माधविके! माधविके!

(च) वसन्त इति। पल्लवतुल्यपाटलवर्णदेहत्वात् पल्लवको नाम दास, तथा परभृतिका कोकिला तत्तुल्यकण्ठस्वरशालित्वात् परभृतिका नाम दासी। उभयत्रापि स्वार्थ कप्रत्यय।

(छ) शकार इति। मनुष्यो वसन्तसेनाया सहायभूत इत्यर्थ। कथमन्यथा तत्सम्बोधनमुपपद्यत इत्याशय। अतएव च तत्कर्त्तृकाक्रमणशङ्कया सभयत्वम्।

(ज) वसन्त इति। माधवी वसन्तलतातुल्यशोभनीयत्वात् माधविकापि नाम दासी।

(झ) विट इति। परिजनो भृत्यवर्ग, न तु रक्षिसैन्य इत्यर्थ। अतो नास्ति न भयकारणमिति भाव।

शकार। বনের ভিতরে কুকুরগুলি যেমন শৃগালীর পিছনে পিছনে ধাবিত হয়, আমরাও সেইরূপ তোমার পিছনে পিছনে তীব্র বেগে ধাবিত হইয়াছি। তুমি মূলবন্ধনের সহিত আমার চিত্তকে আকর্ষণ করতঃ বেগে পলায়ন করিতেছ কেন? ॥২৮॥

(চ) বসন্তসেনা। পল্লবক! পল্লবক! পরভৃতিকা! পরভৃতিকা!।

(ছ) শকার। (ভয়ের সহিত) পণ্ডিত! পণ্ডিত! মানুষ! মানুষ!।

বিট। ভীত হইও না, ভীত হইও না।

(জ) বসন্তসেনা। মাধবিকা! মাধবিকা!।

शकारः। भावे! भावे! इत्थिअं अण्णेशदि?। (ञ)

विटः। अथकिम्। (ट)

शकारः। इत्थिआणं शदं मालेमि शूले हगे। (ठ)

वसन्त। शून्यमवलोक्य। हड्डी! हड्डी! कधं परिजणो वि परिब्भट्ठो। एत्थ मए अप्पा सअं ज्जेव रक्खिदव्वो। (ड)

विटः। अन्विष्यतामन्विष्यताम्। (ढ)

(ञ) भाव! भाव! स्त्रियमन्विष्यति?।

(ट) स्त्रीणां शतं मारयामि, शूरोऽहम्।

(ड) हा धिक् हा धिक्! कथं परिजनोऽपि परिभ्रष्टः। अत्र मया आत्मा स्वयमेव रक्षितव्यः।

(ट) विट इति। अथकिं तदेव मन्यामित्यर्थः। "अङ्गीकारेऽपि चाथकिम्" इति हैमः।

(ड) वसन्त इति। परिभ्रष्टः, प्रगाढान्धकारवशात् सहभावात् प्रच्युतो दूरे स्थित इत्यर्थः।

(ढ) विट इति। तथापि अथाहं सभीरुपूरणमन्तरेण तव नास्ति निस्तार इत्याशयः।

(ঝ) বিট। (হাস্যের সহিত) মূর্খ! পরিজনদিগকে খুঁজিতেছে।

(ঞ) শকার। পণ্ডিত! পণ্ডিত! স্ত্রীলোক খুঁজিতেছে?।

(ট) বিট। হাঁ।

(ঠ) শকার। আমি বীর পুরুষ, শত স্ত্রীলোক মারিতে পারি।

(ড) বসন্তসেনা। (শূন্য দেখিয়া) হায়! হায়! (অন্ধকার-বশতঃ) পরিজনগণ দূরে সরিয়া গিয়াছে। এখন আমার আপনাদ্বারাই আপনাকে রক্ষা করিতে হইবে।

शकारः । वशन्तशेणिए ! विलव विलव परहुदिअं वा पल्लवअं वा शव्वं वा वशन्तमाशं । मए अहिशालिअन्तीं तुमं को पलित्ताइश्शदि ? । (ण)

किं भीमशेणे जमदग्गिपुत्ते कुन्तीशुदे वा दशकन्धले वा ।
एशे हगे गेण्हिअ केशहत्थे दुश्शाशणश्शाणुकिदिं कलेमि ॥२८॥

(ण) वसन्तसेनिके ! विलप विलप परभृतिकां वा, पल्लवकं वा, सर्वं वा वसन्तमासम् । मया अभिसार्यमाणां त्वां कः परित्रास्यते ? ।

किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा ।
एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥२८॥

(ण) शकार इति । परभृतिकां कोकिलाम् पल्लवकं किसलयम् सर्वं समस्तं सहायसमेतं वसन्तमासं चैत्रम् । "पल्लवक ! पल्लवक !" इत्यादिवसन्तसेनाकृतसम्बोधनस्य द्वितीयार्थमादाय सोपहासोक्तिरियम् । अभिसार्यमाणां धारणेच्छया अनुधाव्यमानाम् ।

किमिति । भीमसेनः किं परित्रास्यते ? इत्यन्वयः वाक्यमपि नेयम् । एवमन्यत्रापि । जमदग्निपुत्रः परशुरामः । कुन्तीसुतः उक्तभीमसेनादन्यो युधिष्ठिरः अर्जुनो वा । दशकन्धरो रावणो वा । एषोऽहं तव केशहस्ते केशकलापे गृहीत्वा दुःशासनस्य द्रौपदीकेशग्रहणकारिणः इत्याशयः । अनुकृतिं वस्त्रहरणात्मकमनुकरणं करोमि ।

इन्द्रवज्रा वृत्तम् ॥२८॥

(ঢ) বিট। অন্বেষণ কর, অন্বেষণ কর।

(ণ) শকার। বসন্তসেনা! পরভৃতিকাকে, অথবা পল্লবককে, কিংবা সমস্ত চৈত্রমাসকে ( ডাকিয়া ) বিলাপ কর বিলাপ কর। আমি অনুসরণ করিতেছি, এ অবস্থায় তোমাকে কে রক্ষা করিবে?।

কি ভীমসেন? কিংবা পরশুরাম্? অথবা অর্জ্জুন? না রাবণ?।

ण' पेक्ख, ण' पेक्ख। (त)

अग्गी शुतिक्खे, बलिदे अ मत्थके,
कप्पेम शीशं उद मालएम वा।
अलं तवेदेण पलाइदेण
मुमुक्खु जे होदि, ण शे क्खु जीअदि ॥२०॥

वसन्त। अज्ज! अबला क्खु अहं। (थ)

(त) ननु प्रेक्षस्व ननु प्रेक्षस्व।

असिः सुतीक्ष्णो वलितञ्च मस्तकं
कल्पयामः शीर्षम्, उत मारयामो वा।
अलं तवैतेन पलायितेन
मुमुर्षुर्यो भवति, न स खलु जीवति ॥२०॥

(थ) आर्य्य! अबला खल्वहम्।

(त) नन्विति। प्रेक्षस्व पश्येत्यर्थः।

असिरिति। सुतीक्ष्णः असिर्मम च करवाले वर्त्तते इति शेषः, तव च मस्तकं वलितं रचितं धृतमित्यर्थः, अतएव तत् शीर्षं मस्तकं कल्पयामश्छिन्द्मः। उत मारयामो वा इति पुनरुक्तम्। एतेन तव पलायितेन पलायनेन अलम्। तत्र कारणमाह मुमुर्षुरिति। तथा च त्वं मुमुर्षुरसि, अतएव न जीविष्यसीति भावः।

अत्र प्रथमे पादे वंशस्थविलम्, द्वितीये इन्द्रवंशा, तृतीये इन्द्रवज्रा; चतुर्थे च पुनर्वंशस्थविलमिति उपजातिर्वृत्तम्। "इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम" इत्यभिधानात् ॥२०॥

এই আমি তোমার কেশকলাপ ধারণ করিয়া, ক্রন্দনের অনুসরণ করিতেছি ॥২২॥

(ত) এই দেখ, এই দেখ।

विट.। अतएव ध्रियसे। (द)

शकारः। अदो ज्जेव ण मालीअसि। (ध)

वसन्त। स्वगतम्। कधं अगुणओ वि ग्रो भअं उप्पादेदि। भोदु, एव्वं दाव। प्रकाशम्। अज्ज! इमादो किं पि अलङ्करणं तक्कीअदि?। (न)

(ध) अतएव न मार्य्यसे।

(न) कथमनुनयोऽप्यस्य भयमुत्पादयति। भवतु, एवं तावत्। आर्य्य! अस्मात् किमप्यलङ्करणं तर्क्यते?।

---

(थ) वसन्त इति। अतएव न निगृहीतव्या स्त्रीनिग्रहस्य नितरामन्याय्यत्वादिति भाव।

(द) विट इति। अतएव अबलात्वादेव ध्रियसे अनिगृह्य केवलं गृह्यसे त्वम् अस्माभिरिति शेष। रमणार्थमिति भाव।

(न) वसन्त इति। अस्य लोकद्वयस्य अनुनयोऽपीत्यन्वय। एवं वक्ष्यमाण प्रकारम्, अभिधाय निवर्त्तयामीति शेष। अस्मात् जनात् मम भक्तयादित्यर्थ। तर्क्यते अपहार्य्यत्वेन सम्भाव्यते। कश्चिदलङ्कारं दत्त्वापि निवर्त्तयितुमियमुक्तिरिति बोध्यम्।

---

আমারও অতিতীক্ষ্ণ তরবারি রহিয়াছে, তুমিও মস্তক ধারণ করিতেছ, অতএব তোমার সেই মস্তকচ্ছেদন করিব কিংবা মারিয়া ফেলিব। সুতরাং তোমার এই পলায়নে প্রয়োজন নাই। যে লোক মুমূর্ষু হয়, সে বাঁচে না ॥৩০॥

(থ) বসন্তসেনা। আর্য্য! আমি স্ত্রীলোক।

(দ) বিট। সেইজন্যই ত তোমাকে ধরিতেছি।

(ধ) শকার। এইজন্যই ত তোমাকে মারিয়া ফেলিতেছি না।

विट। शान्तम्। भवति! वसन्तसेने! न पुष्पमोषमर्हति उद्यानलता। तत् कृतमलङ्करणैः। (प)

वसन्त। ता किं क्खु दाणिं ?। (फ)

शकार। हगें देवपुलिशे मणुश्शे वासुदेवके कामइदव्वे। (ब)

(फ) तत् किं खलु इदानीम् ?।

(ब) अहं देवपुरुषो मनुष्यो वासुदेवः कामयितव्यः।

---

(प) विट इति। शान्तं तदवस्थं वाक्यं निवृत्तं भवत्वित्यर्थः। पुष्पमोषं कुसुमचौर्य्यम्। शीलादिसम्भवादिति भावः। कृतम् अलम्। न वयमलङ्कारप्रार्थिन इत्याशयः। अत्र प्रस्तुतादप्रस्तुतात् पुष्पमोषात् प्रस्तुतस्य वसनस्य अलङ्करणापहरणस्य प्रतीतेः अप्रस्तुतप्रशंसालङ्कारः।

(फ) वसन्त इति। किं खलु प्रयोजनं मम धारणेन मारणेन वा भवतीति शेषः।

(ब) शकार इति। अत्र दैवपुरुषो वासुदेवक इति पदद्वयमप्यनर्थकम्, शकारीयत्वं व्यापगतत्वात्।

---

(ন) বসন্তসেনা। (স্বগত) হায়! ইহাদের অনুনয়ও যে ভয় জন্মাইতেছে। হউক, এইরূপ (বলিয়া ইহাদিগকে নিবৃত্ত করি)। (প্রকাশ্যে) আর্য্য! এই ব্যক্তি হইতে কোন অলঙ্কার লইবেন বলিয়া যত্ন করিতেছেন কি?।

(প) বিট। ওরূপ বলিও না। বসন্তসেনা! উদ্যানের লতা পুষ্পাপহরণ সহিতে পারে না। সুতরাং অলঙ্কারের কোন প্রয়োজন নাই।

(ফ) বসন্তসেনা। তবে আমাকে ধরিয়া বা মারিয়া আপনার ফল কি?।

वसन्त। सक्रोधम्। सन्तं सन्तं। अवेहि, अणज्जं मन्तेसि। (भ)

शकारः। सहस्ततालं विहस्य। (१) भावे! भावे! पेक्ख दाव। अन्तलेण शुशिणिद्धा एशा गणिआदालिआ मं। जेण मं भणादि, एहि शन्तेशि किलिन्तेशि त्ति। हगे गामन्तलं ण णअलन्तलं वा ण गडे। अज्जुके! (२) शवामि भावश्श शीशं, अत्तणकेहिं पादेहिं। तव ज्जेव पश्चाणुपश्चिआए आहिण्डन्ते शन्ते किलिन्ते म्हि संवुत्ते। (म)

(भ) शान्तं शान्तम्। अपेहि अनार्य्यं मन्त्रयसि।

(म) भाव! भाव! प्रेक्षस्व तावत्। अन्तरेण सुस्निग्धा एषा गणिकादारिका माम्। येन मां भणति—एहि, श्रान्तोऽसि क्लान्तोऽसि। अहं न ग्रामान्तरं न नगरान्तरं वा गतः। अज्जुके! शपे भावस्य शीर्षम्, आत्मीयाभ्यां पादाभ्याम्। तवैव पश्चादनुपथिकया आहिण्डमानः श्रान्तः क्लान्तोऽस्मि संवृत्तः।

---

(भ) वसन्त इति। शान्तं शान्तं तदिदम् वाक्यम्, सर्वथा निवृत्तं भवत्विदम्। अपेहि दूरं गच्छ, अनार्य्यम् असभ्योचितम्, मन्त्रयसि ब्रवीषि।

(म) शकार इति। अन्तरेण अन्तःकरणेन, सुस्निग्धा मां प्रति अतीवस्नेहकारिणी।

---

(ব) শকার। আমি দেবপুরুষ, মনুষ্য ও বাসুদেব। সুতরাং আমাকে ভজনা করিতে হইবে।

(ভ) বসন্তসেনা। (ক্রোধের সহিত) ওরূপ বলিবেন না, ওরূপ বলিবেন না। দূর হউন, অসভ্যের যোগ্য কথা বলিতেছেন।

---

(१) सतालिकं विहस्य।

(२) अज्ज।।

विट:। स्वगतम्। अये। कथं श्रान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः। प्रकाशम्। वसन्तसेने! वेशवासविरुद्ध-मभिहितं भवत्या। पश्य—(य)

ननु निपतितम्। भट्टुके। गणिके। आत्मीयाभ्यां स्वकीयाभ्याम्, पादाभ्यां भावस्य विटस्य, शीर्षं मस्तकं स्पृष्ट्वेति शेषः, शपे शपथं करोमि। किं तदित्याह—त्वदिति। पश्चात्पश्चिकया पश्चात् पश्चात् गत्या, पृषोदरादित्वात् साधु। आहिण्डमानो धावन्।

मानलक्षणमाह मार्कण्डेयपुराणम्—

"तथा मृदङ्गजनप्राया सुसम्बद्धतयीवका।
वेदीपयोगभूमध्ये वसतिर्गामसंज्ञिका॥"

नगरलक्षणमुक्तममरकोषटीकायां रघुनाथेन—

"देवतायतनैश्चित्रं प्रासादापणवेश्मभिः।
नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनं॥"

(य) विट इति। वेशो वेश्यालये यो वासस्तस्य विरुद्ध "श्रान्त श्रान्त" इत्यादिक-मित्यर्थं। तथा च यदि त्वमेवमेव श्रान्ता भवसि तदा कथं वेश्यालये वससीति भाव।

---

(म) शकार। (হাতে তালি দিয়া হাস্য করিয়া) পণ্ডিত। পণ্ডিত। দেখুন একবার। এই বেশ্যার মেয়ে, মনে মনে আমাকে খুব ভাল বাসিতেছে, যে হেতু, আমাকে বলে—"আসুন, শ্রান্ত হইয়াছেন, ক্লান্ত হইয়াছেন। আমি ত গ্রামান্তরেও যাই নাই, নগরান্তরেও যাই নাই।" ওহে বেশ্যা। আমি, এই পণ্ডিতের মাথায় ও নিজের পায়ের শপথ করিতে পারি যে, আমি তোমারই পিছনে পিছনে দৌড়াইতে দৌড়াইতে শ্রান্ত ও ক্লান্ত হইয়া পড়িয়াছি।

(য) বিট। (স্বগত) কি আশ্চর্য্য। 'শান্ত' এইরূপ বলিয়াছে, তাহাতে মূর্খ বেটা 'শ্রান্ত' এইরূপ বুঝিয়াছে, বসন্তসেনা। তুমি বেশ্যা-লয়ে বাস করার বিরুদ্ধ কথা বলিয়াছ। দেখ—

तरुणजनसहायश्चिन्त्यतां वेशवासः
विगणय गणिका त्वं मार्गजाता लतेव।
वहसि हि धनहार्य्यं पण्यभूतं शरीरं
सममुपचर भद्रे! सुप्रियं चाप्रियञ्च ॥२१॥

तरुणेति। तरुणजना एव सहाया रतिबन्धुत्वेन सहचरा यत्र स तादृशः, आत्मनः वेशे वेश्यालये वासश्चिन्त्यताम्। चिन्तयित्वा च अस्माकमपि तरुणजनान् रतिबन्धुं कुरु इत्याशयः। मार्गे पथि जाता लतेव त्वं गणिका सर्वभोग्या वश्या इति विगणय विचारय। सुतरामस्माकमपि भोग्यत्वे तव बाधा नोचितेत्यभिप्रायः। तथा धनेनैव हार्यं शुल्कदानभावेनैव ग्राह्यम्, अतएव पण्यभूतं हि विक्रेयद्रव्यतुल्यमेव शरीरं वहसि धारयसि। अतएव हे भद्रे! सुप्रियं रूपादिना अत्यन्तप्रीतिकरञ्च, अप्रियं कर्कशवादित्वादिना अप्रीतिकरञ्च जनम्, समं तुल्यमेव, उपचर भज। तथा च कर्कशवादित्वेनाप्रियत्वेऽपि तद्दे शुल्कदातृत्वादस्मानपि भजेति भावः।

अत्र चतुर्थचरणार्थं प्रति तृतीयचरणगतवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गम्, "सुप्रियञ्चाप्रियञ्च" इति अप्रस्तुतात् जनसामान्यात् प्रस्तुतयोर्विटशकारयोः प्रतीतेरप्रस्तुतप्रशंसा च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि पुनः प्रागुक्तोपमया संसृज्यते। तथा "चिन्त्यताम्" इति कर्मणि प्रत्ययं प्रक्रम्य "विगणय" इत्यादिकर्त्तृप्रत्ययाभिधानात् भग्नप्रक्रमतादोषः, स तु "अर तरुणसहाय वेशवास स्वकीयम्" इति प्रथमचरणपाठेन समाधेयः।

"वेशो वेश्याजनसमाश्रयः" इत्यमरः। मालिनी वृत्तम् ॥२१॥

বেশ্যালয়ে বাস, তাহাতে যুবকগণই সহচর হয়, ইহা চিন্তা কর। পথে উৎপন্ন লতার ন্যায় তুমি বেশ্যা, ইহাও গণনা কর। বিক্রেয় দ্রব্যেরই তুল্য, তুমি ধনহার্য্য দেহ ধারণ করিতেছ, সুতরাং হে ভদ্রে! অত্যন্তপ্রিয় ও অপ্রিয়জনকে সমানভাবে ভজনা কর ॥৩১॥

वसन्त। गुणो क्खु अणुराअस्स कारणं, ण उण बलक्कारो। (ल)

शकारः। भावे! भावे! एशा गब्भदाशी कामदेवाअदणु

(ल) गुणः खलु अनुरागस्य कारणम् न पुनर्बलात्कारः।

---

"त्वं वापीव लतेव नौरिव समं सेव्यस्य साधारणी" इति पाठे न तयोः समाधानम्। तथा च वापीव लतेव नौरिव च त्वं साधारणी अतएव समं सर्वं जनं सेवस्व इत्यर्थकतया साधारणत्वस्य एव वापीत्वादीनां सम्बन्धात् विधिभेदेन भग्नप्रक्रमता, "वहसि" इति वाक्यान्तराभावाच्च न समर्थितेति। "समं साध्वं खलु सहक" इति हेमचन्द्रः।

नमनं नाम इति नमतेर्भावे घञ्। स च नामशब्दः कण्ड्वादौ पठ्यते। तथा च मुग्धबोधटीकायां दुर्गादासः —"कण्ड्वादिराकृतिगणः" इति। कलापचन्द्रादौ तु पथा स्ययोऽप्येवम्। तत् नाम करोतीत्यर्थे "कण्ड्वादिभ्यो यक्" इति यकि "अस्य च लोपः" इत्यकारलोपे नाम्यतीति रूपसिद्धिः। एवञ्च "सखीमकण्डूयत हस्ताग्रेण" इत्यादौ यथा करणक्रियाफलभूतकण्डूयनाश्रिततया सखीप्रभृतेः कर्मत्वम्, तथात्रापि करणक्रियाफलभूतनमनाश्रिततया लतायाः कर्मत्वमुपपद्यते। नामितेति इत्यन्तनमधातोः कर्मणि क्तः, "ज्वल ह्वल ह्मल नमोऽनुपसर्गाद्वा" इति पक्षे मानुबन्धत्वादीकारात् ह्रस्वः।

शार्दूलविक्रीडितं वृत्तम् ॥३२॥

(ल) वसन्त इति। बलात्कारः प्रसह्य प्रवृत्तिः। तथा च मम वश्यत्वे न साधारण्ये सत्यपि युवयोर्विद्यारूपादिसाहचर्यगुणाभावात् बलात्कारप्रवृत्तेश्च अनुरागो नास्तीति तत्प्रयुक्ता कामप्रवृत्तिरपि नास्तीति भावः।

---

করিয়াছিল, এখন কাকও, আরোহণ করিয়া সেই পুষ্পিত লতাকে নত করে, ব্রাহ্মণ, ক্ষত্রিয় ও বৈশ্য যে নৌকাতে পার হন, সেই নৌকাতেই ইতরবর্ণও পার হয়। সুতরাং তুমি বেশ্যা হইয়াছ, অতএব সেই দীর্ঘিকার ন্যায়, লতার ন্যায় এবং নৌকার ন্যায়, সকল লোককে ভজনা কর ।৩২।

(ল) বসন্তসেনা। গুণই অনুরাগের কারণ, কিন্তু বলপ্রয়োগ নহে।

ज्जाणादो पहुदि ताह दलिद्दचालुदत्ताह अणुलत्ता ण मं कामेदि। वामदो तश्श घलं। जधा तव मम अ हत्थादो एशा ण पलिब्भंशदि, तधा कलेदु भावे। (ब)

विटः। स्वगतम्। यदेव परिहर्त्तव्यं तदेवोदाहरति मूर्खः। कथं वसन्तसेना आर्य्यचारुदत्तमनुरक्ता। सुष्ठु खल्विदमुच्यते— "रत्नं रत्नेन सङ्गच्छते" इति। तद्गच्छतु, किमनेन मूर्खेण। प्रकाशम्। काणेलीमातः! वामतस्तस्य सार्थवाहस्य गृहम्?। (श)

(ब) भाव! भाव! एषा गर्भदासी कामदेवायतनात् प्रभृति तस्य दरिद्रचारुदत्तस्य अनुरक्ता, न मां कामयते। वामतस्तस्य गृहम्, यथा तव मम च हस्तात् एषा न परिभ्रश्यति, तथा करोतु भावः।

(ब) शकार इति। गर्भादवधि दासी गर्भदासी साधारणभोग्यतया साधारणस्त्रीव गणिकेत्यर्थः। कामदेवायतनं नाम उद्यानं तस्मात्।

(श) विट इति। यदेव चारुदत्तगृहपरिचयप्रदानम्, परिहर्त्तव्यं परित्याज्यम्; अन्यथा यदि तत्र पलायेत, तं वा आह्वयेत्, यदृच्छया कोऽपि वा आगत्य परित्राणसहायतां कुर्य्यादिति भावः। गच्छतु चारुदत्तगृहमेव वसन्तसेनेति शेषः। अनेन मूर्खेण शकारेण, किं प्रयोजनम्, वसन्तसेनाया इति शेषः। न खलु गुणवती मूर्खे प्रत्यनुरज्यतीति भावः। काणेली कन्यावस्थासम्पन्ना माता यस्य तत्सम्बोधनम्। मातुः कन्यावस्थायामेव यो जायते स काणेलीमातेत्यर्थः। तथा च हैमप्रकाशः —"काणेली

(ব) শকার। পণ্ডিত! পণ্ডিত! এই জন্মদাসী, কামদেবায়তন সন্দর্শন হইতে সেই দরিদ্র চারুদত্তের প্রতি অনুরক্ত হইয়া, আমাকে আর ইচ্ছা করে না। বাঁ দিকে সেই চারুদত্তের বাড়ী। সুতরাং যাহাতে এ, তোমার ও আমার হাত হইতে বিচ্যুত না হয়, তুমি তাহা কর।

शकारः। अधइं, वामदो तस्स घलं। (ध)

वसन्त। स्वगतम्। अम्महे। वामदो तस्स गेहं त्ति जं सच्चं, अवरज्झन्तेण वि दुज्जणेण उवकिदं। जेण पिअसङ्गमं पाविदं। (न)

(ध) अथ किम् वामतस्तस्य गृहम्।

(न) अहो ! वामतस्तस्य गृहमिति यत्सत्यम्, अपराध्यतापि दुर्ज्जनेन उपकृतम्। येन प्रियसङ्गमं प्रापितम्।

---

कन्यका माता" इति। कन्यका सत्येव माता कन्यकामाता। अतएव कुत्साद्योतकमिदं सम्बोधनम्।

(न) वसन्त इति। यत्सत्यमित्येकमिवाव्ययं सत्यार्थे। अपराध्यता कुत्सित-प्रार्थनादिनेति भावः। प्रियस्य चारुदत्तस्य सङ्गमं सम्मेलनम्।

प्रापितमिति भावे क्तप्रत्ययात् "कर्त्तृप्रयोगे नियमार्थाया" इति षष्ठीनिषेधेन प्रियसङ्गममित्यत्र द्वितीयैव। तथा चोक्तं श्रीपतिना—"गतं ग्रामगमनेनेत्यपि मतं न" इति।

अत्र चारुदत्तं प्रति वसन्तसेनाया अनुरागरूपकाव्यार्थस्योत्पत्तेरुपक्षेपो नाम मुखसन्ध्यङ्गम्। यथा दर्पणे—

"काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः।"

---

(দ) বিট। (স্বগত) যাহাই বলিতে হইবে না, মূর্খবেটা তাহাই বলে। বসন্তসেনা আর্য্য চারুদত্তের প্রতি অনুরক্ত হইয়াছে। বেশ্। অতএব লোকে এ কথা ভালই বলে যে, "রত্ন রত্নের সঙ্গে মিলিত হয়।" অতএব বসন্তসেনা চারুদত্তের বাড়ীই যাউক, এ মূর্খকে দিয়া উহার কি হইবে?। (প্রকাশ্যে) কাণেলীর পুত্র! বা' দিকে সেই বণিকের বাড়ী?।

(ধ) শকার। হাঁ। বা' দিকেই তাহার বাড়ী।

(ন) বসন্তসেনা। (স্বগত) ভাল। দুষ্টলোক অপরাধ করিয়াও

शकारः । भावे ! भावे ! वलिए क्खु अन्धआले माशलाशिपविट्ठा विअ मशिगुडिआ दीशन्दी ज्जेव पणट्ठा वशन्तशेणिआ । (ह)

विटः । अहो ! बलवानन्धकारः । तथाहि—

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना ।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥३३॥

(ह) भाव ! भाव ! बलीयसि खल्वन्धकारे माषराशिप्रविष्टेव मषीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना ।

(ह) शकार इति । माषराशौ माषाख्यशस्यपुञ्जे प्रविष्टा, मस्या गुटिका वटिका प्रनष्टा अदर्शनं गता ।

आलोकेति । आलोके दर्शने विशाला महती गुरुतरप्रसारशालिनीत्यर्थः, मे मम दृष्टिश्च, सहसा हठात् तिमिरप्रवेशेन विच्छिन्ना व्याहता । अतएव उन्मीलितापि अन्धकारेण निमीलितेव पुनर्मुद्रितेव जाता, दर्शनशक्तिशून्यीकृतत्वादिति भावः ।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः । "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग्दृष्टि" इत्यमरः । आर्या जातिः ॥३३॥

"বা' দিকে তাহার বাড়ী" এই কথা বলিয়া সত্যই উপকার করিয়াছে। যে হেতু, প্রিয়সম্মেলন ঘটাইয়া দিয়াছে।

(হ) শকার। পণ্ডিত! পণ্ডিত! রাশীকৃত মাষকলাইয়ের ভিতরে কালীর গুঁড়োর মত, বসন্তসেনা দেখিতে দেখিতেই প্রবল অন্ধকারে লুকাইয়া গেল।।

বিট। ও! প্রবল অন্ধকার। তাহা দেখ—

অত্যন্ত-দর্শন-শক্তিশালী আমার নয়ন, হঠাৎ অন্ধকার প্রবেশ করায় প্রতিহত হইয়া গিয়াছে এবং নয়নকে উন্মীলিত করিলেও অন্ধকার যেন আবার তাহাকে মুদ্রিত করিয়া দিতেছে।৩৩।

अपि च, लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥३४॥

शकारः । भावे ! भावे ! अण्णेशामि वशन्तशेणिअं ? । (च)

विटः । काणेलीमातः ! अस्ति किञ्चिच्चिह्नम् ? यदुपलक्षयसि । (क)

(च) भाव ! भाव ! अन्विष्यामि वसन्तसेनिकाम् ? ।

---

लिम्पतीति । तमः अन्धकारः, अङ्गानि लिम्पतीव लिप्तानि करोतीव, नभः आकाशम्, अञ्जनं कज्जलम्, वर्षतीव, तथा दृष्टिः असत्पुरुषसेवेव दुर्जनपरिचर्येव, विफलतां गता, वस्तूपलम्भाभावादिति भावः ।

अत्र केचिदालङ्कारिका अलेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षन्ते एवं वर्षतीत्यत्रापीति तेषां मते जात्युत्प्रेक्षाद्वयम् । अपरे तु तमःकर्तृकव्यापनं तत्कर्तृकलेपनत्वेन एवं तमःपतनम् आकाशकर्तृकाञ्जनवर्षणत्वेनोत्प्रेक्षन्त इति तेषां मते जात्युत्प्रेक्षाद्वयम् । पराद्धे च श्रौती सम्पूर्णोपमा उभयोर्मिथोनिरपेक्षतया च संसृष्टिः ।

अस्य तु पूर्वार्द्धं काव्यादर्शे काव्यप्रकाशसाहित्यदर्पणादौ दृश्यते ।

एतेन इदानीमिव तदानीं राजधानीस्थराजमार्गेऽपि नालोकदानव्यवस्था आसीदिति प्रतीयते ॥३४॥

---

আরও, অন্ধকার যেন সমস্ত অঙ্গ লিপ্ত করিয়া দিতেছে, আকাশ যেন কাজল বর্ষণ করিতেছে এবং অসৎ পুরুষের সেবার ন্যায় দৃষ্টি বিফলতা প্রাপ্ত হইতেছে ॥৩৪॥

(ক) শকার। পণ্ডিত ! পণ্ডিত ! বসন্তসেনাকে অন্বেষণ করি ?।

(খ) বিট। কাণেলীর পুত্র ! কোন চিহ্ন আছে কি ? যাহা লক্ষ্য করিয়া অন্বেষণ করিতে পার।

शकारः। भावे! भावे! किं विश्र? । (ख)

विटः। भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा। (ग)

शकारः। शुणामि मल्लगन्धं अन्धआलपूलिदाए उण णाशिआए शुव्वत्तं, उण ण पेक्खामि भूषणशद्दं। (घ) (१)

विटः। जनान्तिकम्। वसन्तसेने! (ङ)

(ख) भाव। भाव। किमिव?।

(घ) शृणोमि माल्यगन्धम् अन्धकारपूरितया पुनर्नासिकया सुव्यक्तम्, पुनर्न प्रेक्षे भूषणशब्दम्।

(क) विट इति। यदुपलक्षयसि यदुपलक्ष्यामीत्युक्तवानसि।

(ग) विट इति। सौरभ्येण घ्राणतर्पिकारत्वेन अनुविद्धं युक्तम्, घ्राणतर्पिकार-मित्यर्थः, उपलक्षयसीति पूर्वेणान्वयः। "सुरभिर्घ्राणतर्पण" इत्यमरः।

(घ) शकार इति। अत्र माल्यगन्धं जिघ्रामि, अन्धकारपूरितया दृष्ट्या न प्रेक्षे, न वा शृणोमि भूषणशब्दमिति वक्तव्ये सर्वमेवैतदपार्थमज्ञमधीतम्।

(ङ) विट इति। जनान्तिकलक्षणं यथा साहित्यदर्पणे—

"त्रिपताककरेणान्यानपवार्यान्तरा कथाम्।
अन्योन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम्॥"

(খ) শকার। পণ্ডিত। পণ্ডিত। কি রকম (কিরূ)?।

(গ) বিট। অলঙ্কারের শব্দ, কিংবা নাসিকার তৃপ্তিকর মাল্যের গন্ধ।

(ঘ) শকার। অন্ধকারপূর্ণ নাসিকাদ্বারা সুস্পষ্ট মাল্যগন্ধ শুনিতেছি, কিন্তু অলঙ্কারের শব্দ দেখিতেছি না।

(ঙ) বিট। (জনান্তিকে) বসন্তসেনা। দুইখানি মেঘের মিত-

(१) शृणोमि मल्लगन्धं अन्धआलपूलिदाए उण णाशिआए ■ शुव्वत्तं पेक्खामि भूषणशद्दं।

दुर्वर्णोऽसि विनष्टोऽसि दशस्वर्णस्य कारणात्।
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया ॥१३॥

माथुरः। भट्टा! तुए दशसुवण्णु कल्लवत्तु, मए एशु विहवु। (ह)

(ह) भर्त्तः! तव दशसुवर्णं कल्यवर्त्तं, मम एष विभवः।

---

दुर्वर्ण इति। अरे माथुर! त्वं दुर्वर्णोऽसि नीचजातीयोऽसि, तथा विनष्टोऽसि परलोकाद्भ्रष्टोऽसि। कुत इत्याह—येन त्वया, दशानां स्वर्णानां समाहार इति तस्य दशसुवर्णस्येत्यर्थः, कारणात् पञ्चभिरिन्द्रियैः कर्णत्वक्चक्षूरसनानासिकाभिः समायुक्तः पूर्णसर्वाङ्ग इत्यर्थः, नरो मनुष्यो व्यापाद्यते हन्यते। येन तुच्छधननिमित्तं महाप्राणी मानुषो हन्तुं प्रक्रम्यते स खलु दुर्वर्णो विनष्टश्चेति भावः।

अत्र दुर्वर्णता विनाशयोः प्रति पदवाक्यार्थस्य कारणत्वात् काव्यलिङ्गमलङ्कारः ॥१३॥

(ह) माथुर इति। भर्त्तः! धनस्वामिन्!। कल्यवर्त्तं पूर्ववत् व्याख्यानात् क्षणस्थायि क्षणस्थायित्वेन तुच्छमित्यर्थः। किन्तु मम एष विभवो धनं धनत्वेन नितरामादरणीयमिति तात्पर्यम्। अतो नाहं तुच्छत्वेनेदं परित्यक्तुमर्हामीति भावः। सोल्लुण्ठनोक्तिरियम्। एष इति प्रक्रम्यमाणविभवविशेषणत्वात् पुंलिङ्गम्।

"अर्थ रै विभवा अपि" इत्यमरः।

---

[স] দর্দুরক। ওরে মূর্খ! দশখানা মোহর আমি ওয়াধা করিয়া দিব। তা' যার ধন আছে, সে কি তাহা কোলে করিয়া দেখায়?। ওবং।

তুমি নীচজাতি এবং পরলোকচ্যুত হইয়াছ, যে তুমি দশখানা মোহরের জন্য, পঞ্চেন্দ্রিয়যুক্ত [ আস্ত নিটোল ] একটা মানুষকে মারিয়া ফেলিতেছ ॥১৩॥

[হ] মাথুর। মহাশয়! তোমার নিকট দশখানা মোহর ক্ষণস্থায়ী তুচ্ছ, কিন্তু আমার ইহা সম্পত্তি।

दर्दुरः । यद्येवम्, श्रूयतां तर्हि; अन्यान् तावत् दश-सुवर्णानस्यैव प्रयच्छ । अयमपि द्यूतं शीलयतु । (घ)

माथुरः । ता किं भोदु ? । (१) (क)

दर्दुरः । यदि जेष्यति तदा दास्यति ।

माथुरः । अह ण जिणादि । (ख)

दर्दुरः । तदा न दास्यति ।

माथुरः । अह ण जुत्तं जम्पिदुं । एव्वं भणन्तो तुमं पअच्छ, धुत्तआ ! । अहं पि णाम माथुरु धुत्तु जूदं मिथ्या आदंसआमि । अण्णस्स वि अहं ण बिभेमि । धुत्ता ! खण्डिअवुत्तोसि तुमं । (ग)

(क) तत् किं भवतु ? ।

(ख) अथ न जयति ? ।

(ग) अथ न युक्तं जल्पितुम् । एवमाचक्षाणस्त्वं प्रयच्छ धूर्त्तक ! अहमपि नाम

(घ) दर्दुरक इति । अस्यैव स वाहकस्यैव, प्रयच्छतु धारयाणिन अर्पयतु । अयं संवाहकः । शीलयतु आचरतु पुनरपि द्यूतक्रीडां करोत्वित्यर्थः ।

(क) माथुर इति । तदित्यस्य अन्यथात्वात् तत इत्यर्थः ।

[ঘ] দর্দুরক । যদি ইহাই হয়, তবে শোন, তাহা হইলে আরও দশখানা মোহর উহার নিকট দাও, এও, পাশা খেলুক ।

[ক] মাথুর । তাহাতে কি হইবে ? ।

দর্দুরক । যদি জয় করিতে পারে, তবে দিবে ।

[খ] মাথুর । যদি জয় করিতে না পারে ? ।

দর্দুরক । তবে দিবে না ।

(१) तत् किं ।

दर्दु। अरे! कः खण्डितवृत्तः?।

माथुर। तुमं क्खु खण्डिअवुत्तो। (घ)

दर्दु। पिता ते खण्डितवृत्तः। संवाहकस्य अपक्रमितुं संज्ञां ददाति। (ङ)

माथुरो धूर्त्तं द्यूतं मिथ्या आदर्शयामि। अन्यस्मादपि अहं न बिभेमि। धूर्त्त! खण्डितवृत्तोऽसि त्वम्।

(घ) त्वं खलु खण्डितवृत्तः।

---

(ग) माथुर इति। अस्मिन् त्वया सार्द्धमनर्थकं वक्तुम् न युक्तं तव वाक्यस्य असारत्वादिति भावः। एवं संवाहकस्य धारणाविना दशसुवर्णदानम् आत्मश्लाघी भवन्। माथुरो धूर्त्त परधनलाभकलानिपुण इति भावः। आदर्शयामि आदर्शीकृत्य पर्यटामि द्यूतक्रीडायामात्मनो तथा प्राधान्य प्रदर्श्य परिभ्रमामीत्यर्थः, यदि तव बुद्ध्या प्रतारितो भवामीत्याशयः। अन्यस्मात् त्वद्भिन्नात् जनादपि अहं प्रतारणाया न बिभेमि। मथुरा वासित्वेन महाचतुरत्वादिति भावः। खण्डितं छिन्नं चरितं यस्य सः दुश्चरितोऽसि त्वं, अतः परप्रतारणाकरणादित्याशयः।

(ङ) दर्दु इति। अपक्रमितुं पलायितुम् संज्ञां सङ्केतम् ददाति नयन भङ्ग्येत्यर्थः।

---

(গ) মাথুর। তোমার সঙ্গে জল্পনা করা উচিত নহে। ধূর্ত্ত! তুমি যখন এইরূপ বলিতেছ, তখন তুমিই দাও। আমিও, মাথুরনামে ধূর্ত্ত, যদি তোমাদ্বারা প্রতারিত হই, তবে মিথ্যা পাশা দেখাইয়া বেড়াই। আমি অন্য লোক হইতেও ভীত নহি। ধূর্ত্ত! তুমি চরিত্রহীন হইয়াছ।

দর্দ্দুরক। অরে! কে চরিত্রহীন?।

[ঘ] মাথুর। তুমি চরিত্রহীন।

[ঙ] দর্দ্দুরক। তোর বাপ চরিত্রহীন। [পলাইবার জন্য সংবাহককে সঙ্কেত করিল।]

माथुरः । गोसाविश्आपुत्ता ! णं एव्वं ज्जेव जूदं तुए सेविदं ? । (च)

दर्दुः । मया एवं द्यूतमासेवितम् । (छ)

माथुरः । अले संवाहआ ! पअच्छ तं दशसुवण्णं । (ज)

संवा । अज्ज दइश्शं, टाव दइश्शं । (झ)

माथुरः । कर्षति । (ञ)

दर्दुः । मूर्ख ! परोक्षे खल्लीकर्त्तुं शक्यते, न ममाग्रतः खल्लीकर्त्तुम् । (ट)

(च) वेश्यापुत्र ! एवमेव द्यूतं त्वया सेवितम् ? ।

(ज) अरे संवाहक ! प्रयच्छ तत् दशसुवर्णम् ।

(झ) अद्य दास्यामि तावत् दास्यामि ।

[च] माथुर इति । 'गोसाविश्' इति देशीयपदं वश्येति तदर्थः । एवमेव प्रतारणागमनमेव ।

(छ) दर्दुर इति । मयवात्मिप्रियम् । एवं महाचातुर्येण परान् प्रतार्य्यत्यर्थः ।

(झ) संवा इति । तावत् सकलमेव । "यावत्तावच्च साकल्ये" इत्यमरः ।

(ञ) माथुर इति । कर्षति दशसुवर्णग्रहणार्थं संवाहकमिति शेषः ।

(ट) दर्दुर इति । परोक्षे मम असमक्षे, खल्लीकर्त्तुम् अधमीकर्त्तुम् आयत्तीकर्त्तुमित्यर्थः । खल्लशब्दाभिधानं पूर्वमेव दर्शितम् ।

[च] माথুর। ওরে বেশ্যাপুত্র! তুই এই ভাবেই পাশা খেলিয়াছিস।

[ছ] দর্দুরক। আমি এই ভাবেই পাশা খেলিয়াছি।

[জ] মাথুর। ওরে সংবাহক! সেই দশখানা মোহর দে।

[ঝ] সংবাহক। আজ দিব, সবই দিব।

(ঞ) মাথুর। (ধরিয়া টানিতে লাগিল)

माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति। संवाहकः सशोणितं मूर्च्छां नाटयन् भूमौ पतति। दर्दुरक उपसृत्य अन्तरयति। माथुरो दर्दुरं ताडयति। दर्दुरोऽपि प्रतीपं ताडयति। [ठ]

माथुरः। अले अले दुट्ट! छिणालिआपुत्तआ! फलं पि पाविहिसि। (ड)

दर्दु। अरे मूर्ख! अहं त्वया मार्गगत एव ताड़ितः; श्वो यदि राजकुले ताड़यिष्यसि, तदा द्रक्ष्यसि। (ढ)

(ड) अरे अरे दुष्ट! पुंश्चलीपुत्रक! फलमपि प्राप्स्यसि।

(ठ) माथुर इति। घोणायां नासिकायाम्। अन्तरयति स्वयं मध्ये स्थित्वा व्यवधानं करोति। "अन्तरा वन्तरेण विना मध्ये व्यवधानेऽन्तरात्मनि। बहिर्योगेऽवकाशे च विशेषेऽवसरेऽन्तरम्॥" इत्यनेकार्थध्वनिमञ्जरी। विपरीतं प्रतीपम्।

(ड) माथुर इति। छिणालिआपुत्तओऽपि देशीयः पुंश्चल्यर्थे। पुंश्चली कुलटा, तत्पुत्रक इति कुत्सायां कप्रत्ययः।

(ढ) दर्दु इति। मार्गगत एव पथिकभूत एव, न पुनरपराधीति ज्ञात्वा ताड़ित इत्यर्थः, अपराधेन विना पथिकस्य ताड़नमत्यन्तमेवानुचितमिति भावः। पुनश्च श्वः परदिने, राजकुले राजभवने, यदि ताड़यिष्यसि अभियोगमुपस्थाप्य राजदण्डमानीय

(ট) দর্দুরক। মূর্খ! আমার অসমক্ষে আবদ্ধ করিতে পারিতে; কিন্তু আমার সম্মুখে নহে।

(ঠ) ( মাথুর সংবাহককে আকর্ষণ করিয়া, তাহার নাসিকার উপরে মুষ্টি প্রহার করিল। সংবাহক শোণিতপাতের সহিত মূর্চ্ছার অভিনয় করিয়া ভূতলে পড়িল। দর্দুরক নিকটে যাইয়া উভয়ের মধ্যে পড়িয়া ব্যবধান করিল। মাথুর দর্দুরককে প্রহার করিল, দর্দুরকও মাথুরকে প্রহার করিল )।

(ড) মাথুর। ওরে ওরে বেশ্যাপুত্র! তুই ইহার ফলও পাইবি।

यथा किल, "आर्य्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यति इति सर्व्वश्च अस्मद्विधो जनः तमनुसरति"। तदहमपि तत्समीपमेव गच्छामि। इति निष्क्रान्तः। (ध)

संवा। संवाहः परिक्रम्य दृष्ट्वा। एशे कश्शवि अणावुदपक्ख-दुआलके गुहे। ता एत्थ पविशिश्शं। प्रवेशं रूपयित्वा वसन्तसेनामालोक्य। अज्जे! शलणागदे म्हि। (न)

(न) एतत् कस्यापि अनपावृतपक्षद्वारकं गेहम्। तदत्र प्रविशामि। आर्य्ये! शरणागतोऽस्मि।

---

(ध) द्रष्टुं इति। शर्व्विलकेन तदाख्येन केनचिज्जनेन। एतस्य चरितमपि परस्तात् व्यक्तीभविष्यति। आर्य्यकेति संज्ञायां कप्रत्ययः। गोपालदारको गोपपुत्रः। सिद्धो मन्त्रदेवतादिसिद्धः कश्चित् त्रिकालज्ञो लोकस्तस्य, आदिश्यते अनेनेति च देशो वाक्यं तेन, समादिष्टो निर्द्दिष्टः। गच्छामीति। अन्यथा वर्त्तमानो राजा माथुरादिसभिकपक्षपातित्वेन माथुरक्षताभियोगमात्रमेव मा निर्यातयिष्यतीति भावः।

अत्र आर्य्यो नाम नाट्यालङ्कारः। यथा साहित्यदर्पणे—"यद्वचं गुणवत् कार्य्यहेतीरार्य्य उच्यते।"

(न) एशे इति। अनपावृतं कपाटाभ्यामनवरुद्धम् उद्घाटितकपाटमित्यर्थः। पक्षद्वारं पार्श्वद्वारं यस्य तत्।

---

(ধ) দর্দুরক। (স্বগত) সভাপালকের সঙ্গে আমি বিবাদ করিলাম, অতএব এখানে আর থাকা উচিত নহে। প্রিয়সুহৃৎ শর্বিলক আমার নিকট বলিয়াছেন যে, "সিদ্ধপুরুষের আদেশে আর্য্যকনামে গোপবালক রাজা হইবেন; এই নিমিত্ত আমাদের মত সকল লোকই তাঁহার অনুসরণ করিতেছে।" তা' আমিও তাঁহার নিকটেই যাই। (এই বলিয়া চলিয়া গেল।)

(ন) সংবাহক। (ভয়ের সহিত পাদচারণপূর্ব্বক দেখিয়া) এই

वसन्त । अभअं सरणागदस्स । हञ्जे ! ढक्केहि पक्खदुआरअं । (प)

चेटी । तथा करोति ।

वसन्त । कुदो दे भअं ? । (फ)

संवा । अज्जे ! धणिकादो । (ब)

वसन्त । हञ्जे ! संपदं अवावुणु पक्खदुआरअं । (भ)

(प) अभयं शरणागतस्य । हञ्जे ! पिधेहि पक्षद्वारकम् ।

(फ) कुतस्ते भयम् ? (ब) आर्ये ! धनिकात् ।

(भ) हञ्जे ! साम्प्रतमपावृणु पक्षद्वारकम् ।

(प) वसन्त इति । भयस्याभाव अभयमिति अभावार्थे अव्ययीभाव । हञ्जे इति दास्या सम्बोधनम् । "हण्डे हञ्जे हलाह्वाने नीच चेटीं सखीं प्रति" इत्यमर । पिधेहि कपाटाभ्यामावृणु ।

(ब) सवा इति । धनिकात् धनवत उत्तमर्णात् ।

(भ) वसन्त इति । अपावृणु कीलद्वारा बन्धि । यथा स धनिक कपाटद्वयमपसार्य प्रवेष्टुमर्हतीति भाव ।

কাহারও বাড়ীর পার্শ্বের দ্বার খোলা আছে। তা' এই বাড়ীতেই প্রবেশ করি। (প্রবেশ অভিনয় করিয়া, বসন্তসেনাকে দেখিয়া) আর্য্যে ! আমি আপনার শরণাগত হইলাম।

(প) বসন্তসেনা। শরণাগতের কোন ভয় নাই। ওলো ! পার্শ্বের দ্বার আবদ্ধ কর।

দাসী। (তাহা করিল।)

(ফ) বসন্তসেনা। কাহা হইতে তোমার ভয় ?।

(ব) সংবাহক। আর্য্যে ! ধনী হইতে।

(ভ) বসন্তসেনা। ওলো ! এখন পার্শ্বদ্বারে খিল দে।

संवा। आत्मगतम्। कधं धणिकादो तुलिदं शे भअकालणं। शुट्ठु क्खु एवं वुच्चदि—(ल)

जे अत्तबल जाणिअ भालं तुलिदं वहेदि माणुस्से।

ताह खलणं ण जाअदि ण अ कन्तालगदो विवज्जदि ॥१४॥

एत्थ लक्खिदो म्हि। (य)

(ल) कथं धनिकात् तुलितमस्या भयकारणम्। सुष्ठु खल्वेवमुच्यते—

य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः।

तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥१४॥

(य) अत्र लक्षितोऽस्मि।

---

(ल) संवा इति। अस्या वसन्तसेनायाः। तुलितं सममेव तुल्यम् कीलहारा कपाट पीयस्त्वस्य धना इति भावः।

य इति। यो मनुष्यः आत्मनो बलं शक्तिम्, ज्ञात्वा इयत्तया अवबुध्य, तुलितं स्वसहम् निजवहनयोग्यमित्यर्थः भारं वहति तस्य मनुष्यस्य स्खलनं भारस्य गुरुत्वजनितं पतनम् न जायते। तथा स कान्तारगतोऽपि दुर्गमपथचलितोऽपि न विपद्यते भारस्य दुर्वहतया न विपन्नो भवति। यस्तु आत्मबलमज्ञात्वा निजवहनायोग्यं गुरुतरं भारं वहति, तस्य स्खलनं जायते कान्तारगतस्य स विपद्यते इति भावः।

अत्र प्रवीणमहाजनवाक्येन प्रकरणादिदोषाभावादवहारनिरूपणमशक्यम्। "कान्तारो वर्त्म दुर्गमम्" इत्यमरः। आर्या जातिः ॥१४॥

(य) अत्रेति। अत्र "य आत्मबलम्—" इत्यादिमहाजनवाक्ये लक्षितोऽस्मि विषयीकृतोऽस्मि। तथा चाहम् आत्मनो धनबलमजानन् धनसाध्ये द्यूते प्रवृत्त, इदानीन्तु तव हारितधनं दातुमशक्नुवन् विपन्न इति भावः।

---

(ল) সংবাহক। (স্বগত) ধনী হইতে আমারই মত ইহারও ভয়ের কারণ আছে। সুতরাং লোকে এ কথা ভালই বলে—

যে মানুষ নিজের বলের পরিমাণ বুঝিয়া যোগ্য ভার বহন করে, তাহার স্খলন হয় না এবং সে দুর্গম পথে চলিয়াও বিপন্ন হয় না ॥১৪॥

**माथुरः।** अक्षिणी प्रमृज्य द्यूतकरं प्रति। अले! देहि देहि। (र)

**द्यूत।** भट्टा! जावदेव अम्हे दद्दुरेण कलहाइदा, तावदेव सो गोहो अवक्कन्तो। (ल)

**माथुरः।** तस्स जूदकलस्स मुट्ठिप्पहालेण णासिका भग्गा आसि। ता एहि, रुहिरपहं अणुसरेम्ह। (व)

अनुसृत्य द्यूतकरः। भट्टा! वसन्तसेणागेहं पविट्ठो सो। (श)

(र) अरे! देहि देहि।

(ल) भर्त्तः! यावदेव वयं दर्दुरेण कलहायिताः, तावदेव स पुरुषोऽपक्रान्तः।

(व) तस्य द्यूतकारस्य मुष्टिप्रहारेण नासिका भग्ना आसीत्। तदेहि, रुधिरपथमनुसराव:।

(श) भर्त्तः! वसन्तसेनागेहं प्रविष्टः सः।

---

(र) माथुर इति। द्यूतकरं प्रति स्वाङ्कमर्पयेति भावः।

(ल) द्यूत इति। कलहायिताः कलहं कृतवन्तः। कलहायधातोः कर्त्तरि क्तः। स पुरुषः संवाहकः अपक्रान्तः पलायितः।

(व) माथुर इति। मम मुष्टिप्रहारेण तस्य द्यूतकारस्य नासिका भग्नेत्यन्वयः। रुधिरपथं रुधिरपतनपथम्। तथा सति तं प्राप्नुम इति भावः।

(श) अन्विति। रुधिरपतनपथमनुसृत्य माथुरमनुसृत्येत्यर्थः। भर्त्तरिति। एतद्वसन्तसेनागेहद्वार एव रुधिरपतनपथस्यावसानादिति भावः।

---

(ষ) আমি এই কথারই লক্ষ্য হইয়াছি।

(র) মাথুর। (চোখ মুছিয়া দ্যূতকরের প্রতি) ওরে! দে দে।

(ল) দ্যূতকর। মহাশয়! আমরা যে পর্য্যন্ত দর্দুরের সঙ্গে ঝগড়া করিতেছিলাম, তাহার মধ্যেই সে বেটা পলাইয়াছে।

(ব) মাথুর। মুষ্টিপ্রহারে সেই দ্যূতকরের নাসিকা ভগ্ন হইয়াছিল। তা' আইস, রক্তের পথ অনুসরণ করি।

माथुर. । भूदाइं सुवस्साइं । (घ)

द्यूत । लाअउलं गदुअ णिवेदेम्ह ? । (ङ)

माथुर. । एस धूत्तो इदो णिक्कमिअ अस्सत्त गमिस्सदि, ता उअरोधेणेव्व गेण्हेम्ह । (छ)

वसन्तसेना मर्दनिकाया न ज्ञा ददाति । (च)

मद । कुदो अज्जो ? को वा अज्जो ? कस्स वा अज्जो ? किंवा वित्ति अज्जो उवजीअदि ? कुदो वा भअं ? । (क)

(घ) भूतानि सुवर्णानि ।

(ङ) राजकुलं गत्वा निवेदयाम ? ।

(छ) एष धूर्त इतो निष्क्रम्य अन्यत्र गमिष्यति, तदुपरोधेनैव गृह्णीव ।

(घ) माथुर इति । सुवर्णानि दशसुवर्णपरिमितस्वर्णानि, भूतानि सम्पन्नानि, तस्य सवाहकस्य वसन्तसेनाश्रितत्वात् उदारया च तया तस्य दशसुवर्णस्य दास्यत्वा दिति भाव ।

(ङ) द्यूत इति । वसन्तसेना यदि न दद्यात् राजा तु दापयिष्यतीति भाव ।

(छ) माथुर इति । अन्यत्र गमिष्यति आवयोरितो गमने इति भाव । उपरोधै नैव वसन्तसेनां प्रति अनुरोधेनैव ।

(च) वसन्त इति । न ज्ञा ददाति नयनेङ्गितेनेति शेष । सर्वं मद्वृत्तिरिति भाव ।

(*) (অনুসরণ করিয়া) দ্যূতকর। মহাশয়। সে বেটা বসন্তসেনার বাড়ীতে প্রবেশ করিয়াছে।

(ঘ) মাথুর। (তাহা হইলে) সোণাগুলি পাইয়াছি।

(ঙ) দ্যূতকর। রাজবাড়ী যাইয়া জানাই ?।

(ছ) মাথুর। (তাহা হইলে) এই ধূর্ত্তবেটা এখান হইতে বাহির হইয়া অন্যত্র যাইবে। তা' অনুরোধ করিয়াই লইব।

(চ) বসন্তসেনা মদনিকাকে সঙ্কেত করিল।

मवा। शुणादु अज्जआ। अज्जे! पाडलिउत्ते मे जम्म भूमी, गहवइदालके हगे सवाहअश्श वित्तिं उवजीआमि। (ख)

वसन्त। सुउमारा क्खु कला सिक्खिदा अज्जेण। (ग)

सवा। अज्जए। कलेत्ति सिक्खिदा आजीविआ दाणि संवुत्ता। (घ)

(क) कुत आर्य ? को वा आर्य ? कस्य वा आर्य ? किं वा वृत्तिम् आर्य उपजीवति ? कुतो वा भयम् ?।

(ख) शृणोतु आर्या। आर्ये पाटलिपुत्र मे जन्मभूमि गृहपतिदारको ऽहम सवाहकस्य वृत्तिमुपजीवामि।

(ग) सुकुमारा खलु कला शिक्षिता आर्य्य ण।

(क) मद इति। आर्य्य मध्ये भवानिति सम्बन्ध। कुतो देशादागत इति अथ। कस्य सम्बन्धी कस्याभिभावक इत्यथ। वृत्ति जीविकानिर्वाहोपायम् उपजीवति आश्रयति।

(ख) सवा इति। गृहपतिदारको गृहस्थपुत्र सवाहकस्य गात्रसम्वाहकस्य वृत्ति काय्यम् उपजीवामि आश्रयामि।

(ग) वसन्त इति। कला कलाविद्या गात्रसम्वाहनस्य कलाविद्यान्तर्गतत्वात्।

(घ) सवा इति सा विद्य ति शेष। आजीविका जीवननिर्वाहोपाय।

(ক) মদনিকা। আপনি কোথা হইতে আসিয়াছেন? আপনি কে? আপনি কাহার? কোন বৃত্তি অবলম্বন করিয়া আপনি জীবিকা ধারণ করেন? কাহা হইতে বা আপনার ভয়?।

[খ] সম্বাহক। আপনি শুনুন। আর্য্যে! পাটলীপুত্র আমার জন্মভূমি আমি গৃহস্থের পুত্র গাত্রমর্দ্দকের বৃত্তি অবলম্বন করিয়া আমি জীবন ধারণ করি।

[গ] বসন্তসেনা। আপনি কোমল কলাবিদ্যা শিক্ষা করিয়াছেন

चेटी। को दाणिं अज्जआए मणोरहन्तरस्स गुणाइं चोरिअ उज्जइणिं अलङ्करेदि ?। (छ)

वसन्त। साहु, हञ्जे ! साहु। मए वि एव्वं ज्जेव हिअएण मन्तिदं। (ज)

चेटी। अज्ज ! तदो तदो ?। (झ)

संवा। अज्जए! से दाणिं अणुक्कोसकिदेहिं पदाणेहिं। (ञ)

(छ) क इदानीमार्य्याया मनोऽभ्यन्तरस्य गुणान् चोरयित्वा उज्जयिनीमलङ्करोति ?।

(ज) साधु हञ्जे ! साधु। मयापि एवमेव हृदयेन मन्त्रितम्।

[झ] आर्य्ये ! ततस्ततः ?। [ञ] आर्य्ये ! स इदानीमनुक्रोशकृतैः प्रदानैः।

(छ) चेटी इति। आर्य्याया वसन्तसेनायाः, मनोऽभ्यन्तरस्य अभिलषणीयस्य इष्टस्य चारुदत्तस्येत्यर्थः। चोरयित्वा हृत्वेत्यर्थः।

(ज) वसन्त इति। हृदयेन सह मन्त्रितम् आलोचितम्।

অবন্তীদেশে আসিয়াছি। আমি এদেশে আসিয়া, উজ্জয়িনীনগরে প্রবেশ করিয়া, এক ভদ্রলোকের পরিচর্য্যা করিয়াছিলাম, যিনি সেইরূপ প্রিয়দর্শন ও প্রিয়বাদী, দান করিয়া তাহা কীর্ত্তন করেন না, অপকার বিস্মৃত হন, বেশী বলিয়া কি হইবে, তিনি উদারতানিবন্ধন আপনাকেও, পরকীয়ের ন্যায় মনে করেন এবং শরণাগতবৎসল।

[ছ] মদনিকা। কে আর্য্যার (বসন্তসেনার) অভিলাষবর্ত্তী লোকের গুণ অপহরণ করিয়া, উজ্জয়িনীকে অলঙ্কৃত করিতেছে ?।

[জ] বসন্তসেনা। ভাল ওলো ! ভাল, আমিও মনের সঙ্গে এইরূপই আলোচনা করিতেছিলাম।

[ঝ] মদনিকা। ভদ্র ! তা'র পর ? তা'র পর ?।

वसन्त। किं उवरतविहवो संवुत्तो?। (ट)

संवा। अणाचक्खिदे ज्जेव कधं अज्जआए विण्णादं। (ठ)

वसन्त। किं एत्थ जाणीअदि। दुल्लहा गुणा विहवा अ। अपेएसु तडाएसु बहुदरं उदअं भोदि। (ड)

चेटी। अज्ज! किंणामधेओ क्खु सो?। (ढ)

[ट] किमुपरतविभवः संवृत्तः?।

[ठ] अनाख्यातमेव कथमार्यया विज्ञातम्?।

[ड] किमत्र ज्ञायते। दुर्लभा गुणा विभवाश्च। अपेयेषु तडागेषु बहुतरमुदकं भवति।

[ढ] आर्य्ये! किंनामधेयः खलु सः?।

---

(ञ) संवा इति। अनुक्रोशेन दयया कृते। कृपा दयानुकम्पा स्यादनुक्रोश इत्यमरः।

(ट) वसन्त इति। उपरतविभवो विनष्टधनसम्पत्तिः।

(ड) वसन्त इति। दुर्लभा गुणा विभवाश्च एकाधारे इति शेषः। दयादिगुणवति न विभवाः विभववति च न दयादयो गुणाः विद्यन्ते इति भावः। ननु दयादिगुणहीने कथं विभवाः भवन्तीत्याह अपेयेष्विति। अपेयेषु दुष्टजलत्वात् पातुमयोग्येषु। अत्र जलानामपेयत्वात् तदाधाराणां तडागानामपि अपेयत्वमुपचर्य्यते। तथा च यथा अपेयेषु तडागेषु बहुतरमुदकं भवति तथा दयादिगुणहीनेषु पुरुषेषु अयाच्यमानेषु बहुतरं धनं भवति, तथापि नैतौ श्लाघनीयाविति भावः। अतएवात्र समासे प्रसमप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः।

---

[ঞ] সংবাহক। আর্য্যে! সেই মহাত্মা এখন দয়াব্রত দানে—

[ট] বসন্তসেনা। কি ধনহীন হইয়াছেন?।

[ঠ] সংবাহক। আপনি যে না বলা সত্বেও বুঝিয়াছেন।

[ড] বসন্তসেনা। এ বিষয়ে আর বুঝিব কি। একাধারে গুণ ও ধন দুর্লভ। পানের অযোগ্য জলাশয়ে বহুতর জল হইয়া থাকে।

मंवा। अज्जे! के दाणिं तस्स भूदल-मिअंकस्स णाम ण आणादि। सो क्खु सेट्ठिचत्तले पडिवसदि, सलाहणिज्जणामधेए अज्जचालुदत्ते णाम। (ण)

वसन्त। सहर्षमासनादवतीर्य। अज्जस्स अत्तणकेरकं एदं गेहं। हञ्जे! देहि से आसणं, तालवेण्टअं गेण्ह। परिस्समो अज्जस्स बाधेदि। (त)

चेटी। तथा करोति।

[ण] आर्थे! क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति। स खलु श्रेष्ठिचत्वरे प्रतिवसति, श्लाघनीयनामधेय आर्यचारुदत्तो नाम।

[त] आर्थस्य आत्मीयमेतद्गेहम्। हञ्जे! देहि अस्मै आसनम् तालवृन्तकं गृहाण परिश्रम आर्यस्य बाधते।

(ण) सवा इति। भूतलस्य मृगाङ्कश्चन्द्र इव यस्य। एतो नामशब्द प्रसिद्धाय।
"पाडलिउत्ते मे जम्मभूमी" इत्यारभ्य एतत्पर्यन्तसन्दर्भे' आख्यानं नाम नाट्यालङ्कारः—
"आख्यानं पूर्ववृत्तोक्ति" इति लक्षणात्।

(त) वसन्त इति। आत्मीय स्वकीय चारुदत्तसम्बन्धिमिलादिति भाव। आर्यस्य गात्र बाधते पीडयतीत्यर्थ।

अत्र प्रहर्षो नाम नाट्यालङ्कारः—"प्रहर्ष प्रमदाधिक्यम्" इति लक्षणात्।

[ट] मदनिका। ভদ্র! তাঁহার নাম কি?।

[ণ] সংবাহক। আর্য্যে! সেই ভূতলস্থ চন্দ্রের নাম কে না জানে?। তিনি বণিক্‌পাড়ায় বাস করেন, তাঁহার প্রশংসনীয় নাম—আর্য্য চারুদত্ত।

[ত] বসন্তসেনা। (আনন্দের সহিত আসন হইতে নামিয়া) এই বাড়ী মহাশয়ের নিজের। ওলো! ইঁহাকে আসন দে, পাখা ধর। পরিশ্রম ইঁহাকে কষ্ট দিতেছে।

चालित्तावशेशे अ तस्सिं जूदोवजीविम्हि शंवुत्ते। तदो, भाअधेअविशमदाए दश-शुवण्णअं जूदे हालिदं। (न)

माथुरः। उक्खादिदोम्हि मुसिदोम्हि। (प)

संवा। एदे दे शहिअ-जूदिअला मं अणुशंधअन्ति। शंपदं शुणिअ अज्जआ पमाणं। (फ)

[न] ततः, तेन आर्य्येण सवृत्ति परिचारकः कृतोऽस्मि। चारित्रावशेषे च तस्मिन् द्यूतोपजीवी अस्मि संवृत्तः। ततो भागधेयविषमतया दशसुवर्णं द्यूते हारितम्।

[प] उत्खातितोऽस्मि मुषितोऽस्मि।

[फ] एतौ तौ सभिकद्यूतकरौ मामनुसन्धत्तः। साम्प्रतं श्रुत्वा आर्य्या प्रमाणम्।

---

(न) संवा इति। तेन चारुदत्तेन। वृत्त्या वेतनेन सहेति सवृत्ति, परिचारकः गात्रसंवाहनकारी भृत्यः। चारित्रं सत्त्वमात्रमेव अवशेषो यस्य तस्मिन् विनष्टधन इत्यर्थः, तस्मिन् चारुदत्ते। भागधेयविषमतया भाग्यविपर्य्ययेण।

(प) माथुर इति। उत्खातितः उत्सन्नतां प्रापितः, गुरुतरऋणनिरासात् मुषितः चोरितः, अवश्यप्राप्यस्य अदानेन अपहरणात्। उभयत्रापि पलायितेन संवाहकेनेति शेषः।

(फ) संवा इति। एतौ 'उक्खादिदोम्हि' इत्यादिवक्तारौ। अनुसन्धत्तः अन्विष्यतः। आर्य्या वसन्तसेना, प्रमाणं कर्त्तव्याकर्त्तव्यविवेचिकेत्यर्थः।

---

[ন] সংবাহক। তা'র পর, সেই মহাত্মা বেতনের সহিত আমাকে পরিচারক করিলেন। তাহার পর তাঁহার সচ্চরিত্রমাত্র অবশিষ্ট থাকিলে (তিনি দরিদ্র হইয়া পড়িলে) আমি দ্যূতোপজীবী হইয়াছি। তা'র পর ভাগ্যবিপর্য্যয়বশতঃ দ্যূতে দশখানি মোহর হারিয়াছি।

[প] মাথুর। আমাকে উৎসন্ন করিয়াছে, আমার দ্রব্য অপহরণ করিয়াছে।

[ফ] সংবাহক। এই সেই সভাধ্যক্ষ ও দ্যূতকর আমার অনুসন্ধান করিতেছে। এই সব শুনিয়া আপনি যাহা করেন।

वसन्त । मदणिए ! वास-पादव-विसण्ठुलदाए पक्खिणो इदो तदो वि आहिण्डन्ति । हञ्जे ! ता गच्छ, एदाणं सहिअ-जूदिअराणं "अअं अज्जो ज्जेव पडिवादेदि" त्ति इमं हत्थाभरणं तुमं देहि । इति हस्तात् कटकमाकृष्य चेट्याः प्रयच्छति । (ब)

चेटी । गृहीत्वा । जं अज्जआ आणवेदि । इति निष्क्रान्ता । (भ)

(ब) मदनिके ! वास-पादप-विसंष्ठुलतया पक्षिण इतस्ततोऽपि आहिण्डन्ते । हञ्जे ! तद्गच्छ, एतयोः सभिकद्यूतकरयोः "अयमार्य्य एव प्रतिपादयति" इति, इद हस्ताभरणं त्वं देहि ।

(भ) यदार्य्या आज्ञापयति ।

(ब) वसन्त इति । वासपादपस्य आवासवृक्षस्य विसंष्ठुलतया वात्यादिना विपर्य्यस्ततया । आहिण्डन्ते विचरन्ति । तथा च यथा आवासवृक्षस्य विपर्य्यस्ततया पक्षिण इतस्ततो विचरन्ति, तथा आश्रिता जना अपि आश्रयजनस्य दशाविपर्य्यये इतस्ततो विचरन्तीति चारुदत्तस्य दशाविपर्य्ययात् तदाश्रित स वाहकोऽपि एवं विचरतीति नात्र किञ्चिद् चित्रमिति भाव ।

अतएवात्रापि समात् समप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कार ।

अयमार्य्य एव स वाहक एव, प्रतिपादयति इद ददाति । इति वक्तेति शेष ।

अत्र साहाय्य नाम नाट्यालङ्कार—"साहाय्य सङ्कटे यत् स्यात् सानुकूल्यं परस्य च" इति साहित्यदर्पणलक्षणात् ।

(ব) বসন্তসেনা। মদনিকা! বাসবৃক্ষ বিপর্য্যস্ত হইলে পক্ষিগণ ইতস্ততঃ বিচরণ করে। অতএব যাও, 'এই সংবাহকই দিতেছেন' এই কথা বলিয়া, এই সভাধ্যক্ষ ও দ্যূতকরকে এই হস্তাভরণখানা দাও। ( ইহা বলিয়া হস্ত হইতে বলয় খুলিয়া মদনিকার নিকট দিল )

(ভ) মদনিকা। ( গ্রহণ করিয়া ) আপনি যাহা আদেশ করেন। ( এই বলিয়া চলিয়া গেল। )

संवा। स्वगतम्। कधं अज्जचालुदत्तस्स णामसङ्कित्तणेण ईदिशे मे आदले। साहु, अज्जचालुदत्त! साहु, पहुवीए तुम एक्के जीवशि, शेशे उण जणे शशदि। इति पादयोर्निपत्य। भोदु, अज्जए! भोदु। आशणे णिशीददु अज्जआ। (थ)

वसन्त। आसने समुपविश्य। अज्ज! कुदो सो धणिओ?। (द)

संवा। सक्कालधणे क्खु सज्जणे
काह ण होइ चलाचले धणे?।

[थ] कथम् आर्य्यचारुदत्तस्य नामसङ्कीर्त्तनेन ईदृशो मे आदरः। साधु, आर्य्यचारुदत्त! साधु, पृथिव्यां त्वमेको जीवसि, शेषः पुनर्जनः श्वसिति। भवतु, आर्य्ये! भवतु। आसने निषीदतु आर्य्या।

[द] आर्य्य! कुतः स धनिकः?।

सत्कारधनः खलु सज्जनः, कस्य न भवति चलाचलं धनम्।
यः पूजयितुमपि न जानाति स पूजाविशेषमपि न जानाति ॥१५॥

(थ) संवाहक इति। जीवसि, जीवनाद्यागाभिमतसत्कार्य्यकरणात्। श्वसिति, सत्सम्पादनमनेव श्वासं तथा सम्पादयति भवादृशसत्कार्य्याकरणादिति भावः। निषीदतु उपविशतु।

(द) वसन्त इति। स धनिकः यस्य कृते दशसुवर्णं धारयति।

मर्द्दनिका। ( সেইরূপ করিল )

[থ] সংবাহক। ( স্বগত ) আর্য্য চারুদত্তের নাম কীর্ত্তন করা-মাত্রই এরূপ আদর হইতেছে কেন? সাধু, আর্য্য চারুদত্ত। সাধু, পৃথিবীতে আপনি একাই জীবিত আছেন, অবশিষ্ট লোক কেবল শ্বাস প্রশ্বাস করিতেছে। [ এই বলিয়া বসন্তসেনার পায়ের উপর পড়িয়া ] হউক, আপনি আসনে উপবেশন করুন।

[দ] বসন্তসেনা। ( আসনে বসিয়া ) ভদ্র। সে ধনী কোথায়?।

माथुरः। उक्कादिदोम्हि मुसिदोम्हि। (म)

चेटी। जधा एदे उड्ढं पेक्खन्ति, दीहं णीससन्ति, अहिलहन्ति अ दुआर-णिहिद-लोअणा, तधा तक्केमि-एदे दे सहिअजूदिअरा हुविस्सन्ति। उपगम्य। अज्ज! वन्दामि। (य)

माथुरः। सुहं तुए होदु। (र)

चेटी। अज्ज! कदरो (१) तुह्माणं सहिओ?। (ल)

माथुरः। कस्स तुमं तणुमज्झे।

अहरेण रद-दट्ठ-दुव्विणीदेण।

(म) उत्क्रादितोऽस्मि, मुषितोऽस्मि।

(य) यथा एतौ ऊर्द्धं प्रेक्षेते, दीर्घं निश्वसितः, अभिलपतश्च द्वारनिहितलोचनौ, तथा तर्कयामि—एतौ तौ सभिकद्यूतकारौ भविष्यतः। आर्य! वन्दे।

(र) सुखं तव भवतु।

(ल) आर्य! कतरो युवयोः सभिकः?।

(य) चेटी इति। अभिलपतः परस्परमालपतः। प्राप्तेरमधिकारो न प्राप्नुयादित्यत एव बुद्धिमन्त्या पर्यालोचना इति बोध्यम्।

(म) माথুর। আমাকে উৎসন্ন করিয়াছে, আমার দ্রব্য অপহরণ করিয়াছে।

(য) মদনিকা। যখন ইহারা উপরের দিকে চাহিতেছে, দীর্ঘনিশ্বাস ত্যাগ করিতেছে এবং দ্বারে দৃষ্টি স্থাপন করিয়া আলাপ করিতেছে, তখন আমি মনে করি—ইহারাই সেই সভাধ্যক্ষ ও দ্যূতকর হইবে। (নিকটে যাইয়া) মহাশয়। প্রণাম।

(র) মাথুর। তোমার সুখ হউক।

(ল) মদনিকা। মহাশয়। আপনাদের মধ্যে কে সভাধ্যক্ষ?।

(१) कदमो।

জম্পসি মণোহর-বঅণং
আলোঅন্তী কডক্খেণ ॥১৬॥

ণত্থি মম বিহবো, অণ্ণত্ত ব্বজ । (ব)

চেটী । জই ইদিসাইঁ ণং মন্তেসি, তা ণ হোমি জূদিঅরী । অত্থি কোবি তুম্হাণং ধারও ? । (জ)

কস্য ত্বং তনুমধ্যে ! অধরেণ রত দষ্টদুর্বিনীতেন ।
জল্পসি মনোহরবচনম্ আলোকয়ন্তী কটাক্ষেণ ॥১৬॥

(ব) নাস্তি মম বিভব, অন্যত্র ব্রজ ।

(জ) যদি ঈদৃশানি ননু মন্ত্রয়সি, তদা ন ভবামি দ্যূতকর । অস্তি কোঽপি যুষ্মাক ধারক ? ।

---

কস্যেতি । হে তনুমধ্যে ! ক্ষামকটিদেশে ! ত্বং কস্য কান্তত্বাধিকারীত্যর্থঃ । রতে সুরতসময়ে দষ্টী নায়কেন কৃতদন্তদংশেন অতএব দুর্বিনীতেন প্রগল্‌ভকান্তেন, অধরেণ উপলক্ষিতা, কটাক্ষেণ আলোকয়ন্তী সতী, মনোহরবচনং জল্পসি ব্রবীষি ।

আর্যা জাতিঃ । তৃতীয়চরণান্তিমাক্ষরস্য গুরোরপি লঘুত্বম্, চতুর্থচরণান্তিমাক্ষরস্য তু লঘোরপি গুরুত্বম্ অবসানস্থত্বাৎ ॥১৬॥

(ব) নাস্তীতি । বিভব—তব সম্ভোগমূল্যদানোপযোগি ধনম্ । বসুমানহং ব্যয়ায় ইয়মুপস্থিতা ইতি সম্ভাবনয়া ইয়মুক্তিঃ ।

(জ) চেটী ইতি । নন্বিতি সম্বোধনে । ঈদৃশানি বাক্যানি মন্ত্রয়সি ব্রবীষি দ্যূতকরী ন ভবসীতি, দ্যূতকারাণা স্বমুখেনৈব স্বনির্ধনত্বপ্রকাশাকরণাৎ নির্ধনস্য দ্যূতকারৈরগ্রহণীয়ত্বাদিতি ভাবঃ । পুনশ্চ বিশিষ্য পৃচ্ছতি অস্তীতি ।

ধারয়তীতি ধারকঃ ঋণী ।

---

মাথুর । হে কৃশমধ্যে ! তোমার ওষ্ঠখানি চুম্বনকালীন দংশননিবন্ধন ধৃষ্ট হইয়াছে । তুমি কটাক্ষদ্বারা দর্শন করতঃ মনোহর বাক্য বলিতেছ, তুমি কাহার ? ॥১৬॥

(ব) আমার টাকা নাই, তুমি অন্যত্র যাও ।

माथुरः। अत्थि दशसुवण्णं धालेदि। किं तस्स?। (य)

चेटी। तस्स कारणादो अज्जआ इमं हत्थाभरणं पडिवादेदि। णहि णहि, सो ज्जेव पड़िवादेदि। (स)

माथुरः। सहर्षं गृहीत्वा। अले! भणेसि तं कुलपुत्तं—"भूदं तुए गण्डे (१)। आअच्छ, पुणो जूदं रमम्ह।" इति निष्क्रान्तौ। (ह)

चेटी। वसन्तसेनामुपसृत्य। अज्जए! पड़िवुट्टा गदा सहिअजूदिअरा। (क्ष)

(य) अस्ति, दशसुवर्णं धारयति। किं तस्य?।

(स) तस्य कारणात् आर्य्या इदं हस्ताभरणं प्रतिपादयति। नहि नहि, स एव प्रतिपादयति।

(ह) अरे! भणिष्यसि तं कुलपुत्रम्—'भूतस्तव गण्डः, आगच्छ पुनर्द्यूतं रमाव'।

---

(स) चेटी इति। आर्य्या वसन्तसेना। प्रतिपादयति ददाति।

(ह) माथुर इति। कुलपुत्रं सहजसन्नामम्, हारितधनदानेन सद्व्यवहारादिति भावः। गण्ड वाचा नियमित धनम्।

---

(य) मदनिका। আপনি যদি এইরূপ বলেন, তবে আপনি দ্যূতকর নন'। কেহ আপনাদের কিছু ধারে কি?

(য) মাথুর। সেরূপ লোক আছে, দশখানি মোহর ধারে। তাহার কি হইয়াছে?।

(স) মদনিকা। তাঁহার জন্য আর্য্যা বসন্তসেনা এই হস্তাভরণ দান করিতেছেন। না না, তিনিই দান করিতেছেন।

(হ) মাথুর। (আনন্দের সহিত গ্রহণ করিয়া) ওহে! সেই সদ্বংশের পুত্রকে বলিও—'তোমার পণ দেওয়া হইয়াছে'। আইস, পুনর্বার দ্যূতক্রীড়া করি। (এই বলিয়া চলিয়া গেল।)

---

(१) गण्डः।

वसन्त । ता गच्छदु, अज्ज बन्धुअणो समस्ससदु । (क)

संवा । अज्जए ! जइ एव्वं, ता इयं कला परिअणहत्थ-गदा करीअदु । (ख)

वसन्त । अज्ज ! जस्स कारणादो इयं कला सिक्खीअदि, सो ज्जेव अज्जेण सुस्सूसिद-पुरुव्वो सुस्सूसिदव्वो । (ग)

(घ) आर्य्ये ! परितुष्टौ गतौ सभिकद्यूतकरौ ।

(क) तद्गच्छतु, अद्य बन्धुजनः समाश्वसितु ।

(ख) आर्य्ये ! यद्येवम्, तदियं कला परिजनहस्तगता क्रियताम् ।

(ग) आर्य्य ! यस्य कारणादियं कला शिक्ष्यते, स एव आर्य्येण शुश्रूषितपूर्वः शुश्रूषितव्यः ।

---

(क) वसन्त इति । तत्तस्मात् सभ्यमुक्तत्वात्, गच्छतु स्वगृहमिति शेषः । बन्धुजनो-ऽस्मात्यादि, समाश्वसितु भवन्तमवलोक्य निरुद्वेगो भवतु । संवाहकं प्रति उक्तिरियम् ।

(ख) संवा इति । यदि एवं दया चेत् कृतेत्यर्थः, तत् तदा इयं कला गात्र-संवाहनरूपा, परिजनस्य नवपोष्यजनीभूतस्य मम हस्तगता क्रियतां स्वगात्रसंवाहनाय मां भृत्यं कुरु इत्यर्थः ।

(ग) वसन्त इति । शिक्ष्यते इति अतीतसामीप्ये वर्त्तमाना शिक्षितपूर्व इत्यर्थः । स एव चारुदत्त एव । पुनरपि चारुदत्तस्यैव किङ्करो भवेत्याशयः ।

---

(ঘ) মদনিকা। (বসন্তসেনার নিকট যাইয়া) আর্য্যে! সেই সভাধ্যক্ষ ও দ্যূতকর সন্তুষ্ট হইয়া গিয়াছে।

(ক) বসন্তসেনা। তা, আপনি যান, আজ আপনার বন্ধুজন আশ্বস্ত হউন।

(খ) সংবাহক। আর্য্যে! আপনি যদি এইরূপই করিলেন, তবে এই কলাবিদ্যাটী পরিজনের হস্তগত করুন (গাত্রসংবাহনের জন্য আমাকে ভৃত্য করুন।)

संवा। स्वगतम्। अज्जआए णिउणं पच्चादिट्ठोम्हि। कधं पच्चुवकलिश्शं?। प्रकाशम्। अज्जए! अहं एदिणा जूदिअलावमाणेण शक्क-शमणके हुविश्शं। ता शंवाहके जूदिअले शक्क-शमणके शंवुत्तेति शुमलिदव्वा अज्जआए एदे अक्खलु। (घ)

वसन्त। अज्ज! अलं साहसेण। (ङ)

संवा। अज्जए! कले णिच्चए। इति परिक्रम्य। (च)

(घ) आर्य्यया निपुणं प्रत्यादिष्टोऽस्मि। कथं प्रत्युपकरिष्ये?। आर्य्ये! अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि। तत्स वाहकी द्यूतकर शाक्य श्रमणक, स इत्त इति स्मर्त्तव्यानि आर्य्यया एतानि अक्षराणि।

(ङ) आर्य्ये! अलं साहसेन।

(च) आर्य्ये! कृतो निश्चयः।

(घ) स वा इति। निपुणं सुकौशलं यथा स्यात्तथा, प्रत्यादिष्टोऽस्मि निराकृतोऽस्मि। कथं केन प्रकारेण। शाक्यश्रमणकी बौद्धसन्न्यासी।

(ङ) वसन्त इति। साहसेन दुष्करसन्न्यासं प्रति प्रवृत्त्या।

(গ) বসন্তসেনা। ভদ্র। যাঁহার জন্য আপনি এই কলা শিখা করিয়াছেন এবং পূর্ব্বে যাঁহার শুশ্রূষা করিয়াছেন, আপনি এখন তাঁহারই শুশ্রূষা করুন।

(ঘ) সংবাহক। (স্বগত) ইনি আমাকে নিপুণভাবে প্রত্যাখ্যান করিলেন। কিন্তু কি করিয়া আমি ইঁহার প্রত্যুপকার করি। (প্রকাশ্যে) আর্য্যে। দ্যূতকরদিগের এই অপমানে আমি বৌদ্ধসন্ন্যাসী হইব। তা' সংবাহকনামে দ্যূতকর বৌদ্ধসন্ন্যাসী হইয়াছে, আপনি এই কথটী অক্ষর স্মরণ রাখিবেন।

(ঙ) বসন্তসেনা। ভদ্র। আপনি ও-সাহস করিবেন না।

(চ) সংবাহক। আর্য্যে। আমি স্থির করিয়াছি। (এই বলিয়া পরিক্রমণ করিয়া)

जूदेण तं कदं मे जं वीहत्थं जणस्स सव्वस्स ।
एण्हिं पाअडसीसो णलिन्दमग्गेण विहलिस्सं ॥१७॥

नेपथ्ये कलकलः ।

संवा । आकर्ण्य । अले ! किं ण्णेदं । आकाशे । किं भणाध ? "एसो क्खु वसन्तसेणाआए खुण्टमोडके णाम दुट्टहत्थी विअलेदि" (१) त्ति । अहो ! अज्जआए गन्धगअं पेक्खिस्सं गदुअ । अहवा, किं मम एदिणा । जधा ववसिदं अणुचिट्ठिस्सं । इति निष्क्रान्तः । (क)

द्यूतेन तत् कृतं मे यद्विहस्तं जनस्य सर्वस्य ।
इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि ॥१७॥

(क) अरे ! किं न्विदम् ?। किं भणत ? एष खलु वसन्तसेनायाः खुण्टमोडको नाम दुष्टहस्ती विकलयतीति । अहो ! आर्य्याया गन्धगजं प्रेक्षिष्ये गत्वा । अथवा किं मम एतेन यथा व्यवसितमनुष्ठास्यामि ।

---

द्यूतेनेति । सर्वस्य जनस्य समीपे यत् विहस्तं व्याकुलं हारितस्य मम दशसुवर्णस्य निमित्तं नितान्तायमानितमित्यर्थः, कृतवान् सभिक इति शेषः । तत् विहस्तत्वं मे द्यूतेनैव कृतम् तत्प्रयोज्यत्वादिति भावः । इदानीं प्रकटं मुण्डितत्वात् प्रकाशितं शीर्षं मस्तकं यस्य स तादृशोऽहं नरेन्द्रमार्गेण राजपथेन विहरिष्यामि विचरिष्यामि इति कृतो निश्चय इति पूर्वेणान्वयः । आर्य्या जातिः ॥१७॥

(क) भवा इति । खुण्टमोडक इति डित्थादिवत् रूढः शब्दः । विकलयति

---

সকল লোকের নিকটে সভাধ্যক্ষ যে আমাকে ব্যাকুল করিয়াছিল তাহা দ্যূতেই করিয়াছে। এখন আমি প্রকাশিতমস্তক হইয়া রাজপথে বিচরণ করিব ॥১৭॥

নেপথ্যে কোলাহল।

---

(१) विहलेदि ।

कर्ण। दृष्ट्वा। अज्जए! वन्दामि। (ट)

वसन्त। कण्णऊरअ! परितुट्ठमुहो लक्खीअदि, ता किं ण्णेदं?। (ठ)

कर्ण। सविस्मयम्। अज्जए! वञ्चिदासि, जाए अज्ज कण्णऊरअस्स परक्कमो ण दिट्ठो। (ड)

वसन्त। कण्णऊरअ! किं किं?। (ढ)

कर्ण। सुणादु अज्जआ; जो सो अज्जआए खुण्टमोड़ओ णाम दुट्ठहत्थी, सो आलाणक्खम्भं भञ्जिअ, महामित्तं वावादिअ महन्तं संक्खोहं करन्तो राअमग्गं ओदिण्णो। तदो एत्थन्तरे उग्घुट्टं जणेण—(ण)

(ट) आर्य्ये। वन्दे।

(ठ) कर्णपूरक। परितुष्टमुखो लक्ष्यसे, तत् किमिदम्?।

(ड) आर्य्ये। वञ्चितासि, यया अद्य कर्णपूरकस्य पराक्रमो न दृष्टः।

(ढ) कर्णपूरक। किं किम्?।

(ण) शृणोतु आर्य्या। यः स आर्य्यायाः खुण्टमोडको नाम दुष्टहस्ती, स आलान-

(ठ) वसन्त इति। परितुष्टं प्रफुल्लतया परितुष्टभावप्रकाशकं मुखं यस्य सः।

(ঞ) মদনিকা। ও-পাবাপলোক। তো'র উদ্বেগের কারণ কি? যে সম্মুখে অবস্থিত আর্য্যাকেও দেখিতেছিস্ না।

(ট) কর্ণপূরক। (দেখিয়া) আর্য্যে। প্রণাম করি।

(ঠ) বসন্তসেনা। কর্ণপূরক। তোকে প্রফুল্লমুখ দেখিতেছি, তা' ঘটনা কি?

(ড) কর্ণপূরক। (বিস্ময়ের সহিত) আর্য্যে। আপনি বঞ্চিত হইয়াছেন, যে আপনি আজ কর্ণপূরকের পরাক্রম দেখিলেন না।

(ঢ) বসন্তসেনা। কর্ণপূরক। কি কি?।

अवणेध बालअजणं तुरिदं आरुहध वुक्ख-पासादं ।
किं ण हु पेक्खध पुरदो दुट्ठो हत्थी इदो एदि ॥१८॥
अवि अ ।
विचलइ णेउरजुअलं छिज्जन्ति अ मेहला मणिक्खइआ ।
वलआ अ सुन्दरदरा रअणङ्कुर-जाल-पडिबद्धा ॥१९॥

स्तम्भं भङ्क्त्वा, महामात्रं व्यापाद्य, महान्तं संक्षोभं कुर्वन् राजमार्गमवतीर्णः । ततः अनन्तरं उद्घुष्टं जनेन—

अपनयत बालकजनं त्वरितमारोहत वृक्षप्रासादम् ।
किं न खलु प्रेक्षध्वं पुरतो दुष्टो हस्ती इत एति ॥१८॥
अपि च । विचलति नूपुरयुगलं छिद्यन्ते च मेखला मणिखचिताः ।
वलयाश्च सुन्दरतरा रत्नाङ्कुरजालप्रतिबद्धाः ॥१९॥

---

(ग) कार्यमिति । आलानस्तम्भं बन्धनस्तम्भम् । महामात्रं प्रधानहस्तिपकम् । संक्षोभमुद्वेलनम् । "आलानं बन्धस्तम्भे" इत्यमरः । "महामात्रः समृद्धे च अमात्ये हस्तिपकाधिपे" इति मेदिनी ।

अपेति । बालकजनम् अपनयत राजमार्गादपसारयत । वृक्षाय प्रासादाय तत्, त्वरितमारोहत उभयत्रापि हे राजमार्गवर्तिनो जनाः । यूयमिति शेषः ।

आर्या जातिः ॥१८॥

विचलतीति । नूपुरयुगलं विचलति नितरां चञ्चलं भवति, मणिखचिता ग्रथितमणिकाः, मेखलाः काञ्चीदामानि च छिद्यन्ते, तथा रत्नाङ्कुरजालेन सुन्दरसुन्दरवलयमुद्रैन

(গ) কর্ণপূরক। আর্য্যা শুনুন—আপনার যে সেই খুণ্টমোড়ক নামে দুষ্ট হস্তী, সে বন্ধনস্তম্ভ ভাঙ্গিয়া, মাহুতকে মারিয়া ফেলিয়া, গুরুতর তোলপাড় করতঃ রাজপথে অবতীর্ণ হইল। তাহার পর এই সময়ে লোকে ঘোষণা করিল—

বালকদিগকে সরাইয়া লও, তাড়াতাড়ি গাছে ও দালানে উঠ। দেখিতেছ না? দুষ্ট হস্তী এইদিকেই আসিতেছে ॥১৮॥

तदो तेण दुट्ठहत्थिणा कल चलण-रदणेहिं फुल्ल णलिणिं विअ णअरिं उज्जइणिं अवगाहमाणेण समासादिदो परिव्वाजओ। तं अ परिब्भट्ट-दण्ड-कुण्डिआ-भाअणं सीअरेहिं सिञ्चिअ दन्तन्तरे खित्तं पेक्खिअ पुणोवि उग्घुट्टं जणेण—"हा परिव्वाजओ वावादीअदि" त्ति। (त)

ततस्तेन दुष्टहस्तिना कर चरण रदनैः फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन समासादितः परिव्राजकः। तञ्च परिभ्रष्टदण्ड कुण्डिकाभाजनं शीकरैः सिक्त्वा दन्तान्तरे क्षिप्तं प्रेक्ष्य पुनरप्युद्घुष्टं जनेन—"हा परिव्राजको व्यापाद्यते" इति।

प्रतिबद्धा स्वाधला अतएव मुक्तसरा वलयाः कङ्कणानि च भज्यन्तीति शेषः। सर्वत्र पलायमानानां स्त्रीणां गमनवशादिति च ग्रन्थः।

अत्र "भज्यन्ति" "पलायमानानां स्त्रीणां गमनवशात्" इत्येतेषां पदानामनभिधानेऽपि न न्यूनपदतादोषः प्रत्युत गुण एव वक्तुरुद्वेगवत्त्वात्। तथा च साहित्यदर्पणे—

"उत्तापानन्दमग्नादेः स्यान्न्यूनपदता गुणः।" आर्य्या जातिः ॥१८॥

(त) तत इति। कराः शुण्डा चरणाः पादाः रदनाः दन्ताः च तैः फुल्लनलिनीमिव विकसितपद्मां सरसीमिव। अवगाहमानेन आलोडयता समासादितो गृहीतः। परिभ्रष्टे भयेन हस्तात् पतिते दण्डकुण्डिकाभाजने दण्डः कमण्डलुरूपपात्रञ्च यस्य तम्। शीकरैः शुण्डस्थितजलबिन्दुभिः दन्तयोरन्तरे मध्ये।

"कुण्डी कमण्डलुः" इति त्रिकाण्डशेषः।

আর ও, ( গমনবেগে স্ত্রীলোকদিগের ) নূপুরযুগল চলিতেছে, মণিখচিত চন্দ্রহার ছিঁড়িতেছে এবং ক্ষুদ্র ক্ষুদ্র বজ্রখচিত বলয় পড়িয়া যাইতেছে ।১৮।

(ত) তাহার পর সেই দুষ্ট হস্তী শুণ্ড চরণ ও দন্তদ্বারা প্রস্ফুটিত পদ্মিনীর ন্যায় উজ্জয়িনী নগরীকে আলোড়ন করিতে থাকিয়া একটা পরিব্রাজককে ধরিল। পরিব্রাজকের হস্ত হইতে দণ্ড ও কমণ্ডলু পড়িয়া গেল, হস্তী তাহাকে জলবিন্দুদ্বারা সিক্ত করিয়া, উভয় দন্তের মধ্যে

वसन्त । ससम्भ्रमम् । अहो पमादो ! अहो पमादो ! । (थ)

कर्ण । अलं सम्भमेण । सुणादु दाव अज्जआ । तदो विच्छिस्सविसरुलु-सिङ्खला-कलावअं दन्तन्तरपरिग्गहिदं परिव्वाजअं उव्वहन्तं तं पेक्खिअ, कसञ्जरएण मए णहि णहि अज्जआए अस्स-पिण्डोवपुट्टेण दासेण वामचलणेण जूदखेलअं उग्घुसिअ उग्घुसिअ, तुरिदं आवणादो लोहदण्डं गेण्हिअ, आआरिदो सो दुट्ठहत्थी । (द)

(थ) अहो प्रमाद ! अहो प्रमाद ! ।

(द) अलं सम्भ्रमेण । शृणोतु तावदार्या । ततो विच्छिन्न विसङ्कुल शृङ्खला-कलापम्, दन्तान्तर परिगृहीत परिव्राजकमुद्वहन्तं तं प्रेक्ष्य, कर्णपूरकेण मया, नहि नहि, आर्याया अन्नपिण्डोपपुष्टेन दासेन, वामचरणेन द्यूतखेलकम् उद्घुष्य उद्घुष्य, त्वरितमापणात् लौहदण्डं गृहीत्वा, आकारित स दुष्टहस्ती ।

(थ) वसन्त इति । यद्यपि "प्रमादोऽनवधानता" इत्यमरः, तथापि अत्र विपत्तिरिति बोद्धव्यम् । उत्तररामचरितेऽपि विपदर्थे प्रमादशब्दो दृश्यते । यथा—

"मैथिलि ! प्रमाद प्रमाद !" इति ।

(द) कर्ण इति । सम्भ्रमेण उद्वेगजनितत्वरया । विच्छिन्नो वेगेन द्विधा त्रिधा कृत अतएव विसङ्कुल इतस्ततो विकीर्ण शृङ्खलानां कलाप समूहो येन तम् । त हस्तिनम् । अन्नपिण्डेन ओदनकवलेन उपपुष्ट परिपुष्टितदेहेन । वामचरणेन वामदिग्गमनेन । द्यूतखेलक नवपरिव्राजकीभूत हस्तिना दन्ताभ्यामाधृत संवाहकम्, उद्घुष्य मर्म्ममार्गं 'इत्यादि' घोषयित्वा । आपणात् क्रयविक्रयस्थानात् । आकारित आहूत ।

তুলিল দেখিয়া, আবারও লোকে ঘোষণা করিল,—"হায় ! পরিব্রাজককে মারিয়া ফেলিল ।"

(থ) বসন্তসেনা । ( উদ্বেগের সহিত ) হায় হায় ! বড় বিপদ বড় বিপদ ।

वसन्त। तदो तदो?। (घ)

कर्ण। आहणिऊण सरोसं तं हत्थिं विंझ-सेल-सिहराभं।
मोआविओ मए सो दन्तन्तरसंठिओ परिव्वाजओ ॥२०॥

वसन्त। सुट्ठु दे किदं। तदो तदो?। (ङ)

(घ) ततस्ततः?।

आहत्य सरोषं तं हस्तिनं विन्ध्यशैलशिखराभम्।
मोचितो मया स दन्तान्तरसंस्थितः परिव्राजकः ॥२०॥

(ङ) सुष्ठु त्वया कृतम्। ततस्ततः?।

आहत्येति। विन्ध्यशैलशिखराभं विन्ध्यपर्वतशृङ्गतुल्यविशालम्, सरोषं [illegible] हस्तिनम्, आहत्य तेन लौहदण्डेन ताडयित्वा।

अत्र समासगता आर्थी उपमालङ्कारः। गीतिर्जातिः ॥२०॥

(ङ) सुष्ठु इति। सुष्ठु उत्कृष्टम्। "सुष्ठु दुष्ठु प्रशंसने" इत्यमरः।

(ঘ) কর্ণপূরক। আর্য্যা উদ্বেগ করিবেন না, শুনুন। তাহার পর সেই হস্তী শিকলগুলিকে ছিঁড়িয়া ইতস্ততঃ বিক্ষিপ্ত করিয়া, দন্তযুগলের মধ্যে ধরিয়া সেই পরিব্রাজককে বহন করিতে লাগিল দেখিয়া, আমি কর্ণপূরক,—না না, আপনার অন্নে পরিপুষ্ট ভৃত্য, বা' দিকে যাইয়া, "ভয় নাই ভয় নাই" বলিয়া, সেই দ্যুতকর-সংবাহকের প্রতি উচ্চস্বরে ঘোষণা করিয়া করিয়া, তাড়াতাড়ি কোন দোকান হইতে একটা লোহার দণ্ড লইয়া, সেই দুষ্ট হস্তীকে আহ্বান করিলাম।

(ঘ) বসন্তসেনা। তা'র পর, তা'র পর?।

কর্ণপূরক। বিন্ধ্যপর্ব্বতের শৃঙ্গের মত সেই হস্তীকে ক্রোধের সহিত আঘাত করিয়া, তাহার দন্তদ্বয়ের মধ্যবর্ত্তী সেই পরিব্রাজককে আমি মুক্ত করিয়াছি ॥২০॥

(ঙ) বসন্তসেনা। তুই খুব ভাল করিয়াছিস্। তা'র পর, তা'র পর?।

कण्ण। तदो अज्जए। "साहु रे कण्णऊरअ! साहु" त्ति एत्तिअमेत्तं भणन्ती, विसम-भर-कन्ता विअ णावा एक्कदो पल्हत्था सअला उज्जइणी आसि। तदो अज्जए! एक्केण सुण्णाइं आहरणट्ठाणाइं परामसिअ, उड्ढ पेक्खिअ, दीह णीससिअ, अअं पावारओ मम उवरि क्खित्तो। (प)

वसन्त। कण्णऊरअ! जाणीहि दाव, किं एसो जादीकुसुम-वासिदो पावारओ ण वेत्ति। (फ)

(प) तत आर्य्ये! "साधु रे कर्णपूरक! साधु" इत्येतावन्मात्रं भणन्ती विषमभाराक्रान्ता इव नौः, एकतः पर्य्यस्ता सकला उज्जयिनी आसीत्। तत आर्य्ये! एकेन शून्यानि आभरणस्थानानि परामृश्य ऊर्द्ध्वं प्रेक्ष्य, दीर्घं निःश्वस्य, अयं प्रावारको ममोपरि उत्क्षिप्तः।

(फ) कर्णपूरक! जानीहि तावत् किमेष जातीकुसुमवासितः प्रावारको नवेति।

---

(प) कर्ण इति। विषमभरेण गुरुतरभारेण आक्रान्ता, नौस्तरणिरिव। एकतः एकस्यां दिशि, पर्य्यस्ता अवनतीभूता बहुतरलोकागमनादिति भावः। एकेन केनचिज्जनेन, आभरणानां कटकाद्यलङ्काराणां स्थानानि मणिबन्धादीनि परामृश्य तत्तदाभरणमस्तु नवेति ज्ञानार्थं संस्पृश्य। दारिद्र्यभयादुपयुक्तपारितोषिकदानाशक्ततया ईश्वरं प्रति निर्वेद-ज्ञापनाय ऊर्द्ध्वदर्शनम्, तद्दुःखेन च निश्वासः। प्रावारकः उत्तरीयवस्त्रम्।

(फ) वसन्त इति। चारुदत्तप्रावारकस्यैव जातिकुसुमवासिततया ज्ञातपूर्व्वत्वात् तेनैवायं दत्त इति सम्भावयन्ती पृच्छति जानीहीति।

---

(প) কর্ণপূরক। আর্য্যে! তা'র পর—'সাধু, কর্ণপূরক! সাধু" এই এক কথামাত্র বলিতে বলিতে, অত্যন্ত-ভারাক্রান্ত নৌকার মত, সমস্ত উজ্জয়িনী এক দিকে নত হইয়া পড়িল। আর্য্যে! তা'র পর, একটী লোক, হস্তামর্ষণ করিয়া, গাত্রের অলঙ্কারস্থানগুলিকে শূন্য জানিয়া, ঊর্দ্ধদিকে দৃষ্টি করিয়া, দীর্ঘনিশ্বাস পরিত্যাগ করিয়া, এই চাদরখানি আমার উপরে নিক্ষেপ করিলেন।

कर्ण। अज्जए! मदगन्धेण सुट्ठु तं गन्धं ण जाणामि। (ब)

वसन्त। णामं पि दाव पेक्ख। (भ)

कर्ण। इमं णाम, अज्जआ एव्व वाएदु। इति प्रावारकमुपनयति। (म)

वसन्त। अज्जचारुदत्तस्स। इति वाचयित्वा सस्पृहं गृहीत्वा प्रावृणोति। (य)

(ब) आर्ये! मदगन्धेन सुष्ठु तं गन्धं न जानामि।

(भ) नामापि तावत् प्रेक्षस्व।

(म) इदं नाम, आर्यैव वाचयतु।

(य) आर्यचारुदत्तस्य।

---

(ब) कर्णेति। मदस्य हस्तिनो दानजलस्य गन्धेन नासिकायास्तद्गन्धाभिभूतत्वेन, सुष्ठु सम्यक्, तं जातीकुसुमसम्बन्धीयम्।

(भ) वसन्त इति। नाम लिखितमस्ति न वेति प्रेक्षस्वेत्यर्थः।

(म) कर्ण इति। एतेन कर्णपूरकस्य अक्षरपरिचयो नासीदिति प्रतीयते।

(य) वसन्त इति। "षष्ठी प्रमादे" इत्यारभ्य एतदन्तं विधानं नाम मुखसन्ध्यङ्गम्।

---

(ব) বসন্তসেনা। কর্ণপূরক। দেখ দেখি, এই চাদরখানি জাতী-পুষ্পে বাসিত কি না।

(ব) কর্ণপূরক। আর্য্যে। হস্তীর মদগন্ধে, সে গন্ধ ভাল মত বুঝিতেছি না।

(ভ) বসন্তসেনা। নাম আছে কিনা দেখ।

(ম) কর্ণপূরক। এই নাম আছে, আপনি পড়ুন। ( এই বলিয়া চাদরখানি দিল। )

[য] বসন্তসেনা। 'আর্য্য চারুদত্তের'। ( এইরূপ নাম পড়িয়া, সস্পৃহভাবে গ্রহণ করিয়া, গাত্রে আবরণ করিল। )

चेटी । कण्णऊरअ ! सोहइ अज्जआए पावारओ । (र)

कर्ण । आं, सोहइ अज्जआए पावारओ । (ल)

वसन्त । कण्णऊरअ ! इदं दे पारितोसिअं । इत्याभरणं प्रयच्छति । (व)

कर्ण । शिरसा गृहीत्वा प्रणम्य च । संपदं सुट्ठु, सोहइ अज्जआए पावारओ । (श)

वसन्त । कण्णऊरअ ! एदाए वेलाए कहिं अज्जचारुदत्तो ? । (ष)

(र) कर्णपूरक ! शोभते आर्याया प्रावारकः ।

(ल) आं, शोभते आर्याया प्रावारकः ।

[व] कर्णपूरक ! इदं ते पारितोषिकम् ।

[श] साम्प्रतं सुष्ठु, शोभते आर्याया प्रावारकः ।

"सुखेड् वक्रतौ योऽर्थस्तद्विधानमिति स्मृतम् ।" इति साहित्यदर्पणलक्षणात् ।

[र] चेटी इति । आर्याया एव शोभत इत्यर्थः । सुतरामयमस्यै दीयतामिति भावः ।

[ल] कर्ण इति । आमित्यङ्गीकारार्थमव्ययम् । यतोऽहमपि दातुमिच्छामीति भावः ।

[श] कर्ण इति । सुष्ठु सम्यक्, आभरणदानपूर्वकग्रहणेन स्वच्छन्दनादित्याशयः ।

[র] মদনিকা। কর্ণপূরক! চাদরখানি আর্য্যার বেশ শোভা পাইতেছে।

[ল] কর্ণপূরক। ঠিক্, চাদরখানি আর্য্যার বেশ শোভা পাইতেছে।

[ব] বসন্তসেনা। কর্ণপূরক! এই তোর পারিতোষিক। (ইহা বলিয়া অলঙ্কার দান করিল।)

[শ] কর্ণপূরক। (মস্তকে ধারণপূর্ব্বক প্রণাম করিয়া) চাদরখানি আর্য্যার এখন বেশ শোভা পাইতেছে।

कर्ण । एदिणा ज्जेव मग्गेण पवुत्तो गन्तुं गेहं । (स)

वसन्त । हञ्जे ! उवरिदणं अलिन्दअं आरुहिअ अज्ज-चारुदत्तं पेक्खेह्म । (ह)

इति निष्क्रान्ताः सर्वे ।

## इति द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः । (क्ष)

(ष) कर्णपूरक ! एतस्यां वेलायां कुत्रार्यचारुदत्तः ? ।

(स) एतेनैव मार्गेण प्रवृत्तो गन्तुं गेहम् ।

(ह) हञ्जे ! उपरितनमलिन्दकमारुह्य आर्यचारुदत्तं प्रेक्षामहे ।

(स) कर्ण इति । एतेनैव मध्या अवनमसि हितेनैव ।

(ह) वसन्त इति । हञ्जे इति चेट्याः सम्बोधनम् । अलिन्दकं द्वारपार्श्वस्थगृहम् । अत्र महतानुक्तकाव्यार्थस्यारम्भात् करणं नाम मुखसन्धेरङ्गम् । यथा च—"करणं पुनः । प्रकृतार्थसमारम्भः—" इति साहित्यदर्पणे ।

(क्ष) इतीति । अस्मिन्नङ्के द्यूतकारिणः संवाहकस्यैव चरितस्य प्रधानत्वात् "द्यूतकरसंवाहक" इति नामेति बोध्यम् ।

इति महामहोपाध्याय श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यविरचितायां मृच्छकटिक-टीकायां वसन्तसुपलक्षमाख्यायां द्वितीयाङ्कविवरणं समाप्तम् ॥०॥

[ষ] বসন্তসেনা। কর্ণপূরক। এই সময়ে আর্য্য চারুদত্ত কোথায়?।

[স] কর্ণপূরক। এই পথেই বাড়ী যাইতে আরম্ভ করিয়াছেন।

[হ] বসন্তসেনা। ওলো মদনিকা! আয়, উপরের দ্বারপার্শ্বস্থ গৃহে আরোহণ করিয়া, আর্য্য চারুদত্তকে দেখি।

(ইহার পর সকলে চলিয়া গেল।)

(ক্ষ) দ্যূতকরসংবাহক নামে দ্বিতীয় অঙ্ক সমাপ্ত ॥০॥

# तृतीयोऽङ्कः।

———:०:———

तत प्रविशति चेट । (क)

चेटः । शुजणे क्खु भिच्चाणुकम्पके
शामिए णिद्धणके वि शोहदे ।
पिशुणे उण दव्वगव्विदे
दुक्कले क्खु, पलिणामदालुणे ॥१॥

सुजन खलु भृत्यानुकम्पक स्वामी निर्धनकोऽपि शोभते ।
पिशुन पुनर्द्रव्यगर्वितो दुष्कर खलु परिणामदारुण ॥१॥

(क) तत इति । चेटश्चारुदत्तस्य भृत्यो वर्द्धमानकनामा ।

सुजन इति । सुजन खलताप्रभृतिदोषराहित्येन प्रशस्तहृदय अतएव भृत्यानुकम्पकी भृत्यान् प्रति दयाकारक, स्वामी प्रभु, निर्धनकोऽपि सन् शोभते खलु प्रियत्वात् सर्वेभ्य एव रोचते । पुन किन्तु, पिशुन खल, द्रव्येण धनेन गर्वितश्च स्वामी, परिणामे कार्य्यशेषे दारुणो वेतनादानेन दोषप्रवर्त्तनादिना च भयङ्कर, अतएव दु खेन क्रियते सेवित इति दुष्कर कष्टेन सेवनीय इत्यर्थ । अस्माक स्वामी चारुदत्त सुजनतादिगुणवानिति नितरामेव शोभत इति भाव ।

अतएवात्र अप्रस्तुतात् स्वामिसामान्यात् मनसा प्रस्तुतस्य स्वामिविशेषस्य चारुदत्तस्य प्रतीतेरप्रस्तुतप्रशसालङ्कार, तथा सुजनदुर्जनयोर्विरूपयो सघटनया विषमालङ्कारश्च, अनयोरङ्गाङ्गिभावेन सङ्कर ।

वैतालीय छन्द ॥१॥

[क] তদনন্তর চারুদত্তের ভৃত্যের প্রবেশ।

अवि च । सश्श-पलक्क-वलद्दे ण शक्कि वालिदुं
अण्ण-कलत्त-पशत्ते (१) ण शक्कि वालिदुं ।
जूद-पशत्त-मणुश्शे ण शक्कि वालिदुं
जे वि शहाविअदोशे ण शक्कि वालिदुं ॥

अपि च । शस्य लम्पट बलीवर्दो न शक्यो वारयितु
अन्य कलत्र प्रसक्तो न शक्यो वारयितुम् ।
द्यूत प्रसक्तो मनुष्यो न शक्यो वारयितु
योऽपि स्वाभाविकदोषो न शक्यो वारयितुम् ॥२॥

---

इत प्रभृति चतुर्थाङ्कसमाप्तिपर्यन्तं प्रतिमुखसन्धिः । तथा च चारुदत्तेन सह समागमरूपफललाभाय तदुद्दिष्टे वसन्तसेनाया अतित्वरया गमनप्रवृत्ति प्रयत्नो नाम द्वितीयावस्था । यथा साहित्यदर्पणे—

"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।"

एव चारुदत्त प्रति वसन्तसेनाया अनुराग एव परस्परसमागमरूपफलस्य प्रधानो हेतु, स तु मुखसन्धावुत्पन्न, इह पुनश्चारुदत्तगृहादलङ्कारापहरणवृत्तान्तमुपलभ्य वसन्तसेनाया मोहप्राप्त्यादिना सर्वैरेव किञ्चिल्लक्ष्य इति । यथा तत्रैव—

"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥"

अन्य च विलासादीनि त्रयोदशाङ्गानि यथास्थानं निर्दिश्य लक्षणानि वक्ष्याम ।

---

ভৃত্য। সজ্জন এবং ভৃত্যের প্রতি দয়ালু প্রভু, নির্ধন হইলেও ভাল। কিন্তু খলস্বভাব, ধনগর্বিত এবং পরিশেষে ভয়ঙ্কর প্রভুর সেবা করা দুষ্কর ॥১॥

আরও, শস্যলোভী বৃষকে বারণ করিতে পারা যায় না, পরস্ত্রীতে আসক্ত লোককে বারণ করিতে পারা যায় না, দ্যূতে আসক্ত মানুষকে

---

(১) অন্য প্রসক্ত কলত্রে ।

**काचि वेला अज्जचालुदत्तश्श गन्धव्वं शुणिदुं गदश्श। अदिक्कमदि, अद्धलत्ते, अज्ज वि ण आअच्छदि। ता जाव वाहिल-दुआल-शालाए गदुअ शुविश्शं।** इति तथा करोति। (ख)

(ख) कापि वेला आर्य्यचारुदत्तस्य गान्धर्व्वं श्रोतुं गतस्य। अतिक्रामति अर्द्धरात्रो अद्यापि नागच्छति। तद्यावत् बहिर्द्वारशालायां गत्वा स्वप्स्यामि।

---

ग्रस्तेति। मत्तानां धान्यादीनां लम्पटो भोजनलोभी बलीवर्द्दो वृषभ, वारयितुं न शक्य, वारितोऽपि अवसरं प्राप्यैव तत् भक्षयितुं प्रवर्त्तत इति भाव। अन्यत्तथा प्रसक्त परदारासक्तो जन, वारयितुं न शक्य, पत्यादिना कदाचिद्वारितोऽपि सुविधां प्राप्यैव पुन प्रवर्त्तत इत्याशय। द्यूतप्रसक्तमनुष्योऽपि वारयितुं न शक्य, पित्रादिना वारितोऽपि तदसन्निधाने तत्रैव पुन प्रवर्त्तत इत्यभिप्राय। तथा योऽपि स्वाभाविकदोष, सोऽपि वारयितुं न शक्य, स्वाभाविकत्वादेवेति भाव। सर्वदा भूरिदानमेव चारुदत्तस्य स्वाभाविको दोष, स पुनर्बन्धुभिर्वारितोऽपि न गत, अतएवेयं दारिद्र्यदुर्गतिः, समुदायार्थ।

अतएवात्रापि अप्रस्तुतात् स्वाभाविकदोषसामान्यात् प्रस्तुतस्य भूरिदानरूप चारुदत्त स्वाभाविकदोषरूपविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कार। अत्रादि शीलस्य वक्तृ प्रथमोक्तारय एव उत्तमवनात्मकस्योपयोगितारूपार्थे "ण शक्कि वालिदु" इत्यस्य प्रतिपादनमभिधानमिति न अनवीकृतत्वदोष इति दिक्।

"गह्वरी जाति" इति पृथ्वीधर ॥२१॥

(ख) कापीति। कापि दीर्घा, वेला काल। गन्धर्वाणामिदमिति गान्धर्वं गानम्। अतीतमिति शेष। स्वप्स्यामि शयिष्ये।

---

বারণ করিতে পারা যায় না এবং যেটি স্বাভাবিক দোষ, তাহা বারণ করিতে পারা যায় না ॥২১॥

[খ] কিছুকাল অতীত হইল, আর্য্য চারুদত্ত গান শুনিতে গিয়াছেন, অর্দ্ধরাত্র অতীত হয়, তথাপি আসিতেছেন না। সুতরাং বহির্দ্বারের গৃহে যাইয়া শয়ন করি। (এই বলিয়া তাহাই করিল)

ततः प्रविशति चारुदत्तो विदूषकश्च।

चारु। अहो अहो। साधु साधु, रेभिलेन गीतम्। वीणा हि नाम असमुद्रोत्थितं रत्नम्। कुतः—(ग)

उत्कण्ठितस्य हृदयानुगुणा वयस्या
सङ्केतके चिरयति प्रवरो विनोदः।
संस्थापना प्रियतमा विरहातुराणां
रक्तस्य रागपरिवृद्धिकरः प्रमोदः ॥३॥

(ग) चारु इति। अहो इत्याश्चर्ये। तस्य चातिशये द्विरुक्तिः। रेभिलेन तन्नाम्नैव गायकेन। रत्न रत्नस्वरूपा।

अत्र परवाक्ये अधिकारूढवैशिष्ट्यरूपकमलङ्कारः।

उत्कण्ठितस्येति। अत्र वीणेति गद्यस्थमुद्देश्यपदमनुषज्यते। तथा च वीणा, उत्कण्ठितस्य जनस्य, हृदयानुगुणा मनोऽनुकूला, वयस्या वयस्यास्वरूपा, तद्वदेव सान्त्वनाकारित्वादिति भावः। सङ्केतके रमणाय सङ्केतकारिणि जने, चिरयति विलम्बं कुर्वति सति, प्रवरो महान्, विनोदः शान्तिस्तदुपाय इत्यर्थः। विरहातुराणां जनानां सम्बन्धे, संस्थापना मनसः स्थितिकारिणी धैर्यविधायिनी, प्रियतमा तत्स्वरूपा। तथा रक्तस्य कञ्चित् प्रति अनुरक्तस्य जनस्य, रागस्य तदनुरागस्य परिवृद्धिकरः, प्रमोदः प्रमोदहेतुभूता। सुतरां वीणा रत्नरूपैवेति भावः।

अत्र एकस्या वीणाया वयस्यात्वेन प्रियतमात्वेन च उल्लेखनादुल्लेखालङ्कारः, अत्र तु "गाम्भीर्य्येण समुद्रोऽसि" इत्यादिवत् रूपकालङ्कारयोग, कार्य्यभूतयोर्विनोद

---

তাহার পর চারুদত্ত ও বিদূষকের প্রবেশ।

[গ] চারুদত্ত। আশ্চর্য্য আশ্চর্য্য। রেভিল খুব ভাল গাহিয়াছেন। আর আমি মনে করি—বীণা জিনিষটী অসমুদ্রোত্থিত রত্ন। কারণ—

বীণাটী, উৎকণ্ঠিত লোকের মনের অনুকূল সখীস্বরূপ, সঙ্কেতকারী

विदू। भो! एहि, गेहं गच्छ म्ह। (घ)

चारु। अहो! सुष्ठु भाव-रेभिलेन गीतम्। (ङ)

विदू। मम दाव दुवेहिं ज्जेव हस्सं जाअदि, इत्थिआए सक्कदं पठन्तीए मणुस्सेण अ काअली गाअन्तेण। इत्थिआ दाव सक्कदं पठन्ती, दिस-णव-णस्सा विअ गिट्टी, अहिअं सुसुआअदि। मणुस्सोवि काअलीं गाअन्तो सुक्ख-सुमणो-दाम-वेट्टिदो वुड्ढपुरोहिदो विअ मन्तं जवन्तो, दिढं मे ण रोअदि। (च)

(घ) भो! एहि, गेहं गच्छाम।

(च) मम तावत् द्वाभ्यामेव हास्यं जायते, स्त्रिया संस्कृतं पठन्त्या, मनुष्येण च काकलीं गायता। स्त्री तावत् संस्कृतं पठन्ती, दत्त नव नास्या इव गृष्टि, अधिकं सुसु-यते, मनुष्योऽपि काकलीं गायन् शुष्क सुमनो दाम वेष्टितो वृद्धपुरोहित इव मन्त्रं जपन्, दृढं मे न रोचते।

प्रमोदयो: कारणभूतया वीणया सह अभेदेनाभिधानात् हेतुर्नामालङ्कारस्य अनयोर्मिथो-निरपेक्षतया संसृष्टि।

वसन्ततिलका छन्दः ॥३॥

(ङ) चारु इति। भावो विद्वान् यो रेभिलश्चेति तेन। "भावो विद्वान्" इत्यमरः।

(च) विदू इति। द्वाभ्यां काभ्यामित्याह स्त्रिया इति। मनुष्येण, पुरुषेण, काकलीं सूक्ष्ममधुरध्वनिम्, गायता गानत्वेन आविष्कुर्वता। गन्धोद्गमाभावे को दोष, येन तव हास्यं जायत इत्याह स्त्रीति। दत्ता नवा नूतना नास्या नासिकारज्जुर्यस्या

লোক বিনয় করিতে লাগিলে, চিত্ত-বিনোদনের প্রধান উপায়, বিরহার্তদিগের ধৈর্য্যধারিণী প্রিয়তমাস্বরূপ এবং অনুরক্ত লোকের অনুরাগবৃদ্ধিকারক আমোদের হেতু ॥৩॥

[ঘ] বিদূষক। সখে। আসুন, বাড়ী যাই।

[ঙ] চারুদত্ত। আশ্চর্য্য। বিদ্বান্ রেভিল বেশ গাহিয়াছেন।

चारु । वयस्य ! सुष्ठु खल्वद्य गीतं भाव-रेभिलेन । न च भवान् परितुष्टः ? । (छ)

रक्तञ्च नाम मधुरञ्च समं स्फुटञ्च
भावान्वितञ्च ललितञ्च मनोहरञ्च ।
किंवा प्रशस्तवचनैर्बहुभिर्मदुक्तैः
अन्तर्हिता यदि भवेद्वनितेति मन्ये ॥४॥

---

सा तादृशी, यद्दिरेकवारममुक्ता गौरिव । सुसूयते "सु सु" इत्येवं शब्दं करोति, सच्छिद्रित्वात् यस्य । इदमस्वाभाविकमित्यतो मे हास्यं जायत इति भावः । शुष्काणां सुमनसां पुष्पाणां दाम्ना मालया वेष्टितः पवित्रयतीव. । पुष्पाणां शुष्कतया तद्वेष्टितस्य अदर्शिकरत्वम्; तथा वार्द्धक्येन पतितदन्ततया विकृतस्वरत्वम्, एवञ्च तादृशपुरोहितस्य तथाविधस्वरेण मन्त्रजपेन विकृतत्वद्वयया हास्यं जायते, तथा पुरुषस्यापि स्त्रीयोग्य-काकलीगानेन विकृतत्वादेव हास्यं जायत इति भाव ।

(छ) चारु इति । परितुष्ट इति काकु., न परितुष्ट किमित्यर्थः ।

रक्तञ्चेति । रक्तञ्च स्वनवत् लोकानामनुरागजनकञ्च, मधुरं सुश्राव्यञ्च, समं पूर्वापरयोरुपयुक्तस्वरञ्च, स्फुटं स्पष्टाक्षरञ्च, भावान्वितं सुन्दरभावयुक्तञ्च, ललितं कोमलञ्च, मनोहरं हृदयाकर्षकञ्च, गीतमिति शब्दार्थेन सम्बध्यते । नाम इति स्वीकारोक्त्यर्थः ।

---

[চ] বিদূষক। আমার কিন্তু দুই কারণেই হাস্য জন্মে—(এক) স্ত্রীলোক সংস্কৃত পাঠ করে, (দ্বিতীয়) পুরুষ সূক্ষ্মস্বরে গান করে। নাসিকাতে বজ্জু নূতন যোজিত হইলে ধেনুর মত, স্ত্রীলোক সংস্কৃত পাঠ করিবার কালে অত্যন্ত 'সু সু' করে। আর শুষ্ক পুষ্পমাল্যে বেষ্টিত মন্ত্র-জপকারী বৃদ্ধ পুরোহিতের ন্যায় সূক্ষ্মস্বরে গানকারী পুরুষ, আমার বেশী ভাল লাগে না।

[ছ] চারুদত্ত। বয়স্য! বিদ্বান্ রেভিল আজ ভালই গাহিয়াছেন। তুমি সন্তুষ্ট হও নাই কি ?।

अपि च । तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टञ्च तन्त्रीस्वनं
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम् ।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥५॥

वा अथवा, मदुक्तैः बहुभिः प्रशंसावचनैः प्रशंसावाक्यैः, किं फलम्? अपि तु, न किञ्चिदित्यर्थः । शङ्केति वितर्के । तथा च वनिता काचित् स्त्री, अन्तर्हिता ईप्सित-रूपपुरुषवेशेन प्रच्छन्ना भवेदिति, यदि वितर्कं, मन्ये सम्भावयामि ; कथमन्यथा स्त्रीवदीदृशं पुरुषस्य गानमनुपपन्नमिति भावः ।

अत्र गानोत्कर्षं प्रति रक्तत्वादिबहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, "मन्ये" इति शब्दप्रयोगात् वाच्या भावाभिमानिनी उत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करः ।

"शङ्का प्रकाशसम्भाव्यक्रोधभ्रूप्रत्ययेषु च" इति विश्वः । "यदि सम्भावितर्कयोः" इति मेदिनी । वसन्ततिलका वृत्तम् ॥४॥

तमिति । गीतसमये विरतेऽपि गानकाले अतीतेऽपि, वर्णानां गानाक्षराणां या मूर्च्छना स्वराणामारोहावरोहक्रमस्तदन्तर्गतं तन्मध्यवर्त्तिनम्, तारं विशालीभूतम्, अपि तथा, विरामे अवसाने मृदु मृदुलम्, हेलया अवहेलया संयमितमवरुद्धम्, पुनश्च ललितं कोमलं कोमलभावेन पुनश्च आविष्कृतम्, रागे वसन्तादिरागप्रकाशसमये द्विरुच्चारितं वारद्वयेनाविष्कृतम्, तस्य रेभिलस्य, तं श्रुतपूर्वम्, स्वराणां निषादादीनां संक्रमं पारम्पर्यम्, मृदुगिरः कोमलवाक्यानि, श्लिष्टं गीतेन सह सुसम्बद्धम्, तन्त्रीस्वनं वीणा-तन्त्रीणां निनादञ्च, शृण्वन्निव गच्छामि इति यत्, तत् सत्यं यथार्थम् अतएव सर्वथा एतत् गीतं निनेति भावः ।

अत्रापि गानोत्कर्षं प्रति तारत्वादिबहुतरकारणोपन्यासात् समुच्चयः, वाच्या भावाभि-

সেই গান অনুরাগজনক, মধুর, পূর্ব্বাপর সমান, সুস্পষ্ট, ভাবযুক্ত, কোমল এবং চিত্তাকর্ষক। আমার বহুতর প্রশংসাবাক্য বলায় প্রয়োজন কি? আমি তর্ক করিয়া মনে করি যে, কোন স্ত্রীলোক রেভিলরূপে প্রচ্ছন্ন থাকিয়া ঐ গান করিয়াছে ॥৪॥

विदू। भो वअस्स! आवणन्तर-रच्छा-विभाएसु सुहं कुक्कुरा वि सुत्ता। ता गेहं गच्छम्ह। (अग्रतोऽवलोक्य।) वअस्स! पेक्ख पेक्ख; एसो वि अन्धआरस्स विअ अवआसं देन्तो, अन्तरिक्ख-पासाददो ओदरदि भअवं चन्दो। (ज)

(ज) भो वयस्य! आपणान्तर-रथ्या-विभागेषु सुखं कुक्कुरा अपि सुप्ताः। तद् गृहं गच्छावः। वयस्य! प्रेक्षस्व प्रेक्षस्व, एषोऽपि अन्धकारस्येव अवकाशं ददत् अन्तरिक्षप्रासादात् अवतरति भगवान् चन्द्रः।

सम्भिन्नो क्रियान्तरे च, अनन्तरमुच्चारितत्वेन मधुरः। तथा एकवचनान्तपदसमुदाय-मध्ये "तदुगिरः" इति बहुवचनप्रयोगात् भग्नप्रक्रमतादोषः, न तु "तदुगिरं"मिति पाठेनैव समाधेयः।

मूर्च्छनामाह सङ्गीतदामोदरे—

"क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्।
सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च॥"

शार्दूलविक्रीडितं छन्दः ॥५॥

(ज) विदू इति। आपणानामन्तरे हट्टाभ्यन्तरे या रथ्या तस्याः विभागेषु प्रदेशेषु कुक्कुरा अपि सुखं सुप्ताः निद्रिताः, अतएव रात्रिरधिका सञ्जातेति भावः। अवकाश-मवस्थानम्। अन्तरिक्षमाकाशमेव प्रासादः निरवलम्बनस्थानत्वाद्दाटालिका तस्मात्।

আরও, গানের সময় অতীত হইলেও, গানাক্ষরের মূর্চ্ছনার মধ্যে উচ্চ, অবসানে কোমল, স্বরলীলাক্রমে অবরুদ্ধ, রাগের সময় দুইবার উচ্চারিত স্বরলহরী, কোমল বাক্য এবং সুসংলগ্ন বীণাতন্ত্রীর শব্দ—এই সকল যেন আমি শুনিতে শুনিতে যাইতেছি ॥৫॥

(জ) বিদূষক। বয়স্য! হাটের ভিতরে রাস্তার একদিকে কুকুর-গুলিও সুখে নিদ্রা যাইতেছে। অতএব আমরা বাড়ী যাই। সখে! দেখ দেখ—ভগবান্ এই চন্দ্রও, অন্ধকারকে যেন বিস্তৃত হইবার স্থান দিয়া, আকাশহর্ম্ম্য হইতে অবতীর্ণ হইতেছেন।

चारु। सम्यगाह भवान्।

असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः।
जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥६॥

विदू। भो! एदं अम्हाणं गेहं। वड्ढमाणअ! वड्ढमाणअ! उग्घाटेहि दुआरअं। (झ)

चेटः। अज्जमित्तेआह शल-शञ्जोए शुणीअदि। आगदे अज्जचालुदत्ते। ता जाव दुआलअं शे उग्घाटेमि। तथा कृत्वा। अज्ज! वन्दामि, मित्तेअ! तुमंपि वन्दामि। एत्थ विच्छिण्णे आशणे णिशीदन्तु अज्जा।

(झ) भो! इदमस्माकं गृहम्। वर्द्धमानक! वर्द्धमानक! उद्घाटय द्वारकम्।
(ञ) आर्यमैत्रेयस्य स्वरसंयोग श्रूयते। आगत आर्यचारुदत्तः, तद्यावत् द्वारमस्य

---

अत्र उत्प्रेक्षालिङ्गकेवलरूपकयोरङ्गाङ्गिभावेन सङ्करः।

असाविति। हि यस्मात्, उन्नता कोटिरग्रदेशो यस्य सः, अतएव जले अवगाढस्य मग्नस्य, वनद्विपस्य वन्यहस्तिनः, अवशिष्टं जलमग्नादवशिष्टम्, तीक्ष्णं सूक्ष्मम्, विषाणाग्रमिव दन्ताग्रभाग इव, असौ दृश्यमानः, इन्दुश्चन्द्रः, तिमिरावकाशम् अन्धकारस्य प्रसरणस्थानम्, दत्त्वा, अस्तं व्रजति।

अत्र श्रौती उपमालङ्कारः। उपजातिर्वृत्तम् ॥६॥

(ञ) चेट इति। स्वरसंयोगः कण्ठध्वनिसम्बन्धः, श्रूयते कर्णे अनुभूयते। आसने आसनद्वयम्, निषीदतम् उपविशतम्।

---

চারুদত্ত। তুমি ঠিক বলিয়াছ।

কারণ, জলমগ্ন বন্য হস্তীর মগ্নাবশিষ্ট তীক্ষ্ণ দন্তাগ্রের ন্যায়, উন্নতাগ্র ঐ চন্দ্র, অন্ধকারকে বিস্তৃত হইবার স্থান দিয়া, অস্ত যাইতেছেন ॥৬॥

(ঝ) বিদূষক। বয়স্য! এই আমাদের বাড়ী। বর্দ্ধমান! বর্দ্ধমান! দ্বার উদ্ঘাটন কর।

उभौ नाट्येन प्रविश्य उपविशतः ।

विदू । वड्ढमाणअ ! रअणिअं सद्दावेहि पादाइं धोइदुं । (ट)

चारु । सानुकम्पम् । अलं सुप्तजनं प्रबोधयितुम् । (ठ)

चेटः । अज्जमित्तेअ ! अहं पाणिअं गेण्हेि, तुमं पादाइं धोवेहि । (ड)

---

उद्घाटयामि । आर्य ! वन्दे, आर्यमैत्रेय ! त्वामपि वन्दे । अत्र विस्तीर्णे आसने निषीदतमार्यौ ।

(ट) वर्द्धमानक ! रदनिकां शब्दापय पादौ धावितुम् ।

(ड) आर्यमैत्रेय ! अहं पानीयं गृह्णामि, त्वं पादौ धाव ।

---

(ट) विदू इति । शब्दापय आह्वय । धावितुं शोधयितुं प्रक्षालयितुमित्यर्थः ।

(ठ) चारु इति । सुप्तजनं निद्रितलोकम्, प्रबोधयितुं जागरयितुं चेष्टया अलमित्यर्थः । तस्य अत्यन्तश्रमभवात् तन्निषेधार्थ इति भावः । एतेन चारुदत्तस्य सुविवेचकत्वं व्यज्यते ।

(ड) चेट इति । पाणिअं पानीयपात्रम् । धाव करघर्षणेन प्रक्षालय ।

---

(ণ) ভৃত্য। আর্য্যমৈত্রেয়ের স্বর শুনিতেছি, সুতরাং আর্য্য চারুদত্ত আসিয়াছেন, অতএব উহার জন্য দ্বার উদ্ঘাটন করি। (তাহা করিয়া) আর্য্য! প্রণাম, মৈত্রেয়! আপনাকেও প্রণাম। এই আসন দুইখানি বিস্তৃত আছে, ইহাতে আপনারা উপবেশন করুন।

চারুদত্ত ও বিদূষক অভিনয় অনুসারে প্রবেশ করিয়া উপবেশন করিলেন।

(ট) বিদূষক। বর্দ্ধমান! পা ধোয়াইবার জন্য রদনিকাকে ডাক।

(ঠ) চারুদত্ত। (দয়ার সহিত) নিদ্রিত লোককে জাগাইবার প্রয়োজন নাই।

विदू। सक्रोधम्। भो वअस्स! एसो दाणिं दासीए पुत्तो भविअ पाणिअं गेण्हेदि, मं उण बम्हणं पादाइं धोवावेदि। (ढ)

चारु। वयस्य! मैत्रेय! त्वमुदकं गृहाण, वर्द्धमानकः पादौ प्रक्षालयतु। (ण)

चेटः। अज्जमित्तेअ! देहि उदअं। (त)

(ढ) भो वयस्य! एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति मां पुनर्ब्राह्मणं पादौ धावयति।

(त) आर्य्यमैत्रेय! देहि उदकम्।

---

(ढ) विदू इति। मामिति प्रयोज्य कर्त्तृ, कर्म्मता प्राप्तम्, धावयतीत्यस्य हेतुमन्त्वात्। तथा च पादप्रक्षालनव्यापारे उदकधारणापेक्षया हस्तेन पादघर्षणस्य निकृष्टकार्य्यतया तस्यैव भृत्यकर्त्तव्यत्वमुचितम्, किन्त्वत्र तद्विपरीतमभिधाय मामयमपमानितवानिति भाव।

(ण) चारु इति। प्रक्षालयतु करघर्षणेन परिशोधयतु। एव स्मृते तवापमान परिहृतो भवतीति भाव।

---

(ড) ভৃত্য। আর্য্যমৈত্রেয়! আমি জল লইতেছি, আপনি পাদ-প্রক্ষালন করুন।

(ঢ) বিদূষক। (ক্রোধের সহিত) বয়স্য! এ বেটা দাসীর পুত্র হইয়া এখন জল ধরিবে, আর আমি ব্রাহ্মণ, আমাকে দিয়া পা ধোয়াবে।

(ণ) চারুদত্ত। সখে! মৈত্রেয়! তুমি জল ধর, বর্দ্ধমান পা ধোয়াক।

(ত) ভৃত্য। আর্য্যমৈত্রেয়! জল দাও।

विदूषकस्तथा करोति । चेटश्चारुदत्तस्य पादौ प्रक्षाल्यापसरति । (थ)

चारु । दीयतां ब्राह्मणस्य पादोदकम् ।

विदू । किं मम पादोदएहिं, भूमीए ज्जेव मए ताडिदगद्दहेण विअ पुणोवि लोट्टिदव्वं । (द)

चेटः । अज्जमित्तेअ ! बम्हणे क्खु तुमं । (ध)

विदू । जधा सव्वणाआणं मज्झे डुण्डुहो, तधा सव्वबम्हणाणं मज्झे अहं बम्हणो । (न)

(द) किं मम पादोदकेन, भूम्यामेव मया ताडितगर्दभेनेव पुनरपि लोठितव्यम् ।

(ध) आर्य्यमैत्रेय ! ब्राह्मण खलु त्वम् ।

(न) यथा सर्वनागानां मध्ये डुण्डुभः, तथा सर्वब्राह्मणानां मध्ये अहं ब्राह्मणः ।

---

(थ) विदू इति । तथा करोति अर्द्धमानकहस्ते उदकं ददाति । अपसरणन्तु कौतुककार्यार्थम् ।

(द) विदू इति । भूम्यामेव, धूलिपूर्णपादेन शय्यारोहणे तस्या मलिनत्वसम्भवादिति भावः । निर्वेदादुक्तिरियम् ।

(ध) चेट इति । ब्राह्मणः खलु त्वम्, अतएव पादौ ध्रुवमेव प्रक्षालयामीति वाक्यार्थः ।

(न) विदू इति । डुण्डुभो विषविहीन सर्पविशेषः ('ढोंड़ा साप' इति यस्य प्रसिद्धिः) । अहं ब्राह्मणः, ब्रह्मतेजोविहीन इति भावः ।

---

(থ) বিদূষক বর্দ্ধমানের হস্তে জলপাত্র দিল। ভৃত্য চারুদত্তের পা ধোয়াইয়া সরিয়া গেল।

চারুদত্ত। ব্রাহ্মণের পা ধোয়াব জল দে।

(দ) বিদূষক। আমার পা ধোয়াব জল দিয়া দরকার কি? আমি তাড়িত গাধার মত, আবারও মাটীতে পড়িয়া গড়াই।

(ধ) ভৃত্য। আর্য্যমৈত্রেয়! আপনি যে ব্রাহ্মণ।

चेट:। अज्जमित्तेअ! तधावि धोइश्शं। तथा कृत्वा। अज्जमित्तेअ। एदं तं शुवस्सभण्डअं मम दिवा, तुह लत्तिं च। ता गेण्ह। इति दत्वा निष्क्रान्त। (प)

विदू। गृहीत्वा। अज्ज वि एदं चिट्ठदि। किं एत्थ उज्जइणीए चोरो वि णत्थि, जो एदं दासीए पुत्तं णिद्दाचोरं ण अवहरदि। भो वअस्स! अब्भन्तर-चतुस्सालअं पवेसआमि णं। (फ)

(प) आर्य्यमैत्रेय। तथापि धाविष्यामि। आर्य्यमैत्रेय। एतत् तत् सुवर्णभाण्ड मम दिवा तव रात्रौ च, तद्गृहाण।

(फ) अद्यापि एतत् तिष्ठति? किमत्र उज्जयिन्यां चौरोऽपि नास्ति? य एत दास्याः पुत्रं निद्राचौरं नापहरति। भो वयस्य! अभ्यन्तरचतुःशालकं प्रवेशयामि एनम्।

(प) चेट इति। तव च रात्रौ रक्षितव्यमिति नियम आसीदिति शेष।

(फ) विदू इति। दास्याः पुत्रमित्यधिक्षेपे। निद्रायाश्चौरमपहारकं निवर्त्तकमित्यर्थ। अस्य रक्षणार्थं सावधानतावलम्बनेन निद्रा नायातीति भाव। एनम् अलङ्कारम् प्रवेशयामि, चौरेभ्यो गोपनार्थमिति भाव।

(न) বিদূষক। সকল সাপের মধ্যে যেমন ধোরাসাপ, তেমন সকল ব্রাহ্মণের মধ্যে আমি ব্রাহ্মণ।

(প) ভৃত্য। আর্য্যমৈত্রেয়। তথাপি ধোয়াইব। (তাহা করিয়া) আর্য্যমৈত্রেয়। এই সেই স্বর্ণালঙ্কার, আমার দিনে, আপনার রাত্রিতে (ইহা রক্ষা করিবার নিয়ম ছিল)। অতএব গ্রহণ করুন।

(ফ) বিদূষক। (গ্রহণ করিয়া) আজও ইহা আছে! এই উজ্জয়িনীতে কি চোরও নাই? যে এই নিদ্রিত ও নিদ্রানাশক অলঙ্কার অপহরণ করিতেছে না। বয়স্য! ভিতরের চতুঃশালাতে ইহাকে প্রবেশ করাই।

चारु। अलं चतुःशालमिमं प्रवेश्य,
प्रकाशनारीधृत एष यस्मात्।
तस्मात् स्वयं धारय विप्र! तावत्,
यावन्न तस्याः खलु भोः समर्प्यते ॥७॥

निद्रां नाटयन् "तं तस्य स्वरसङ्क्रमम्" इति पुनः पठति।

विदू। अवि णिद्दाअदि भवं। (ब)

चारु। अथ किम्?।

(ब) अपि निद्राति भवान्?।

---

अलमिति। इममलङ्कारम्, चतुःशालं प्रवेश्य चौरेभ्यो गोपनार्थं नीत्वा, अलं चतुःशालं मा प्रवेशयेत्यर्थः। यस्मात् एष अलङ्कारः, प्रकाशनार्या सर्वजनप्रकाशकारिण्या वेश्यया धृतः। तथा च अस्य बहुमूल्यतागोपनार्थमेव अभ्यन्तरे गोपनं तवाभिप्रेतम्, किन्तु सर्वजनप्रकाशकारिण्या वेश्यया धृततया सर्वेषामेव दर्शनेन मूल्यज्ञानात् अस्य निक्षेपस्य च सर्वैरेव ज्ञातत्वात् निरर्थकमेव अभ्यन्तरे गोपनमिति भावः। तस्मात्, भो विप्र! तावत् स्वयमेव धारय, यावत् तस्या वसन्तसेनायाः समीपे न खलु समर्प्यते।

अत्र प्रथमार्द्धे उपेन्द्रवज्रा, तृतीयपादे इन्द्रवज्रा चतुर्थपादे च इन्द्रवज्रा, इत्येतया मिलनादुपजातिर्वृत्तम्। तथा च—

"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।
इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम" ॥७॥

---

চারুদত্ত। ইহাকে চতুঃশালায় প্রবেশ করাইবার প্রয়োজন নাই, যেহেতু, এই অলঙ্কার প্রকাশ্য নারী (বেশ্যা) কর্ত্তৃক ধৃত হইয়াছিল। অতএব হে ব্রাহ্মণ! তুমি নিজেই ইহা রাখ, যে পর্য্যন্ত তাহার নিকট সমর্পণ না করি ॥৭॥

(নিদ্রাভিনয় করিতে করিতে "তং তস্য স্বরসংক্রম" ইত্যাদি শ্লোক পুনরায় পাঠ করিলেন।)

(ব) বিদূষক। আপনি নিদ্রিত হইতেছেন কি?।

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम्।
अदृश्यरूपा चपला जरेव या मनुष्यसत्त्वं परिभूय वर्द्धते ॥८॥

विदू। ता सुविह्म। नाट्येन स्वपिति। (भ)

(भ) तत् स्वपिव।

---

इयमिति। हि तथाहि। नयनावलम्बिनी इयं निद्रा, ललाटदेशात् माम् उपसर्पतीव उपगच्छतीव। अदृश्यरूपा अप्रत्यक्षाकृतिः, चपला चञ्चला अचिरस्थायिनीत्यर्थः जरा वार्द्धक्यमिव, या निद्रा, मनुष्याणां प्राणिमात्राणामिति तात्पर्य्यम्, सत्त्वं बलं चैतन्यशक्तिं च अभिभूय विलोप्य वर्द्धते।

अत्र पूर्वार्द्धे क्रियोत्प्रेक्षा, परार्द्धे च पूर्णोपमा, अनयोः परस्परनिरपेक्षतया संसृष्टिः। तथा निद्रया प्राणिमात्रस्यैव चैतन्यविलोपात् प्राणिसामान्ये वक्तव्ये मनुष्येति प्राणि-विशेषाभिधानात् अविशेषे विशेषाख्यदोषः, स च 'शरीरसत्त्वम्' इति पाठेन समाधेयः।

"नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः।
निर्गम्य दर्शने तस्थौ ब्रह्मणो व्यक्तजन्मनः॥"

इति मार्कण्डेयपुराणे यद्यपि मुखादिकमपि निद्रास्थानतया अभिहितम्, तथापि तेषु नयनस्यैव प्रधानत्वात् 'नयनावलम्बिनी' इत्युक्तम्। अतएव उक्तमार्कण्डेयपुराणवचनेऽपि प्रथमं नेत्रपदमेवाभिहितम्।

वंशस्थविलं वृत्तम् ॥८॥

---

চারুদত্ত। হাঁ।

নয়নাবলম্বিনী এই নিদ্রা, ললাটদেশ হইতে যেন আমার নিকট আসিতেছে। জরার (বার্দ্ধক্যের) ন্যায় অদৃশ্যাকৃতি ও চঞ্চলা যে নিদ্রা, প্রাণিগণের চৈতন্যশক্তিকে (বলকে) অভিভূত করিয়া বৃদ্ধি পাইয়া থাকে ॥৮॥

(ভ) বিদূষক। তা' আমরা নিদ্রা যাই। (অভিনয় অনুসারে শয়ন করিল।)

ततः प्रविशति शर्विलकः । (म)

शर्वि । कृत्वा शरीर-परिणाह-सुखप्रवेशं
शिक्षाबलेन च बलेन च कर्म्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥८॥

नभोऽवलोक्य सहर्षम् । अये ! कथमस्तमुपगच्छति स भगवान् मृगाङ्कः । तथाहि—(य)

---

(म) तत इति । शर्विलक इति क्रियादिवत् सञ्ज्ञाशब्दः ।

कृत्वेति । शिक्षाया बलेन नैपुण्येन, बलेन शरीरसामर्थ्येन च, शरीरस्यैव परिणाहो विशालता यस्य स चासौ सुखेन अनायासेन प्रवेशो यस्मात् स चेति तम् । "प्रसन्न-कर्कशा भारती" "भाव्य प्रसन्नगम्भीरम्" इत्यादिवत् एकस्य विशेष्यत्वविवक्षया कर्म्मधारयः । कर्म्ममार्गं चौर्य्यकार्य्यपथ सन्धिमित्यर्थः, कृत्वा, भूमेर्घर्षिं यात् परिसर्पणेन अभ्यन्तर-गमनेन घृष्टे सन्धिगोलकेन कृतघर्षणे पार्श्वे यस्य सः, परञ्च जीर्णतनुः जीर्णदेहः, भुजङ्गः सर्प इव, निर्मुच्यमानमेव सन्धिना परित्यज्यमानः सन्, गच्छामि अभ्यन्तर-मिति शेषः । सर्पोऽपि एवमेव भित्तिच्छिद्रमध्येन प्रविशति ।

अत्र पूर्णोपमालङ्कारः । वसन्ततिलका वृत्तम् ॥८॥

---

(म) তদনন্তর শর্ব্বিলকের প্রবেশ।

শর্ব্বিলক। আমি শিক্ষানৈপুণ্য ও শারীরিক সামর্থ্যে সন্ধি (সিঁধ) নির্ম্মাণ করিয়াছি, ইহা আমার শরীরের বিস্তৃতি অনুসারে নির্ম্মিত হইয়াছে এবং ইহা হইতে সুখে প্রবেশ করা যাইবে। এখন ভূতল হইতে প্রবেশ করিবার সময়ে পার্শ্বদ্বয় ঘর্ষণ প্রাপ্ত হইবে, এই অবস্থায় আমি, জীর্ণদেহ সর্পের ন্যায় এই সন্ধি হইতে নির্ম্মুক্ত হইয়া ভিতরে প্রবেশ করি ॥৮॥

नृपति-पुरुष-शङ्कित-प्रचारं
परगृह-दूषण-निश्चितैकवीरम्।
घन-तिमिर-निरुद्ध-सर्वभावा
रजनिरियं जननीव संवृणोति ॥१०॥

(घ) अस इति। अये इति सम्भ्रमे, आयमिति हर्षे। अस्तगतश्चन्द्र। चन्द्रस्यास्तगमनात् तिमिरावरणेनात्मगोपनसम्भवादयमेव चौर्यसमय इत्याशयेनास्य हर्षः, अतएव सम्भ्रमश्चेति बोध्यम्।

"अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" इति विश्वः। "आय हर्षे च गर्हाया प्रकाराद्ये च सम्भ्रमे। अग्रे सम्भावनायाञ्च—" इति मेदिनी।

नृपतीति। घनतिमिरेण गाढान्धकारेण निरुद्धा आवृता सर्वे भावा पदार्था यया सा तथोक्ता, इयं रजनि रात्रि, जननीव मातेव, नृपतिपुरुषैः प्रहरिभिः शङ्कितः सम्भावितः प्रचारो विचरणं यस्य तम् तथा परगृहस्य दूषणं सन्धिकरणेन विकृतीकरणं निश्चितो नृपतिपुरुषैरेवावधारित एकः अद्वितीयवीरः सुपटुर्यस्तम्, मामिति शेषः, संवृणोति तेनान्धकारेण संछादयन् च आच्छादयति। सुतरामधुनैव चौर्ये प्रवर्त्तितव्यमिति भावः।

अत्रोपमालङ्कारः। तथा मामिति विशेष्यपदस्यानुक्तत्वात् न्यूनपदतादोषः, स च, 'संवृणोति' इत्यत्र 'मां पिधत्ते' इति पाठेन समाधेयः।

पुष्पिताग्रा वृत्तम्॥१०॥

(ঘ) (আকাশের দিকে দৃষ্টিপাত করিয়া আনন্দের সহিত) ও! সেই মাহাত্ম্যশালী চন্দ্র অস্ত গিয়াছেন।

রাজপুরুষেরা (প্রহরীরা) আমার বিচরণের আশঙ্কা করিয়াছিল এবং আমি পরগৃহে প্রবেশ করিতে অদ্বিতীয় পটু, ইহা স্থির করিয়াছিল। কিন্তু এখন গাঢ় অন্ধকার জগতের সকল পদার্থকে আবৃত করায় মাতার ন্যায় এই রাত্রি, আমাকে আবৃত করিতেছে ॥১০॥

वृक्षवाटिकापरिसरे सन्धिं कृत्वा प्रविष्टोऽस्मि मध्यमकम्।
तद्यावदिदानीं चतुःशालकमपि दूषयामि। भोः! (र)

कामं नीचमिदं वदन्तु पुरुषाः स्वप्ने च यद्वर्द्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्य्यं न शौर्य्यं हि तत्।
स्वाधीना वचनीयतापि हि वरं बद्धो न सेवाञ्जलिः
मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥११॥

---

(र) वृक्षेति। वृक्षैर्या वाटिका उद्यानं तस्य परिसरे प्रान्तभागे। मध्यमकं प्राचीराभ्यन्तरम्। चतसृणा चतुर्द्दिग्वर्त्तिनीनां शालानाम् इष्टकानिर्म्मितगृहाणां समाहार इति चतुःशालकम्, दूषयामि सन्धिकरणेन विक्षतीकरोमि। भो इति चौर्य्य-निन्दाजनितविषादे।

"वाटी मार्गे वृतिस्थाने स्यात् कुटीवास्तुनो स्त्रियाम्।" "भोस्तु सम्बोधनविषादयो" इति च मेदिनी।

काममिति। यत् चौर्य्यम्, स्वप्ने लोकस्य निद्रासमये, वर्द्धते बाहुल्येन भवतीत्यर्थः, तथा च विश्वस्तेष्वपि जनेषु, वञ्चनापरिभवः प्रतारणया द्रव्यापहरणरूपा अवमानना, इदम् उभयमपि कर्म्म, पुरुषा लोकाः, कामं यथेष्टम्, नीचं निकृष्टम्, वदन्तु, हि यस्मात्, तत् स्वप्ने गोपनकृतं चौर्य्यं प्रतारणाकृतं चौर्य्यञ्च न शौर्य्यं न शौर्य्यकृतम्। तथा च शौर्य्येण विजित्य परस्वापहरणं न दोषावहम्, "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः" इत्यादिना मन्वादिभिरनुमोदितत्वात्, किन्तु चौर्य्येण प्रतारणया च परस्वाप-हरणं दोषावहमेव, "ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः" इत्यादिना मन्वादिभिरेव पातकतया परिगणितत्वात् चौर्य्यं वञ्चनायाञ्च लोका निन्दां कुर्व्वन्ति, कुर्व्वन्तु इति सरलार्थो भावार्थश्च। तथापि स्वाधीना स्वाधीनवृत्तिविषया, वचनीयतापि निन्दापि, वरम् ईषत्प्रियेत्यर्थः, ननु कुतो नाम वचनीयतापि वरमित्याह—यत, सेवाया दासत्वस्य

---

(র) বৃক্ষাবৃত স্থানের প্রান্তভাগে সন্ধি নির্ম্মাণ করিয়া, প্রাচীরের ভিতরে প্রবেশ করিয়াছি। তা' এখন, চতুঃশালাকেও দূষিত করি। (সিঁধ কাটিয়া চকমিলানকেও বিক্ষত করি।)

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवेत्
भित्तीनाञ्च न दर्शनान्तरगतः सन्धिः करालो भवेत् ।
क्षारक्षीणतया च लोष्टककृशं जीर्णं क्व हर्म्यं भवेत्
कस्मिन् स्त्रीजनदर्शनञ्च न भवेत् स्यादर्थसिद्धिश्च मे ॥१२॥

(ल) तदिति। उद्देशे स्थाने।

देश इति। भित्तीनां को नु देशः स्थानम्, जलावसेकेन सततपतितजलेन सिक्ततया शिथिलः आर्द्रीभूतेष्टकामयोऽपि, स्थित इति शेषः, यस्मिन् देशे, शब्दः इष्टकोत्पाटनजनितो ध्वनिर्न भवेत्। न दर्शनान्तरगतः न दृष्टिविषयतां यतः प्राप्तः जनागमनस्थानतया गृहस्थस्य चक्षुरगोचर इत्यर्थः, अथ च करालो वृहत्तया भीषणः सन्धिर्भवेत् तथा क्व कस्मिन् देशे, क्षारेण लवणेन क्षीणतया, हर्म्यं तदीयभित्तिरित्यर्थः, लोष्टकवत् क्षुद्रमृत्तिकाखण्डवत् कृशं जीर्णं च भवेत्, आयाससाध्यत्वाभावायैव सन्धिः कारणीय इति भावः। तथा कस्मिन् देशे, स्त्रीजनदर्शनञ्च न भवेत्, तद्दर्शने तु कोलाहलसम्भवाद् उद्विग्नीभूतचौर्यासम्भव इति भावः। तादृशदेशे सन्धिः कर्त्तव्य इत्यर्थः। अर्थसिद्धिः प्रयोजनीभूतचौर्यसिद्धिश्च स्यात्।

अत्र भवेदिति पदस्य वारं वारमभिधानादनवीकृतत्वदोषः, तथा चतुर्थपादे 'भवेत् स्यात्' इति प्रकृतिविपर्ययो भग्नप्रक्रमतादोषश्च, 'यस्मिन्न शब्दोद्गमः' 'जीर्णं क्व हर्म्यं स्थितम्' 'न स्यात् कुत्र वधूविलोकनमथो' 'स्यादर्थसिद्धिश्च मे' इति पाठपरिवर्त्तने तु सर्वनिरासः।

शार्दूलविक्रीडितं वृत्तम् ॥१२॥

(ল) তা' কোন্ স্থানে সন্ধি নির্ম্মাণ করি ?।

ভিত্তির কোন্ স্থান জলসিক্ত হইতে থাকায় শিথিল হইয়াছে, যেখানে শব্দ হইবার সম্ভব নাই এবং কোন্ স্থানটী লোকের দৃষ্টি গোচর হয় না, অথচ সন্ধিটী ভীষণ হয়, কোন্ স্থানের ভিত্তি লবণে ক্ষীণ হওয়ায়, একটী লোষ্ট্রের ন্যায় কৃশ ও জীর্ণ হইয়াছে, কোন্ স্থানে স্ত্রীলোকের দর্শন না হয়, অথচ আমার কার্য্যসিদ্ধি হয় ॥১২॥

तत् कस्मिन्नुद्देशे सन्धिमुत्पादयामि ? । (ल)

दासत्वकालीन इत्यर्थः, अञ्जलिः अनुनयसूचकः पाणिद्वयसंयोगः, स बद्धः न कृतो भवति । अनुनयसूचकाञ्जलिबन्धनापेक्षया स्वाधीनवृत्तिविषयकनिन्दासहनमपि वरमित्याशयः । ननु तथापि गोपनेन स्वकार्यसाधने सज्जनदृष्टान्तो नास्तीत्याह मार्ग इति । हि तथाहि, पूर्वं द्वापरान्ते, द्रौणिना विदुष एव द्रोणाचार्यस्य पुत्रेण अश्वत्थाम्ना, नरेन्द्रस्य राज्ञो युधिष्ठिरस्य सौप्तिकानां सुप्तानां पुत्रादीनां वधे, एष गोपनेन प्रवेशात्मको मार्गः पन्था प्रतारणारीतिरित्यर्थः, कृतः । अतो मादृशजनस्य तादृशाचरणे को दोष इति भावः ।

अत्र 'स्वाधीना वचनीयतापि हि वरम्' इति स्वाधीनवृत्तिसामान्येन केवलचौर्यविषयकलोकापवादाङ्गीकारस्य समर्थनादर्थान्तरन्यासः, 'स्वाधीना' इत्यादिवाक्यार्थं प्रति 'बद्धः' इत्यादिवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, तथा गोपनप्रवेशसामान्यस्य केवलाश्वत्थामकृतगोपनप्रवेशरूपविशेषेण समर्थनादपरोऽर्थान्तरन्यासश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

तथा दृष्टान्तो नामाप्यलङ्कारः—"दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम्" इति लक्षणात् ।

पुरा किल अश्वत्थामा रणाङ्गनशयितदुर्योधनान्तिके पञ्चपाण्डववधं प्रतिज्ञाय युद्धशेषरात्रौ पाण्डवशिबिरे गोपनेन प्रविश्य युधिष्ठिरपुत्रादीन् निहतवानिति महाभारतीयवार्ता ।

शार्दूलविक्रीडितं वृत्तम् ॥११॥

---

যে চুরি, লোকের নিদ্রার সময়েই প্রায়শঃ হইয়া থাকে এবং যে চুরি, বিশ্বস্ত লোকের উপরেও প্রতারণার অবমাননারূপে প্রবর্ত্তিত হয়, সেই চুরিকে লোকে অত্যন্ত নীচকার্য্য বলে, বলুক, কারণ, তাহা চুরিই বটে, কিন্তু দাসত্ব নহে। তথাপি স্বাধীন বৃত্তির বিষয়ে নিন্দাও ভাল, কারণ, তাহাতে অনুনয়সূচক অঞ্জলি বন্ধন করিতে হয় না, বিশেষতঃ পূর্ব্বকালে দ্রোণাচার্য্যের পুত্র অশ্বত্থামা যুধিষ্ঠিরের নিদ্রিত পুত্রপ্রভৃতির বধের সময় এই পথ আবিষ্কার করিয়া গিয়াছেন ॥১১॥

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवेत्
भित्तीनाञ्च न दर्शनान्तरगतः सन्धिः करालो भवेत्।
क्षारक्षीणतया च लोष्टक-कृशं जीर्णं क्व हर्म्यं भवेत्
कस्मिन् स्त्रीजनदर्शनञ्च न भवेत् स्यादर्थसिद्धिश्च मे ॥१२॥

(ल) तद्दिति। तद्देशे स्थाने।

देश इति। भित्तीनां को नु देशः स्थानम्, जलावसेकेन सततपतितजलेन सिक्ततया शिथिलः श्लथीभूतेष्टकासंयोगः, स्थित इति शेषः, यस्मिन् देशे, शब्दः इष्टकोत्पाटनजनितो ध्वनिर्न भवेत्। न दर्शनान्तरं न दृष्टिविषयतां गतः प्राप्तः जनागमनस्थानतया परस्यान्यस्य अदृष्टिगोचर इत्यर्थः, अथ च करालो बृहत्तया भीषणः, सन्धिर्भवेत् तथा क्व कस्मिन् देशे, क्षारेण लवणेन क्षीणतया, हर्म्यं तदीयभित्तिरित्यर्थः, लोष्टकवत् क्षुद्रमृत्तिकाखण्डवत् क्षामं जीर्णं च भवेत्, आयासमन्तरेणैव सन्धिः कार्य्य इति भावः। तथा कस्मिन् देशे, स्त्रीजनदर्शनञ्च न भवेत्, तद्दर्शने तु कामोद्रेकसम्भवात् दुर्ग्राह्यीभूतचौर्य्यासम्भव इति भावः। तादृशदेशे सन्धिः कर्त्तव्य इत्यर्थः। अर्थसिद्धिः प्रयोजनीभूतचौर्य्यसिद्धिश्च स्यात्।

अत्र भवेदिति पदस्य वारं वारमभिधानात् कथितपदत्वदोषः, तथा चतुर्थपादे 'भवेत् स्यात्' इति प्रकृतिविपर्ययो भग्नप्रक्रमतादोषश्च, 'यस्मिन्न शब्दोद्गमः' 'जीर्णं क्व हर्म्यं स्थितम्' 'न स्यात् क्व वधूविलोकनमयो' 'स्यादर्थसिद्धिश्च मे' इति पाठपरिवर्त्तने तु तयोर्निरासः।

शार्दूलविक्रीडितं वृत्तम् ॥१२॥

(ল) তা' কোন্ স্থানে সন্ধি নিৰ্ম্মাণ করি ?।

ভিত্তির কোন্ স্থান জলসিক্ত হইতে থাকায় শিথিল হইয়াছে, যেখানে শব্দ হইবার সম্ভব নাই এবং কোন্ স্থানটী লোকের দৃষ্টি গোচর হয় না, অথচ সন্ধিটী ভীষণ হয়, কোন্ স্থানের ভিত্তি লবণে ক্ষীণ হওয়ায়, একটী লোষ্ট্রের ন্যায় কৃশ ও জীর্ণ হইয়াছে, কোন্ স্থানে স্ত্রীলোকের দর্শন না হয়, অথচ আমার কার্য্যসিদ্ধি হয় ॥১২॥

भित्तिं परामृश्य। नित्यादित्य-दर्शनोदकसेचनेन दूषितेयं भूमिः क्षारक्षीणा; मूषिकोत्करश्चेह। हन्त! सिद्धोऽयमर्थः (ब)। प्रथममेतत् स्कन्दपुत्राणां सिद्धिलक्षणम् (श)। अत्र कर्म्मप्रारम्भे कीदृशमिदानीं सन्धिमुत्पादयामि। इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायो दर्शितः। तद्यथा, पक्केष्टकानामाकर्षणम्, आमेष्टकानां छेदनम्, पिण्डमयानां सेचनम्, काष्ठमयानां पाटनमिति (ष)। तदत्र पक्केष्टके इष्टिकाकर्षणम्। तत्र—

(ब) भित्तिमिति। परामृश्य स्पृष्ट्वा। क्षारक्षीणा स्वभावत एव लवणोद्गमेन प्रायेण क्षयमुपगता, इयं भूमिः, नित्यं प्रत्यहमेव आदित्यदर्शने सूर्य्योदयकाले उदकसेचनेन पादप्रक्षालनादिजलसेकेन, दूषिता शिथिलीभूतेष्टका। किञ्च, उत्कीर्य्यते इति उत्करो धूलिराशिः। इह अस्मिन् स्थाने, मूषिकाणामुत्करो धूलिराशिश्च विद्यते इति शेषः। हन्त हर्षे। अयम् अर्थः, सन्धिकर्त्तनरूप प्रयोजनम्, सिद्धः अनायासेन निष्पन्नः, क्षारक्षीणत्वात् नित्योदकसेचनेन शिथिलीभूतेष्टकत्वात् मूषिकैरन्तःसारहीनीकृतत्वाच्चेति भावः।

(श) प्रथममिति। स्कन्दपुत्राणां कार्त्तिकेयसुतानां चौराणाम्, एतत् अनायासेन सन्धिकर्त्तनीयभित्तिस्थानप्रापणम्, प्रथमं प्रधानम्, सिद्धेर्भाविन्याश्चौर्य्यनिष्पत्तेः, लक्षणं सूचकम्। चौरा खलु चौर्य्यं कार्त्तिकेयोपदिष्टमिति मन्यमानास्तदनुसारेण प्रवर्त्तमाना स्कन्दपुत्रा इति गीयन्त इति प्रसिद्धिः।

(ष) अत्रेति। कर्म्मणः चौर्य्यस्य प्रारम्भे उपक्रमे। कनकं कनकमयी शक्तिरस्त्रविशेषो यस्य तेन, तदाख्येन केनचित् चौर्य्यशास्त्रकारेण। आमेष्टकानाम्

---

(ब) ( ভিত্তি স্পর্শ করিয়া ) এই স্থানটী লবণে ক্ষীণ হইয়াছে এবং প্রত্যহই সূর্য্যোদয়কালে জল-সিক্ত হওয়ায় শিথিল হইয়া গিয়াছে, আর এখানে ইঁদুরের মাটির স্তূপও রহিয়াছে। বেশ! আমার এই প্রয়ো-

पद्मव्याकोशं भास्करं बालचन्द्रं
वापी-विस्तीर्णं स्वस्तिकं पूर्णकुम्भम्।
तत् कस्मिन् देशे दर्शयाम्यात्मशिल्पं
दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः ॥१३॥

अपक्वेष्टकानां पिण्डमयानाम् अयुक्ततया कोमलमृत्तिकामयानां स्थानानामिति शेषः, सेचनं सेचनेन गलितीकरणम्। पाटनं विदारणम्।

पद्मेति। पौराः पुरवासिनो जनाः, श्वः परदिने, यत् आत्मशिल्पम्, दृष्ट्वा विस्मयं यान्ति प्राप्नुवन्ति, तत् तादृशम्, आत्मशिल्पं निजकार्यं पुष्पभूतम्, पद्मवत् व्याकोशं प्रस्फुटं प्रस्फुटितपद्माकारमित्यर्थः, भास्करं भास्करमण्डलाकारं गोलम्, बालचन्द्रं खण्डचन्द्राकारम्, वापी वापीवच्चतुष्कोणं विस्तीर्णं तिर्यक् लम्बमानं स च च स चेति समाहारद्वन्द्वात् इदम्, स्वस्तिकं स्वस्तिकवत् त्रिकोणम् पूर्णकुम्भं पूर्णकुम्भवत् निम्नपीवर-मूर्द्धकम्, एतत् समान्यतमं किम्प्रकारं सन्धिमित्यर्थः, कस्मिन् देशे स्थाने दर्शयामि। स्वात्मविवेचनम्।

"प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः" इत्यमरः।

वैश्वदेवी वृत्तम्—"बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" इति लक्षणात् ॥१२॥

जন সিদ্ধ হইয়াছে (শ)। কার্ত্তিকেয়ের পুত্র চোবদিগের ইহা কার্য্য-সিদ্ধির প্রধান লক্ষণ (ষ)। এই কাষ্যাবস্থে এখন কি রকম সিঁধ তৈয়ার করি। ভগবান্ কনকশক্তি, এই জগতে চারি প্রকার সন্ধির উপায় দেখাইয়াছেন। যথা—পক্ব ইষ্টকের আকর্ষণ, অপক্ব ইষ্টকের ছেদন, গলিতমৃত্তিকার সেচন এবং কাষ্ঠময়স্থানের বিদারণ। অতএব এই পক্কেষ্টকাময় ভিত্তিতে ইষ্টকাকর্ষণই কর্ত্তব্য। সে বিষয়ে আবার—

প্রস্ফুটিত পদ্মের মত, সূর্য্যমণ্ডলের মত, নূতন চন্দ্রের মত, দীর্ঘিকার ন্যায় বিস্তীর্ণ, স্বস্তিকের তুল্য ত্রিকোণ এবং পূর্ণকুম্ভের ন্যায়, এই কয় রকম সন্ধির মধ্যে নিজের শিল্প (কোন রকম সন্ধি) কোন্ জায়-গায় দেখাইব, যাহা দেখিয়া পুরবাসিগণ, কাল বিস্ময়াপন্ন হইবে ॥১৩॥

तदत्र पक्केष्टके पूर्णकुम्भ एव शोभते ; तमुत्पादयामि । (स)

अन्यासु भित्तिषु मया निशि पाटितासु
क्षारक्षतासु विषमासु च कल्पनासु ।
दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो
दोषांश्च मे वदति कर्म्मणि कौशलञ्च ॥१४॥

(उ) विविधं भित्तिच्छेदमाह तदिति । पक्केष्टके देशे । पूर्णकुम्भस्याकारः सन्धिः ।

अन्यास्विति । मया, निशि रात्रौ, क्षारक्षतासु लवणाविर्भावेन स्वयमेव क्षीणासु, अन्यासु अपरापरासु, भित्तिषु, पाटितासु सन्धिकरणार्थं विदारितासु, तथा विषमासु भयङ्करासु, कल्पनासु मम चौर्य्योपायभूतेषु रचिता स्वकल्पनासु कौशलेषु च, पाटितासु विनाशितासु, उत्कृष्टतरकौशलाविर्भावनेन विफलीकृतासु मतीष्वित्यर्थः ; अथवा कल्पनासु प्राचीरलङ्घनादिकौशलेषु आविष्कृतास्विति शेषः, प्रतिवेशिवर्गः पल्लीस्थितजनसमूहः, प्रभातसमये, दृष्ट्वा तत् सर्वमवलोक्य, मे मम दोषान् स्वाभाविकचौर्य्यापवादान्, कर्म्मणि चौर्य्यकार्य्ये, कौशलं नैपुण्यञ्च वदति । तथापि तादृशकार्य्योत्कर्ष एव कार्य्यं कर्त्तव्यमिति भावः ।

अत्र वदतीत्येकया क्रियया अप्रस्तुतयोर्दोषकौशलयोः धर्म्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः । तुल्ययोगितालक्षणे "पदार्थानाम्" इति बहुवचनमविवक्षितमस्माभिः प्रमाणमेवोक्तं साहित्यदर्पणटीकायाम् । तथा दोषानिति बहुवचनेन प्रक्रम्य कौशलमित्येकवचनाभिधानात् भग्नप्रक्रमतादोषः ; स च 'दोषम्' इति पाठेनैव समाधेयः ।

वसन्ततिलकं वृत्तम् ॥१४॥

(ব) তা' এই পক্কেষ্টকময় ভিত্তিতে পূর্ণকুম্ভের ন্যায় সন্ধি শোভা পাইবে, তাহাই নির্ম্মাণ করি।

আমি রাত্রিতে, লবণাবির্ভাবনিবন্ধন জীর্ণ ভিত্তি কিংবা অন্যান্য প্রকার ভিত্তি বিদীর্ণ করিলে এবং প্রাচীর লঙ্ঘনপ্রভৃতির ভয়ঙ্কর কৌশল আবিষ্কার করিলে, প্রভাতকালে প্রতিবেশিগণ তাহা দেখিয়া আমার দোষও বলিবে, কার্য্যে দক্ষতাও বলিবে ॥১৪॥

नमो वरदाय कुमारकार्त्तिकेयाय, नमः कनककशक्तये ब्रह्मण्य-देवाय (१) देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्य्याय, यस्याहं प्रथमः शिष्यः । तेन च परितुष्टेन योगरोचना मे दत्ता । (ह)

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः ।
शस्त्रञ्च पतितं गात्रे रुजं नोत्पादयिष्यति ॥१५॥

(ह) अथ कस्यचित् प्रवर्त्तमानो गुरुसम्प्रदाय नमस्कुर्व्वन्नाह नम इति । वरदाय अभीष्टफलदायिने । अन्योऽपि कौमारव्रतावलम्बनात् कुमार सम्भाव्येत, अत कार्त्तिकेयपदम् । एवमपरोऽपि कृत्तिकापुत्रतया कार्त्तिकेय स्यादत कुमारपदम् । परमेष्ठिगुरुभावेनास्य नमस्कार । कनककशक्तिर्नाम कश्चित् द्वितीयचौर्य्यशास्त्र-प्रवर्त्तक, तस्मै, ब्रह्मण्यदेवाय महाप्रभावशालितया ब्रह्मण्यदेवस्वरूपाय देवव्रताय देवतापरायणाय । कनककशक्ति इत्यपपाठ एवैतत् । परापरगुरुभावेनास्य नमस्कार । भास्करनन्दी नाम कश्चित् तृतीयचौर्य्यशास्त्रप्रवर्त्तकस्तस्मै । परमगुरुत्वेनास्य नमस्कार । योगाचार्य्यो नाम कारकस्तस्मै । गुरुत्वेनास्य नमस्कार । यस्य योगाचार्य्यस्य । योग-चौर्य्योपायमन्त्रस्वरूपा रोचना गोपित्त योगरोचना अनयाऽसौ चौर्य्यसाधनोपायभूता रोचनेत्यर्थः ।

"योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । "गोपित्तं रोचना कृष्णाञ्जनी रोचन पुमान्" इति त्रिकाण्डशेष ।

अनयेति । हि यथाहि, अनया योगरोचनया, समालब्धं लिप्ताङ्गं माम्, रक्षिण

(হ) বরদাতা কুমার কার্ত্তিকেয়কে নমস্কার, ব্রহ্মণ্যদেবস্বরূপ ও দেবতাপরায়ণ কনককশক্তিকে নমস্কার, ভাস্করনন্দীকে নমস্কার এবং যোগাচার্য্যকে নমস্কার, আমি যাঁহার প্রথম শিষ্য। সেই গুরু যোগাচার্য্য সন্তুষ্ট হইয়া আমাকে, চৌর্য্যের উপায়ভূত রোচনা দিয়াছেন।

(१) ब्रह्मण्याय देवाय।

तथा करोति। धिक् कष्टम्, प्रमाणसूत्रं मे विस्मृतम्। विचिन्त्य। आं, इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति। यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यम्, विशेषतोऽस्मद्विधस्य। कुतः—(च)

एतेन मापयति भित्तिषु कर्ममार्गम्
एतेन मोचयति भूषणसम्प्रयोगान्।

प्रहरिणो धनरक्षका अस्मान्, न द्रक्ष्यन्ति। तथा गात्रे एतत्समालम्भे इति भावः, पतित शस्त्रस्य रुजं पीडाम् न उत्पादयिष्यतीति, सुतरां विशेषगुणशालिनीयं योगरोचनेति भावः।

अत्र योगरोचनाया उक्तकार्यप्रतिपादनकार्यं प्रति कारणत्वोपन्यासात् समुच्चयो-ऽलङ्कारः। तथा द्रक्ष्यन्तीति बहुवचनेन प्रक्रम्य उत्पादयिष्यतीति एकवचनाभिधानात् भग्नप्रक्रमतादोषः, स च गात्रे पतितमप्यत्र न करिष्यति च मे रुजम्' इति पाठेन समाधेयः ॥१५॥

(च) तथेति। तथा गात्रे योगरोचनालेपनम्। धिगिति आवश्यकवस्त्वानयन-विस्मरणादात्मनिन्दायाम्। प्रमाणसूत्रं मापनरज्जुः। उपकरणद्रव्यं प्रयोजनसाधनं वस्तु। अस्मद्विधस्य चौर्यादिप्रवृत्तस्य।

एतेनेति। एतेन यज्ञोपवीतेन भित्तिषु कर्मणः परद्रव्यापहरणरूपकार्यस्य मार्गं

---

ইহা দ্বারা গাত্র লেপন করিলে, রক্ষিগণ আমাকে দেখিতে পাইবে না, এবং গাত্রে অস্ত্র পতিত হইলেও, কোন পীড়া জন্মাইবে না॥১৫॥

(চ) (গাত্রে যোগরোচনা লেপন করিল) হায়! কি কষ্ট! আমি মাপিবার সূতা আনিতে বিস্মৃত হইয়াছি। (চিন্তা করিয়া) আঃ, এই যজ্ঞোপবীতই মাপিবার সূতা হইবে। যজ্ঞোপবীতটা ব্রাহ্মণের পক্ষে বড়ই উপকারের বস্তু, বিশেষতঃ আমাদের মত ব্রাহ্মণের। কারণ—

उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनञ्च ॥१६॥

मापयित्वा कर्म्म समारभे। तथा कृत्वा अवलोक्य च। एकलोष्टावशेषोऽयं सन्धिः। धिक् कष्टम्, अहिना दष्टोऽस्मि। यज्ञोपवीतेन अङ्गुलीं बद्धा विषवेगं नाटयति। चिकित्सां कृत्वा। स्वस्थोऽस्मि। पुनः कर्म्म कृत्वा दृष्ट्वा च। अये! ज्वलति प्रदीपः। तथाहि—(क)

---

पन्था सन्धिरित्यर्थः तम्, मापयति परिमितं करोति, चौर इति शेषः। एतेन यज्ञोपवीतेन, भूषणसम्प्रयोगान् "क्वचिद्विश्लो भावो द्रव्यवत् प्रकाशते" इति न्यायात् सम्प्रयुक्तभूषणानि करचरणादौ दृढसम्बन्धालङ्कारानिति यावत्, मोचयति प्रच्यावयति गृहस्थ इति शेषः। यन्त्रवत् दृढे उभयमुखव्याने दृढसंयुक्ते कपाटे, उद्घाटको भवति लोक इति शेषः। परार्द्धेऽपि एतेनेति सम्बध्यते। तथा च एतेन यज्ञोपवीतेन कपाटोपरिस्थं शङ्कुं बद्धा तदाकर्षणेन लोकः कपाटयोरुद्घाटको भवतीत्यर्थः। तथा कीटभुजगैः दष्टस्य ज्ञातदंशनस्य करचरणादेः, एतेन यज्ञोपवीतेन परिवेष्टनञ्च परिवेष्ट्य बन्धनञ्च भवतीत्यन्वयः, अतएव यज्ञोपवीतं महदुपकरणद्रव्यमिति भावः।

अत्रापि यज्ञोपवीतस्य उत्कर्षप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः, भवतीत्येकया क्रियया उद्घाटकपरिवेष्टनयोः कर्त्तृतया अभिसम्बन्धात् तुल्ययोगिता च, अनयोरङ्गाङ्गिभावेन सङ्करः। तथा 'एतेन' इत्यस्य त्रिरावर्त्तनात् कथितपदतादोषः, 'उद्घाटक' इति एकस्य प्रक्रमस्य 'परिवेष्टन'मिति न पुनः तथा निर्द्देशात् भग्नप्रक्रमतादोषः, 'मोचयति' 'परिवेष्टकश्च' इति पाठेन तयोः समाधानम्।

वसन्ततिलका वृत्तम् ॥१६॥

---

ইহা দ্বারা দেওয়ালে সিঁধ মাপা যায়, ইহা দ্বারা দৃঢ়লগ্ন অলঙ্কার খোলা চলে, ইহা দ্বারা যন্ত্রের ন্যায় দৃঢ়সংযুক্ত কপাট উদ্ঘাটন করা যায় এবং ইহা দ্বারা, কীট ও সর্পের দংশন স্থানে বেষ্টন করিয়া বন্ধন করা চলে ॥১৬॥

शिखा प्रदीपस्य सुवर्णपिञ्जरा
महीतले सन्धिमुखेन निर्गता ।
विभाति पर्य्यन्ततम समावृता
सुवर्णरेखेव कषे निवेशिता ॥१७॥

पुन काय कृत्वा । समाप्तोऽयं सन्धिः । भवतु, प्रविशामि । अथवा न तावत् प्रविशामि, प्रतिपुरुषं निवेशयामि । तथा कृत्वा । अये !

(क) मापयित्वेति । कक्ष्य सन्धिनिर्माणकार्य्यम् । तथा मापनम् इष्टकाकर्षणञ्च । एक लोष्टम् इष्टकाखण्डम् अवशेष यस्य स । आः कष्टम् । सर्पेण । स्वस्थ प्रकृतिस्थ । कक्ष्य तदवशिष्टलोष्टनिष्काशनम् दृष्ट्वा सन्ध्यन्तरात् गृहाभ्यन्तरमिति शेष ।

शिखेति । सुवर्णम् स्वर्णमिव पिञ्जरा पिङ्गलवर्णा सन्धिमुखेन महीतले निर्गता तथा पर्य्यन्ते प्रान्तदेशे तमसा अन्धकारेण समावृता कषपाषाणे कदाचन च समाहता निकषा प्रदीपस्य शिखा कषे कषपाषाणे निवेशिता निहिता सुवर्णस्य स्वर्णस्य रेखा इव विभाति ।

अत्र साधारणतया गुणोपमया सहैषा श्रौती उपमालङ्कार । तथा सुवर्णशब्दस्य द्विरुक्त्यापत्ते काव्यपददोषात् स तु हिरण्यरेखेव इति पाठेन समाधेय ।

वंशस्थं वृत्तम् ॥१७॥

---

(ক) মাপিয়া কার্য্য আরম্ভ করি। (মাপিয়া ও ইষ্টকাকর্ষণ করিয়া দেখিয়া) এই সন্ধিতে একটীমাত্র লোষ্ট্র অবশিষ্ট রহিয়াছে। হায়! কি কষ্ট! সর্পে দংশন করিল। (যজ্ঞোপবীতদ্বারা অঙ্গুলি বন্ধন করিয়া বিষের বেগ অভিনয় করিতে লাগিল। পরে চিকিৎসা করিয়া) সুস্থ হইয়াছি। (পুনরায় কার্য্য করিয়া এবং দেখিয়া) ওহে! দীপ জ্বলিতেছে।

স্বর্ণের ন্যায় পিঙ্গলবর্ণ, সিঁধের মুখ দিয়া ভূতলে নির্গত এবং প্রান্তভাগে অন্ধকারে আবৃত প্রদীপের শিখা, কষপাষাণে প্রদত্ত স্বর্ণরেখার ন্যায় দীপ্তি পাইতেছে ॥১৭॥

न कश्चित्। नमः कार्त्तिकेयाय। प्रविश्य दृष्ट्वा च। अये! पुरुषद्वयं सुप्तम्। भवतु, आत्मरक्षार्थं द्वारमुद्घाटयामि। कथं जीर्णत्वाद्गृहस्य विरौति कपाटम्। तद्यावत् सलिलमन्वेषयामि। क्व नु खलु सलिलं भविष्यति?। इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन् सभयम्। मा तावत् भूमौ पतत् शब्दमुत्पादयेत्। पृष्ठेन प्रतीक्ष्य कपाटमुद्घाट्य। भवतु, एवं तावदिदानीं परीक्षे। किं लक्ष्यसुप्तम्? उत परमार्थसुप्तमिदं द्वयम्?। त्रासयित्वा परीक्ष्य च। अये! परमार्थसुप्तेनानेन भवितव्यम् (ख)। तथाहि—

(ख) पुनरिति। कस्य सन्धिमुखपरिष्कारकरणं कार्यम्। प्रतिपुरुषं पुरुषप्रतिकृतिं कल्पितं काष्ठमयं कृत्रिमपुरुषमित्यर्थः। यदि गृहस्थः प्रहरेत् तदा एनं कृत्रिमपुरुषमेव प्रहरेदिति भावः। कश्चिदपि जनो न प्रभवतीति शेषः, अतो नास्ति प्रवेशे काचिदाशङ्केत्याशयः। आत्मरक्षार्थमिति। यदि कश्चित् धर्तुं मां गच्छेत् तदा तेन उद्घाटितद्वारेण सहसैव निर्गत्य आत्मरक्षां कर्तुं शक्ष्यामीति भावः। गृहस्य जीर्णत्वात् कपाटमपि जीर्णमिति बोध्यम्। अतएव विरौति आरवमात्रमेव शब्दायते। अन्वेषयामि अन्विष्यामि। अन्विष्यत इत्यन्वेषः कर्मणि घञ्, ततः तं करोतीति "इन कारित धात्वर्थे" इति इन। केचित्तु मार्गणार्थे इषधातुं चौरादिकमङ्गीकुर्वन्ति। सलिलप्रक्षेपेण आर्द्रे सति कपाटं न विरुयादिति भावः। पतत् सलिलमित्यर्थः। अतएव सलिलं यथा भूमौ न पतेत् तथैव कपाटोपरि क्षिपामीत्यभिप्रायः। पृष्ठेन पृष्ठदेशमुद्रपरिवर्त्तनेन प्रतीक्ष्य कश्चिदागच्छति नवेति पर्यवेक्ष्येत्यर्थः। लक्ष्यसुप्तं व्याजनिद्रितम्। परमार्थसुप्तं यथार्थनिद्रितम्। द्वयं पुरुषयोर्युगमिति शेषः, त्रासयित्वा नयनान्तिके छुरिकामुपनीय भयं प्रदर्श्य, परीक्ष्य विशेषनिरीक्षणादिनेति शेषः। अनेन पुरुषद्वयेन परमार्थसुप्तेन यथार्थनिद्रितेन।

---

(খ) (পুনরায় সন্ধির মুখ পরিষ্কার করিয়া) সন্ধিনির্ম্মাণকার্য্য শেষ হইয়াছে। হউক, প্রবেশ করি। অথবা, নিজে প্রবেশ করিব না,

নিঃশ্বাসোঽস্য ন শঙ্কিতঃ সুবিশদঃ তুল্যান্তরং (১) বর্ত্ততে
দৃষ্টির্গাঢ়নিমীলিতা ন বিকলা নাভ্যন্তরে চঞ্চলা।
গাত্রং স্রস্তশরীরসন্ধিশিথিলং শয্যাপ্রমাণাধিকং
দীপঞ্চাপি ন মর্ষয়েদভিমুখং স্যাল্লক্ষ্যসুপ্তং যদি ॥১৮॥

নিঃশ্বাস ইতি। অস্য পুরুষদ্বয়স্য, নিঃশ্বাসঃ, শঙ্কা অস্য সঞ্জাতেতি শঙ্কিতঃ। তথা চ ন শঙ্কিতঃ মনসি শঙ্কায়া ন ব্যঞ্জক ইত্যর্থঃ, তথা সুবিশদঃ বিশালতয়া সুস্পষ্টঃ সন্, ন তু জাগরিতস্যেব ক্ষুদ্রতয়া অস্পষ্ট ইতি তাৎপর্য্যম্। তুল্যমন্তরং ব্যবধানং যস্মিন্ কর্ম্মণি তদ্যথা তথা বর্ত্ততে। জাগরিতাবস্থায়ান্তু নৈব নিঃশ্বাসো ভবতীতি ভাবঃ। দৃষ্টির্নয়নম্ গাঢ়নিমীলিতা অত্যন্তমুদ্রিতা, কিন্তু বিকলা ন বিকৃতিং ন প্রাপ্তা, তথা অভ্যন্তরে তারাপ্রদেশে, চঞ্চলা ন তারাপ্রদেশস্য চঞ্চলতয়া চপরিভাবীঽপি চাঞ্চল্যং ন গতেতি তাৎপর্য্যম্। ব্যাজসুপ্তস্য তু নৈব ভবিতুমর্হতীত্যাশয়ঃ। গাত্রং করচরণাদ্যঙ্গসমূহঃ স্রস্তা শ্লথীভাবেন পতিতা যে শরীরসন্ধয়ঃ শরীরস্য সন্ধিস্থানানি তৈঃ, শিথিলং শ্লথীভাবম্ প্রাপ্তম্ তথা শয্যায়া যৎ প্রমাণং পরিমাণং ততঃ অধিকম্ অতিরিক্তস্থানগতম্। ব্যাজসুপ্তস্য ন গাত্রমীদৃশং শিথিলং ন ভবতি, সাবধানতয়া চ মস্তকচরণাদিকং শয্যাতো

কৃত্রিম পুরুষ প্রবেশ করাই। বেশ, কেহ নাই। কার্ত্তিকেয়কে নমস্কার। (প্রবেশ করিয়া দেখিয়া) ওহে। দুইটী লোক নিদ্রিত রহিয়াছে। হউক, আত্মরক্ষার্থ দ্বার খুলিয়া রাখি। বাড়ীখানি জীর্ণ বলিয়া কপাট যে শব্দ করিয়া উঠিল। তা' জল খুজিয়া দেখি। জল কোথায় আছে। (চারিদিক দৃষ্টি করিয়া, জল গ্রহণ করিয়া নিক্ষেপ করতঃ আশঙ্কার সহিত) ভূতলে পড়িয়া শব্দ উৎপাদন না করে। (পৃষ্ঠের দিক্ নিরীক্ষণ করিয়া কপাট খুলিয়া) হউক, এইরূপ এখন পরীক্ষা করি। এই লোক দুইটি কি কপটনিদ্রিত? না, যথার্থনিদ্রিত? (ভয় দিয়া, পরীক্ষা করিয়া) ওহে। ইহারা যথার্থনিদ্রিতই হইবে। কারণ—

(১) সমান্তরম্।

समन्तादवलोक्य। अये! कथं मृदङ्गः, अयं दर्दुरः, अयं पणवः, इयमपि वीणा, एते वंशाः, अमी पुस्तकाः। कथं नाट्याचार्य्यस्य गृहमिदम्। अथवा, भवनप्रत्ययात् प्रविष्टोऽस्मि। तत् किं परमार्थदरिद्रोऽयम्? उत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति?। तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम्?। भवतु, बीजं प्रक्षिपामि। तथा कृत्वा। निक्षिप्तं बीजं न क्वचित् स्फारीभवति। अये! परमार्थदरिद्रोऽयम्। भवतु, गच्छामि। (ग)

भूमौ न गच्छतीत्यभिप्रायः। तथा यदि सत्यसुप्तम् इदं पुरुषद्वयं व्याजसुप्तं स्यात्, तदा अभिमुखं सम्मुखवर्त्तिनं दीपमपि, न मर्षयेत् न सहेत, चक्षुषि तेजःपातेन सद्योपद्रवसम्भवादिति भावः।

अत्र परमार्थसुप्तप्रतिपादनकाव्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः, तत्तत्विच्छित्तिवशाच्च उक्तविधनिःश्वासादिसाधनेन परमार्थसुप्तत्वरूपसाध्यज्ञानादनुमानालङ्कारः।

"नाभ गतागतसङ्गादौ क्लीबमङ्गे कचग्रहे" इति मेदिनी। "सत्यं शपथे तथ्याया सत्यं कृतेऽपि सम्मतम्" इति विश्वः।

शार्दूलविक्रीडितं वृत्तम् ॥१८॥

(ग) समन्तादिति। दर्दुरपणवौ वाद्यविशेषौ। वंशा वंशदण्डनिर्म्मितानि वाद्यानि,

এই লোক দুইটার নিশ্বাস শঙ্কাসূচক নহে, অথচ সুস্পষ্ট এবং সমান ব্যবধানে হইতেছে, নয়ন অত্যন্ত মুদ্রিত, কিন্তু বিকৃত নহে কিংবা ভিতরে চঞ্চলও নহে এবং শরীরের সন্ধিস্থানগুলি শিথিল ভাবে পড়িয়া থাকায়, অঙ্গসকলও শিথিল হইয়াছে এবং শয্যার পরিমাণ অপেক্ষায় অধিক হইয়াছে। (কোন কোন অঙ্গ মাটীতে গিয়া পড়িয়াছে) আর যদি কপটনিদ্রিত হইত, তবে সম্মুখে দীপ সহ্য করিতে পারিত না ॥১৮॥

विदू। (उत्स्वप्नायते।) भो वअस्स ! सन्धी विअ दिस्सदि, चोरं विअ पेक्खामि, ता गेण्हदु भवं एदं सुवण्णभण्डअं । (घ)

(घ) भो वयस्य ! सन्धिरिव दृश्यते चौरमिव पश्यामि, तद्गृह्णातु भवानिदं सुवर्णभाण्डम् ।

---

पुस्तकानि एषां सन्तीति पुस्तकाः अर्श आदित्वादच् पुस्तकनामाधारा इत्यर्थः । केचित्तु पुस्त्यपि पुस्तकशब्दं वदन्ति । नाट्याचार्यस्य अभिनयशालादिशिक्षकस्य, मृदङ्गादीनां तस्यैव प्रयोजनीयत्वादिति भावः । भवनप्रत्ययात् साधारणगृहस्थगृहविश्वासात् । परमार्थदरिद्रो यथार्थदीनः धनभाण्डाद्यदर्शनादित्याशयः । भूमिष्ठं भूगर्भगोपितम् द्रव्यं धनम् धारयति रक्षति । भूमिष्ठं द्रव्यम् गुप्तं तिष्ठेदिति भावः । भवतु बीजं निक्षिपामि । एतेन चौर्यविद्यायामात्मनः पुण्यं व्यज्यते । बीजं सर्षपम् । तथा कृत्वा बीजं निक्षिप्य । क्वचित् प्रदेशे न स्फारीभवति विशालीभवति । अथ अन्तर्धनके भूभागे मन्त्रपाठपूर्वकं निक्षिप्तं बीजं स्फारीभवतीति प्रवादः । अतएवाह भवतु इत्यादि । गच्छामि किञ्चिदप शून्यं वर्तते अथ वा अस्य दरिद्रत्वेन अपहरणयोग्यधनाभावादिति भावः ।

(घ) विदू इति । स्वप्ने उच्चारणमुत्स्वप्नं तत् करोतीति उत्स्वप्नायते स्वप्ने

---

(গ) ( চারিদিকে দৃষ্টি করিয়া ) ওহে ! এই মৃদঙ্গ, এই দর্দুরবাদ্য, এই পণববাদ্য, এই বীণা, এই বাঁশী এবং এই কতকগুলি পুস্তক । তবে কি এটা নাট্যশিক্ষকের বাড়ী । অথবা গৃহস্থের বাড়ীর বিশ্বাসে প্রবেশ করিয়াছি । তবে কি এই গৃহস্থ বাস্তবিকই দরিদ্র , না, রাজার ভয়ে কিংবা চোরের ভয়ে ধন, ভূগর্ভে লুক্কায়িত করিয়া রাখিয়াছে । তা' আমি শর্বিলক আমার কাছে আবার ধন, মাটীতে লুকান ? । হউক, সর্ষপ নিক্ষেপ করি, ( সর্ষপ নিক্ষেপ করিয়া ) নিক্ষিপ্ত সর্ষপ কোথাও ত ফুটিয়া উঠিতেছে না । ওহে ! এ ব্যক্তি বাস্তবিকই দরিদ্র । হউক এখনচলিয়া যাই ।

शर्वि। किं नु खलु अयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति?। तत् किं व्यापादयामि? उत लघुत्वादुत्स्वप्नायते। दृष्ट्वा। अये! जर्जर-स्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलङ्करणभाण्डम्। भवतु, गृह्णामि। अथवा, न युक्तं तुल्यावस्थं कुलपुत्रजनं पीड़यितुम्। तद्गच्छामि। (ङ)

प्रलपतीत्यर्थः। "शब्दादीनि करोति" इति करोत्यर्थे णिचः, शब्दादीनां नामगणत्वात्। सुवर्णभाण्डं स्वर्णालङ्कारम्। मदपेक्षया भवता सावधानतया रक्षणीयत्वादिति भावः।

(ङ) शर्वि इति। उपहसतीति। यस्य पित्तलभाण्डमपि न दृश्यते, तस्यैव सुवर्णभाण्डग्रहणोपदेशादुपहास इति बोध्यम्। तत् तस्मादुपहासकारणात्। लघुत्वा-दात्मनो गाम्भीर्य्यराहित्यात्। जर्जरा पुरातनत्वेन जीर्णा या स्नानशाटी स्नानकालीनपरिधेयवस्त्रं तेन निबद्धम्। अलङ्करणभाण्डम् अलङ्कारपात्रम्। तुल्या मत्समाना अवस्था दीनदशा यस्य तम्, कुलपुत्रजनं सत्कुलजातं लोकम्।

(ঘ) বিদূষক। (স্বপ্নের ভিতরে বলিতে লাগিল) বয়স্য! সন্ধি যেন দৃষ্টি গোচর হইতেছে এবং চোর যেন দেখিতেছি, অতএব তুমি এই স্বর্ণালঙ্কার গ্রহণ কর।

(ঙ) শর্বিলক। এই ব্যক্তি, 'আমি এখানে প্রবেশ করিয়াছি' ইহা জানিয়াই কি 'আমি দরিদ্র' এই ভাবে আমাকে উপহাস করিতেছে? তবে কি ইহাকে মারিয়া ফেলিব? অথবা এ লোকটা লঘু (হাল্কা) বলিয়া স্বপ্নের ভিতরে কথা বলিতেছে। (দেখিয়া) ওহে! জীর্ণ স্নান-শাটীদ্বারা বদ্ধ সত্যই ইহা স্বর্ণালঙ্কার দীপের আলোকে প্রকাশিত হইয়াছে। হউক, গ্রহণ করি। অথবা এক রকম অবস্থার লোক, বিশেষতঃ সদ্বংশজাত; সুতরাং ইহাকে উৎপীড়িত করা সঙ্গত নহে। অতএব এখন যাই।

विदू। भो वअस्स! साविदोसि गोवम्हणकामाए, जइ एदं सुवस्मभण्डअं ण गेख्हसि। (च)

शर्वि। अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च। तदृगृह्लामि। अथवा, ज्वलति प्रदीपः। अस्ति च, मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्य्यते। तं तावत् प्रवेशयामि, तस्याय देशकालः। एष मुक्तो मया कीटो यात्वेव अस्य दीपस्य उपरि मण्डलैर्विचित्रैर्विचरितुम्। एष पक्षद्वयानिलेन निर्वापितो भद्रपीठेन, धिक् कृतमन्धकारम्। अथवा, मयापि अस्मद्-ब्राह्मणकुले न धिक् कृतमन्धकारम्? अहं हि चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्य्यमनुतिष्ठामि। इदानीं करोमि ब्राह्मणस्य प्रणयम्। इति जिघृक्षति। (छ)

(च) भो वयस्य! शापितोऽसि गोब्राह्मणकाम्यया यदि एतत् सुवर्णभाण्डं न गृह्लासि।

(च) विदू इति। शापितोऽसि शपथ कारितोऽसि, गौश्च ब्राह्मणश्च तौ तयोः काम्यया अभिलाषेण। तथा च गोब्राह्मणस्य च अभिलाषभङ्गे यत् पातकम् एतस्य अग्रहणेऽपि तदेव तव पातकं भवेदिति भाव।

(छ) शर्वि इति। भगवती उभयोरपि माहात्म्यात् माहात्म्यवती गोकाम्या गोरभिलाषभङ्ग ब्राह्मणकाम्या ब्राह्मणस्य अभिलाषभङ्गश्च। ज्वलति प्रदीप, अतएव दानीमेव ग्रहणे अन्येषां दर्शनसम्भवात् न गृह्लामि इति भाव। आग्नेय अग्नि-निर्वापणकारी, कीटो धार्य्यते, स चास्तीत्यन्वय। प्रवेशयामि प्रदीपप्रभामण्डलाभ्यन्तरे इति शेष। देशेन युक्त कालो देशकाल, मध्यपदलोपी समास, तादृशकीटप्रवेशनस्य इद स्थानम् अय समयश्चेत्यर्थं, सन्निवारकाभावात् इदानीमेवालङ्कारस्यापहार्य्यत्वादिति

(চ) বিদূষক। বয়স্য! আমি তোমাকে গরু ও ব্রাহ্মণের অভিলাষদ্বারা শপথ করাইতেছি, যদি এই অলঙ্কার গ্রহণ না কর।

विदू। भो वअस्स! सीदन्ति दे अग्गहत्था। (ज)

भाव। यात्वेव गच्छतु एव। भद्रपीठेन तदाख्येन कीटेन कर्त्रा, पक्षद्वयस्य अनिलेन वायुना करणेन, एष प्रदीपो निर्वापितः, तथैव च अन्धकारं कृतम्। धिगिति सत्कार्य्यनिन्दायाम्। "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः। इतो निर्वेदोदयादाह अथवेति। मयापि, न केवलमनेन कीटेनेति भावः, अस्माद्ब्राह्मणकुले अन्धकारम् अन्धकारवत् पापं मालिन्यं न कृतमिति काकु, न कृतं किम्? अपि तु कृतमेवेत्यर्थः। अतएव मां धिक्, हि यस्मात्। अप्रतिग्राहकस्य असद्दानस्वग्रहणेन पापभयात् कुत्सितदपि प्रतिग्रहमपि अकुर्वतः इत्यर्थः। अकार्य्यं चौर्य्यरूपम्। अनुतिष्ठामि करोमि। इतोऽधिकं नास्त्यधः पातः इति भावः। प्रणय प्रार्थना प्रार्थनापूरणमित्यर्थः। जिघृक्षति ग्रहीतुमिच्छति।

*अत्र मदनिकायाः रतिभोगार्थसमीहाकरणात् विलासो नाम प्रतिमुखसन्धेरङ्गम्—"समीहा रतिभोगार्था विलास इति कथ्यते" इति साहित्यदर्पणलक्षणात्।*

---

(छ) शर्व्विलक। गुरुর অভিলাষ ও ব্রাহ্মণের অভিলাষের গুরুতর মাহাত্ম্য রহিয়াছে, সুতরাং তাহা অতিক্রম করা যায় না, অতএব গ্রহণ করি। অথবা, প্রদীপ জলিতেছে, প্রদীপ নির্ব্বাণের জন্য আমি আগ্নেয় কীট রাখিয়া থাকি, তাহা আমার নিকটে আছেও, তাহাকেই প্রেরণ করি, সেই প্রেরণেরই এই স্থান এবং সময়। আমি এই সেই কীট ছাড়িয়া দিলাম, এই দীপের উপরে বিচিত্র মণ্ডলাকারে বিচরণ করিবার জন্য এই কীট চলিয়া যা'ক্। ভদ্রপীঠনামক সেই কীট, পক্ষদ্বয়ের বায়ুদ্বারা এই দীপ নির্ব্বাপিত করিল, হায়! অন্ধকার করিয়া ফেলিল। আমিও কি আমাদের ব্রাহ্মণকুলে অন্ধকার করি নাই?। চতুর্ব্বেদবিৎ এবং অপ্রতিগ্রাহীর পুত্র আমি শর্ব্বিলকনামে ব্রাহ্মণ, এখন বেশ্যা মদনিকার জন্য অকার্য্যের অনুষ্ঠান করিতেছি। এখন ব্রাহ্মণের প্রার্থনা পূরণ করি। (এই বলিয়া গ্রহণ করিতে ইচ্ছা করিল।)

शर्वि । धिक् प्रमादः । सलिलसम्पर्कात् शीतलो मे अग्रहस्तः । भवतु, कक्षयोर्हस्तं प्रक्षिपामि । नाट्येन सव्यहस्तमुष्णीकृत्य गृह्णाति । (झ)

विदू । गहिदं ? । (ञ)

शर्वि । अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः । तद्गृहीतम् । (ट)

विदू । दाणीं विक्किणिद-पण्णो विअ वाणिओ, अहं सुहं सुविस्सं । (ठ)

~~~~~~~~~~~~~~~~~~~~

(ज) भो वयस्य । शीतलस्ते अग्रहस्तः । (ञ) गृहीतम् ? ।

---

(ज) विदू इति । हस्तस्याग्रमिति अग्रहस्तः । राजदन्तादित्वात् परनिपातः ।

(झ) शर्वि इति । धिगित्यात्मनिन्दायाम् । प्रमादः अनवधानता, सञ्जात इति शेषः, हस्तमनुष्णीकृत्यैव गृहवी प्रहसत्वादिति भावः । सलिलसम्पर्कात् कपाटे प्रदीपार्थं जलप्रदानात् । कक्षयोः पार्श्वबाहुमूलयोरभ्यन्तर इति शेषः, प्रक्षिपामि तत्स्थानस्य स्वभावत एवोष्णत्वेन उष्णीकरणार्थमिति भावः । सव्यहस्तं दक्षिणहस्तम् ।

"सव्यस्तु दक्षिणे । वामे च प्रतिकूले च" इति विश्वः ।

(ञ) विदू इति । गृहीतमिति काकुः, गृहीतं किमित्यर्थः ।

(ट) शर्वि इति । ब्राह्मणस्य प्रणयः प्रार्थना ।

---

(জ) বিদূষক । বয়স্য ! তোমার হস্তাগ্র যে শীতল ।

(ঝ) শর্বিলক । হায় ! অসাবধানতা হইয়াছে । জল স্পর্শ করায় আমার হস্তাগ্র শীতল হইয়াছে । হউক, বক্ষদেশে হস্তক্ষেপ করি । ( অভিনয় অনুসারে দক্ষিণ হস্ত উষ্ণ করিয়া গ্রহণ করিল । )

(ঞ) বিদূষক । গ্রহণ করিয়াছ ? ।

(ট) শর্বিলক । এই ব্রাহ্মণের প্রার্থনা লঙ্ঘনীয় নহে । তাই গ্রহণ করিয়াছি ।
~~~~~~~~~~~~~~~~~~~~

शर्वि । महाब्राह्मण ! स्वपिहि वर्षशतम् । कष्टम्, एवं मदनिकागणिकार्थे ब्राह्मणकुलं तमसि पातितम् । , अथवा, आत्मा पातितः । (ड)

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम् ।
यदेतद्गर्हितं कर्म्म निन्दामि च करोमि च ॥१८॥

---

(ठ) इदानीं विक्रीतपण्य इव वाणिज अहं सुखं स्वप्स्यामि ।

---

(ठ) विदू इति । विक्रीतं पण्यं विक्रेयद्रव्यं येन स, वाणिजो वणिक् । अन्धकारावरणेन दर्शनाभावात् निद्रामोहेन च स्वरापरिज्ञानादिव्य विदूषकस्य व्यत्यय इति बोध्यम् ।

(ड) शर्वि इति । महाब्राह्मण ! निकृष्टब्राह्मण ! । उक्तविधप्रलापैरात्मनो नितान्ताधमत्वप्रतिपादनात् प्रदोषस्थितिकाले ब्राह्मणोचितनित्यकार्यविरमणाच्च शुद्धस्य सम्बोधनमुपपद्यत इत्यवधेयम् । तमसि घोरतमसावृते नरके । ननु एकज्ञातेन पापेन कथं ब्राह्मणकुलसामान्यस्य पातित्यं स्यादित्याह अथवेति । आत्मा स्वस्य जीवात्मा, पातितः पातित्यास्पदीकृतः, ब्राह्मणस्वामिकाशीतिरत्तिकापरिमितस्वर्णान्यतमस्य स्तेयस्य शूलपाणिप्रभृतिभिः प्रायश्चित्तविवेकादौ महापातकत्वेन व्यवस्थापितत्वात् महापातकस्य च पातित्यजनकत्वादिति भावः ।

पातित्यमाह प्रायश्चित्ततत्त्वधृतं वचनम्—"पञ्चैतानि महापातकानि कृत्वा ब्राह्मणः सद्भिर्नाभिभाष्यो मानुषाणाम् अभियास्तः सर्वकर्मविवर्जितः पतिततमो भवति ।"

धिगिति । न निर्वेदितं कुत्रापि न ज्ञापितं पौरुषं पुरुषकारो येन तत् तादृशम्,

---

(ঠ) বিদূষক। বিক্রীত-দ্রব্য বণিকের ন্যায় এখন আমি সুখে নিদ্রা যাইতে পারিব।

(ড) শর্বিলক। নিকৃষ্টব্রাহ্মণ! শতবর্ষ নিদ্রা যাও। হায়, বেশ্যা মদনিকার জন্য আমি ব্রাহ্মণবংশকে অন্ধকারে নিপাতিত করিলাম। অথবা, আপনাকে নিপাতিত করিলাম।

तद्यावत् मदनिकाया निष्क्रयणार्थं वसन्तसेनागृहं गच्छामि। परिक्रम्य अवलोक्य च। (ढ) अये। पदशब्द इव। मा नाम रक्षिणः। भवतु, स्तम्भीभूत्वा तिष्ठामि। अथवा ममापि नाम शर्विलकस्य रक्षिणः?। योऽहम्। (ण)

दारिद्र्य खलु धिगस्तु। यद्यस्मात् दारिद्र्याद्धेतो, एतत् कर्म गर्हितं कर्म निन्दामि च गर्हितत्वादेव करोमि च गणिकायै दानाय आवश्यकत्वादिति भाव।

अत्र दारिद्र्यस्य धिक्कारं प्रति अनिर्वेदितपौरुषपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्। निन्दामि करोमीत्यनेकक्रिययोरहमित्येककारकत्वात् दीपकञ्च अनयो परस्परनिरपेक्षतया संसृष्टिः। न च पराद्धे क्रियासमुच्चय इति वाच्यम् अतिशयोक्ति मूलकत्वाभावात् दर्पणकारादिभि क्रियासमुच्चयस्य अतिशयोक्तिमूलकत्वाङ्गीकारात् ॥१९॥

(ढ) तदिति। निष्क्रयणार्थं विमोचनार्थम् अस्यालङ्कारस्य प्रदानेन वसन्तसेनाया दासीत्वसितो बहिष्करणार्थमित्यर्थ।

अत्र परिसर्पो नाम प्रतिमुखसन्धेरङ्गम्—"दृष्टनष्टानुसरणं परिसर्प इत्यते" इति साहित्यदर्पणलक्षणात्।

(ण) अये इति। पदशब्द इव श्रूयत इति शेष। रक्षिण चौरप्रवेशसन्देहेन रथ्यात आगता राजधान्या प्रहरिण, मा नाम न भवन्तु इति शेष। भवतु रक्षिणा-मेवागमनमित्यर्थ, स्तम्भीभूत्वा प्रासादस्य स्तम्भाकारो भूत्वा। ननु तथात्वेऽपि यदि रक्षिण परिच्छिन्द्युरित्याह अथवेति। शर्विलकस्य समीपे, रक्षिण प्रभवेयुरिति शेष। सगर्वोक्तिरियम्।

---

যাহাতে কুত্রাপি পুরুষকার প্রকাশ করা চলে না, সেই দারিদ্র্যকে ধিক্। যেহেতু এই গর্হিত কার্য্যের নিন্দাও করিতেছি, আবার তাহা করিতেছিও ॥১৯॥

(ঢ) অতএব মদনিকাকে মুক্ত করিবার জন্য বসন্তসেনার বাড়ী যাই। (পাদক্ষেপ করিয়া দেখিয়া) (ণ) ওহে! পদশব্দের ন্যায়

मार्जारः क्रमणे, मृगः प्रसरणे, श्येनो ग्रहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा, सर्पणे पन्नगः ।
माया रूप-शरीर-वेश-रचने, वाग् देशभाषान्तरे,
दीपो रात्रिषु, सङ्कटेषु डुडुभो, वाजी स्थले, नौर्जले ॥२०॥

मार्जार इति । क्रमणे पादविक्षेपे निःशब्दपादसञ्चारे इत्यर्थः, मार्जारो विडालस्वरूपः । प्रसरणे शीघ्रगमने, मृगो हरिणस्वरूपः । ग्रहेण लुञ्चनम् ग्रहालुञ्चनं तस्मिन् मध्यपदलोपी समासः, लुञ्चनं पक्षच्छेदने चेत्यर्थः श्येनस्तदाख्यपक्षिरूपः । सुप्तस्य निद्रितस्य असुप्तस्य जागरितस्य च मनुष्यस्य वीर्यतुलने शक्तिमात्रमेव बलनिरूपणे, श्वा कुक्कुरस्वरूपः कुक्कुरो हि शक्तिमात्रमेव अपरकुक्कुरस्य मनुष्यादेश्च बलं निरूपयितुमर्हति । सर्पणे रन्ध्रादिप्रवेशात्मकगमने, पन्नगः सर्परूपः । रूपस्य नीलपीतादिवर्णस्य, शरीरस्य स्त्रीपुरुषाकारस्य, वेशस्य नानादेशीयपरिच्छदस्य च रचने विधाने, माया शाम्बरेन्द्रजालिकविद्यास्वरूपा । देशभाषान्तरे नानादेशीयभाषाभेदे, वाक् साक्षात् सरस्वतीरूपा । रात्रिषु दीपः प्रदीपस्वरूपः, दीपो यथा रात्रौ प्रभावं प्राप्नोति, अहमपि तथैव रात्रौ प्रभावं प्राप्नोमीति भावः । सङ्कटेषु शत्र्वाक्रमणादिना विपत्सु, डुडुभः शृगालस्वरूपः शृगालो यथा कुक्कुरादीनामाक्रमणे पलाय्य आत्मानं रक्षति, अहमपि तथैव शत्र्वाक्रमणे पलाय्य आत्मानं रक्षामीति भावः । स्थले भूभागे, वाजी घोटकरूपः, तद्वदेव भारवहनक्षमः प्रगल्भो वेगाश्रयः । तथा जले नौर्नौकास्वरूपः तथैव गमनक्षमः इत्यभिप्रायः ।

अत्र एकस्य शर्विलकस्य क्रमणादिविषयभेदेन अनेकधोल्लेखात् रूपकयुक्त उल्लेखालङ्कारः "गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः" इति साहित्यदर्पणोदाहृतवत् । तथा सप्तम्येकवचनान्तप्रयोगमध्ये "रात्रिषु सङ्कटेषु" इति बहुवचनान्तप्रयोगात् भग्नप्रक्रमतादोषः, समुच्चयार्थकचकारोऽप्यत्र वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषश्च; "वाजी भुवितले, जलेऽस्मि तरणिः, दीपश्च दुःसङ्कटे" इति पाठे तु तयोः समाधानम् न च

শুনিলাম। ক্রীড়া যেন না হয়। হউক, দৃঢ় হইয়া থাকি। অথবা আমি শর্বিলক। আমার নিকট আবার ক্রীড়া?। যে আমি—

अपि च। भुजग इव गतौ, गिरिः स्थिरत्वे,
पतगपतेः परिसर्पणे च तुल्यः।
शश इव भुवनावलोकनेऽहं
वृक इव च ग्रहणे बले च सिंहः ॥२१॥

---

लिङ्गव्यत्ययादपि भयप्रकमतान्तरमिति बोध्यम् उभयलिङ्गत्वेऽपि बहुलप्रयोगात्। अथवा तत्समाधानार्थमपि एवमेव पाठपरिवर्त्तनं विधेयम्।

कुक्कुरशब्दः आविर्देशे शृगालार्थे प्रसिद्ध आसीदिति सम्प्रदायः।

शार्दूलविक्रीडितं वृत्तम् ॥२०॥

उक्तप्रायमेवार्थं भङ्ग्यन्तरेणाह भुजग इति। अहं गतौ अप्रत्यक्षगमने, भुजगः सर्प इव, स्थिरत्वे धैर्ये, गिरिः पर्वत इव। उपमावाचकशब्दाभावादपठितोऽपि इवशब्दो गिरिशब्देनान्वीयते। परिसर्पणे द्रुतगमने पतगपतेर्गरुडस्य च तुल्यः, भुवनावलोकने एकस्थानस्थ एव जगद्दर्शने शशो मृगविशेष इव, ग्रहणे हस्तवस्तुस्वीकारे, वृको व्याघ्रविशेष इव, बले च सिंह इव। उपमासाहचर्यात् सिंहशब्देनापि सह इवशब्दोऽन्वीयते। अतएव का नाम रक्षिष्यति मम भीतिरिति भावः।

अत्रापि एकस्य शर्विलकस्य गत्यादिविषयभेदेन अनेकधोल्लेखान्मालोपमायुक्त उल्लेखालङ्कारः साहित्यदर्पणादावुल्लेखालङ्कारस्य नियमेनालङ्कारान्तरयुक्तत्वाभिधानात्।

पुष्पिताग्रा वृत्तम् ॥२१॥

---

নিঃশব্দ পদসঞ্চারে বিড়াল, দ্রুতগমনে হরিণ, গ্রহণে ও ছেদনে শ্যেন-পক্ষী, নিদ্রিত ও জাগরিত মনুষ্যের বলনিরূপণে কুক্কুর, বক্ষ-প্রবেশে সর্প, নানাজাতীয় বর্ণ, স্ত্রী বা পুরুষের আকার এবং নানাদেশীয় বেশ, এই সকল রচনায় মায়া, বিভিন্ন ভাষাতে সাক্ষাৎ সরস্বতী, রাত্রিতে দীপ, সঙ্কটে শৃগাল, স্থলে ঘোড়া এবং জলে নৌকা ॥২০॥

আরও, আমি গমনে সর্পের ন্যায়, স্থিরতায় পর্বতের ন্যায় দ্রুতগমনে গরুড়ের ন্যায়, জগতের দর্শনে শশকের ন্যায়, গ্রহণে ব্যাঘ্রের ন্যায়, এবং বলে সিংহের ন্যায় ॥২১॥

प्रविश्य रदनिका। हद्धी ! हद्धी ! वाहिर-दुआर-सालाए पसुत्तो वड्ढमाणओ, सोवि एत्थ ण दीसइ। भोदु, अज्जमित्तेअं सद्दावेमि। इति परिक्रामति। (त)

शर्वि°। रदनिकां हन्तुमिच्छति। निरूप्य। कधं स्त्री ! भवतु, गच्छामि। इति निष्क्रान्तः। (थ)

रद। गत्वा सत्रासम्। हद्धी ! हद्धी ! अम्हाणं गेहे सन्धिं कप्पिअ चोरो णिक्कमदि। विदूषकमुपगम्य। अज्जमित्तेअ ! उट्ठेहि उट्ठेहि ; अम्हाणं गेहे सन्धिं कप्पिअ चोरो णिक्कन्तो। (द)

(त) हा धिक् हा धिक् ! बहिर्द्वारशालायां प्रसुप्तो वर्द्धमानकः, सोऽप्यत्र न दृश्यते। भवतु, आर्य्यमैत्रेयं शब्दापयामि।

(द) हा धिक् हा धिक् ! अस्माकं गेहे सन्धिं कल्पयित्वा चौरो निष्क्रामति। आर्य्यमैत्रेय ! उत्तिष्ठ उत्तिष्ठ, अस्माकं गेहे सन्धिं कल्पयित्वा चौरो निष्क्रान्तः।

(त) प्रविश्येति। शब्दापयामि शब्देनाह्वयामि।

(थ) शर्वि इति। कथं स्त्री, अतएव न हन्तव्या, "अवध्याश्च स्त्रियः प्राहुस्तिर्य्यग्-योनिगतेष्वपि" इति शास्त्रादिति भावः। निष्क्रान्तः सन्धिद्वारेणेति शेषः।

(द) रद इति। गत्वा सन्धिद्वारपर्य्यन्तमिति शेषः, कल्पयित्वा निर्म्माय।

(ত) (প্রবেশ করিয়া) রদনিকা। হায় হায়! বহির্দ্বারের গৃহে বর্দ্ধমান নিদ্রা যাইতেছিল, তাহাকেও এখানে দেখিতেছি না। হউক, আর্য্যমৈত্রেয়কে ডাকি। (এই বলিয়া পাদক্ষেপ করিতে লাগিল।)

(থ) শর্ব্বিলক। (রদনিকাকে হত্যা করিতে ইচ্ছা করিল, পরে নির্ণয় করিয়া) এ যে স্ত্রীলোক!। হউক, এখন চলিয়া যাই। (ইহার পর চলিয়া গেল।)

(দ) রদনিকা। (যাইয়া ত্রাসের সহিত) হায় হায়! আমাদের ঘরে সিঁধ কাটিয়া চোর বাহির হইয়া যাইতেছে। (বিদূষকের নিকট

विदू। उत्थाय। आः दासीए धीए! किं भणासि "चोरं कप्पिअ सन्धो णिक्कन्तो?"। (ध)

रद। हदास! अलं परिहासेण। किं ण पेक्खसि एणं?। (न)

विदू। आः दासीए धीए! किं भणासि? दुदीअं विअ दुआरअं उग्घाड़िदं त्ति। भो वअस्स! चारुदत्त! उट्ठेहि, उट्ठेहि, अम्हाणं गेहे सन्धिं दइअ चोरो णिक्कन्तो। (प)

---

(ध) आः दास्याः पुत्रि। किं भणसि 'चौरं कल्पयित्वा सन्धिर्निष्क्रान्तः?'।

(न) हताश! अलं परिहासेन। किं न प्रेक्षसे एनम्?।

(प) आः दास्याः पुत्रि! किं भणसि? द्वितीयमिव द्वारकम् उद्घाटितमिति। भो वयस्य! चारुदत्त! उत्तिष्ठ उत्तिष्ठ। अस्माकं गेहे सन्धिं दत्त्वा चौरो निष्क्रान्तः।

---

(ध) विदू इति। "हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः" इत्युक्त-स्वभावतया विपत्प्रस्तावेऽपि विदूषकस्य परिहासोक्तिरिति बोध्यम्।

अतएवात्र नर्म नाम प्रतिमुखसन्ध्यङ्गम्—"परिहासवचो नर्म" इति साहित्यदर्पणलक्षणात्।

(प) विदू इति। द्वारकं द्वारम्। स्वार्थे कप्रत्ययः।

---

গিয়া) আর্য্যমৈত্রেয়। উঠুন উঠুন, আমাদের ঘরে সিঁধ কাটিয়া চোর বাহির হইয়া গেল।

(ধ) বিদূষক। (উঠিয়া) আ দাসীর মেয়ে! কি বলিতেছিস্ 'চোর কাটিয়া সিঁধ বাহির হইয়া গেল?।'

(ন) রদনিকা। হতাশ। পরিহাসের প্রয়োজন নাই। এই সিঁধ দেখিতেছ না কি?।

(প) বিদূষক। আ দাসীর মেয়ে! বলিতেছিস্ কি! আর একখানি

चारु । भवतु । भोः ! अलं परिहासेन । (फ)

विदू । भो ! ण परिहासो । पेक्खदु भवं । (ब)

चारु । कस्मिन्नुद्देशे ? । (भ)

विदू । भो ! एसो । (म)

चारु । विलोक्य । अहो ! दर्शनीयोऽयं सन्धिः । (य)

उपरितलनिपातितेष्टकोऽयं
शिरसि तनुर्विपुलश्च मध्यदेशे ।
असदृश-जन-सम्प्रयोगभीरो-
र्हृदयमिव स्फुटितं महागृहस्य ॥२२॥

(ब) भोः ! न परिहासः, प्रेक्षतां भवान् ।
(म) भोः ! एषः ।

(फ) चारु इति । भवतु अस्मयि निद्राभङ्ग इति शेष, चौरैः छन्नेगतागते क्वते वा पुनरन्या गतिरिति भाव । मम दारिद्र्यदशाया सर्वैरेव विदिततया किमर्थं चौर प्रविशेदिति नैवं श्रद्धाति परिहासार्थं वदति इत्यभिप्राय आह "अलं परिहासेन" इति ।

(भ) चारु इति । उद्देशे देशे स्थाने इति यावत् सन्धिरिति शेष ।

(य) चारु इति । दर्शनीय आग्रहेण दर्शनयोग्य, विशेषणं पुनर्निर्मितत्वेन सुन्दर त्वादिति भाव ।

দ্বার যেন উদ্ঘাটন করিয়া ফেলিয়াছে। সখে! চারুদত্ত! উঠ উঠ, আমাদের ঘরে সিঁধ দিয়া চোর বাহির হইয়া গিয়াছে।

(ফ) চারুদত্ত। হউক, সখে! পরিহাসে প্রয়োজন নাই।

(ব) বিদূষক। সখে! পরিহাস নহে তুমি দেখ।

(ভ) চারুদত্ত। কোন্ জায়গায় ?।

(ম) বিদূষক। সখে! এই যে।

(য) চারুদত্ত। (দেখিয়া) অহ! এই সন্ধিটী সুন্দর বটে।

कथमस्मिन्नपि कर्म्मणि कुशलता। (र)

विदू। भो वअस्स ! अअं सन्धो दुवेहिं ज्जेव दिट्ठो भवे। आदु, आगन्तुएण सिक्खिदुकामेण वा। अण्णधा इध उज्जइणीए को अम्हाणं घरविहवं ण जाणादि ?। (ल)

(ल) भो वयस्य। एष सन्धिर्द्वाभ्यामेव दृष्टो भवेत्। अथवा आगन्तुकेन शिक्षितुकामेन वा। अन्यथा इह उज्जयिन्यां कः अस्माकं गृहविभवं न जानाति ?।

---

उपरीति। उपरि ऊर्द्ध्वदेशात्, तलादधोदेशाच्च निपातिता इष्टका यस्य सः, अतएव मध्यदेशादिष्टका स्वयमेव पतिता इति भावः। अतएव च शिरसि उपरिभागे तनुः स्वल्पविस्तारः मध्यदेशे च विपुलो विशालविस्तारः। तथा च उपरिभागादधोभागाच्च इष्टकापातनेन मध्यस्थानां स्वयमेव स यौगशैथिल्यान्निरवलम्बनतया अनियतभावेन पतनान्मध्यदेशे विशालो भूतः अतएवाधोदेशेऽपि तनुरेवेति भावः। यदुक्तं शर्व्विलकेनैव— "तदत्र पक्वेष्टके पूर्णकुम्भ एव शोभते, तमुत्पादयामि" इति। तथा च असदृशजनस्य पातकिनः स्वाभ्यन्तरप्रवेशे अधीरलोकस्य चौरस्य यः सम्प्रयोगः संसर्गः तस्मादभीरोर्भयशीलस्य, महागृहस्य उत्कृष्टतया मदीयप्रशस्तभवनस्य, हृदयं वक्षःस्थलम्; स्फुटितं विदीर्णमिव जातमिति शेषः, तस्यैव द्वारं सन्धिरूपेणेदं प्रकाशत इति भावः।

अत्र क्रियोत्प्रेक्षालङ्कारः। पुष्पिताग्रा वृत्तम् ॥२२॥

(र) कथमिति। अस्मिन् कर्मण्यपि निकृष्टत्वादनादरणीये सन्धिनिर्म्माणकार्य्येऽपि, कुशलता नैपुण्यम्, सुतरां स्वभावत एवायं निपुणश्चौर इति भावः।

(ल) विदू इति। उक्तौ द्वावेव विकल्पते अथवेति। अत्र अथवाशब्दो वाशब्दश्च विकल्पार्थे। तथा च आगन्तुकेन देशान्तरादागतेन वा देशान्तरादागतत्वेन अस्माकं-

---

উপর ও নীচ হইতে ইট ফেলিয়া দিয়াছে, তাহাতে উপরে ও নীচে ছোট, এবং মাঝখানে বড় হইয়াছে। সুতরাং অযোগ্য লোকের (চোরের) সংসর্গ করিতে ভীরু এই উৎকৃষ্ট গৃহের হৃদয় যেন বিদীর্ণ হইয়া গিয়াছে ॥২২॥

(র) ওঃ! এ কার্য্যেও দক্ষতা!।

चारु। वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान् धनैर्विरहितं विस्रब्धसुप्तं जनम्।
दृष्ट्वा प्राक्महतीं निवासरचनामस्माकमाशान्वितः
सन्धिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः ॥२३॥

अयिनीतत्वात्तया तथावस्थामपि अजानता जनेन वैन्दर्य, शिक्षितुकामेन वा, नूतन सन्धिनिर्म्माणमिति शेषः। गृहस्य विभवं धनम्।

विदूषकोक्तिमिवाङ्गीकुर्वन्नाह वैदेश्येनेति। वैदेश्येन भिन्नदेशोत्पन्नेन जनेन, अथवा व्यापारं नव सन्धिनिर्म्माणकार्य्यम् अभ्यस्यता शिक्षमाणेन जनेन, मम गृहे कृतो भवेत्, अयं सन्धिरिति शेषः। ननु कुत एवमनुमानमित्याह—असौ सन्धिकारी जनः, धनैर्विरहितम् अतएव विस्रब्धसुप्तम् निःशङ्कभावेन निद्रितं जनम् न वेदितवान् न ज्ञातवान्, एतद्गृहवासिनो तु मम निर्धनत्वमवज्ञमेव विद्यात् तथा च सन्धिं न कुर्य्यादिति भावः। प्राक् पूर्वं महतीमस्माकं निवासरचनां भवननिर्म्माणम्, दृष्ट्वा, आशान्वितः "अत्र प्रचुरधनमस्ति, तदपहरामि" इत्याशाविशिष्टः सुचिरं दीर्घकालम् अन्यथा कथमीदृशं सुन्दरं सन्धिं स्यादिति भावः सन्धिच्छेदनेन खिन्नः परिश्रान्त एव सन्, पश्चात् निराशो गतः, कियतोऽपि मूल्यवतो द्रव्यस्यादर्शनादित्याशयः।

अत्र प्रथमचरणार्थं प्रति द्वितीयचरणगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, तथा विस्रब्धसुप्तत्वं प्रति "धनैर्विरहितम्" इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, तदुभयकृतविच्छित्तिविशेषात् निर्धनत्वावगमरूपसाधर्म्येण तस्करस्य वैदेश्यत्वरूपसाध्यस्यानुमानादनुमानालङ्कारः। तथा प्रथमपादे सन्धिबोधकपदानभिधानादेक विकल्पार्थकवाशब्दानभिधानाच्चापरो न्यूनपदतादोषः, एवं चौर्य्यमिति व्यापारविशेषे

(ল) বিদূষক। বয়স্য। এই সিঁধ দুই রকম লোকের দেওয়া হইবে। এক—বিদেশ হইতে আগত লোকের, অথবা—শিক্ষাভিলাষী চৌর্য্যে লোকের। না হইলে, এই উজ্জয়িনীতে কোন্ ব্যক্তি, আমাদের ঘরের বৈভব না জানে?।

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी, 'सार्थवाहसुतस्य गृहं प्रविश्य न किञ्चिन्मया समासादितम्' इति। (ब)

विदू। भो! कधं तं ज्जेव चोरहदअं अणुसोचसि। तेण चिन्तिदं महन्तं एदं गेहं, इदो रअणभण्डअं सुवण्णभण्डअं वा णिक्कामइस्सामि। स्मृत्वा सविषादमात्मगतम्। कहिं तं सुवण्णभण्डअं। पुनरनुसृत्य प्रकाशम्। भो वअस्स! तुमं सव्वकालं भणासि मुक्खो मित्तेअओ, अपण्डिदो मित्तेअओ त्ति। सुट्ठु, मए किदं तं सुवण्णभण्डअं भवदो हत्थे समप्पअन्तेण। अण्णधा दासीए पुत्तेण अवहिदं भवे। (श)

(श) भोः! कथं तमेव चौरहृतकमनुशोचसि। तेन चिन्तितम्—महदेतद्-

वक्तव्ये व्यापारमिति सामान्याभिधानात् विशेषे अविशेषाच्चदोषश्च; 'वैदेश्येन कृतो -गृहेऽयमथवा मे चौर्यमिवार्थिना' इति पाठे तु तेषां समाधानम्।

शार्दूलविक्रीडितं वृत्तम् ॥२३॥

(ब) तत इति। असौ सन्धिकारी जनः। तपस्वी शोच्यः, महतोऽपि परिश्रमस्य निष्फलत्वादिति भावः। सार्थवाहसुतस्य वाणिज्यव्यवसायिनः पुत्रस्य।

চারুদত্ত। বিদেশীয় কোন লোক কিংবা শিক্ষাভিলাষী কোন লোক আমার গৃহে এই সন্ধি নির্মাণ করিয়া থাকিবে, যেহেতু ঐ লোক, এই গৃহ যে ধনহীন বা ইহাতে লোকেরা নিরুদ্বেগে নিদ্রা যাইতেছে, ইহা জানিত না। প্রথমে আমাদের প্রকাণ্ড বাড়ী দেখিয়া আশান্বিত হইয়াছিল, পরে দীর্ঘকাল যাবৎ সন্ধিচ্ছেদনে কেবল পরিশ্রান্ত এবং নিরাশ হইয়া চলিয়া গিয়াছে ॥২৩॥

(ব) সুতরাং ঐ দুঃখী লোকটা বন্ধুগণের নিকট কি বলিবে যে, 'আমি বাণিজ্যব্যবসায়ীর পুত্রের বাড়ীতে প্রবেশ করিয়া কিছুই পাই নাই?।'

चारु। अलं परिहासेन। (य)

विदू। भो! जइ णाम अहं मुक्खो, ता किं परिहास-स्सवि देसआलं ण जाणामि?। (स)

गेहम् इतो रत्नभाण्डं सुवर्णभाण्डं वा निष्क्रामयिष्यामि। क्व तत् सुवर्णभाण्डकम्? भो वयस्य! त्वं सर्वकालं भणसि—'मूर्खो मैत्रेय, अपण्डितो मैत्रेय' इति। सुष्ठु मया कृतं तत् सुवर्णभाण्डं भवतो हस्ते समर्पयता। अन्यथा दास्याः पुत्रेण अपहृतं भवेत्।

(स) भो! यदि नाम अहं मूर्खः, तत् किं परिहासस्यापि देशकालं न जानामि?।

---

(म) विदू इति। हतको हताशयासौ चौरश्चेति चौरहतकः, "अग्निर्लोक" इत्यादिवत् विशेषणस्य परनिपातः। समर्पयतेति। अतो बुद्धिमत एव कार्यस्य कृतत्वात् अतः परं मां मूर्खादिकं न ब्रूया इति भावः। दास्याः पुत्रेण सन्धिकारिणा।

(य) चारु इति। मम हस्ते अलङ्कारसमर्पणादयं तव परिहास एवेति भावः।

(स) विदू इति। यथा यदि। 'अयं परिहासस्य न देशकाल' इति जानाम्येवेति भावः। देशेन युक्तः कालः इति देशकालः। मध्यपदलोपी समासः।

---

(শ) বিদূষক। সখে! তুমি সেই হতাশ চোরটাকে লক্ষ্য করিয়া শোক করিতেছ কেন?। সে চিন্তা করিয়াছিল যে, এখানা প্রকাণ্ড বাড়ী, এ বাড়ী হইতে রত্নের ভাণ্ড বা সোণার ভাণ্ড বাহির করিব। (স্মরণ করিয়া বিষাদের সহিত স্বগত) সেই স্বর্ণালঙ্কার কোথায়?। (পুনরায় স্মরণ করিয়া প্রকাশ্যে) সখে! তুমি সকল সময়েই আমাকে বলিয়া থাক যে, "মৈত্রেয় মূর্খ, মৈত্রেয় অপণ্ডিত"। সেই স্বর্ণালঙ্কার তোমার হাতে দিয়া, আমি ভাল করিয়াছি, না হইলে, দাসীর পো চোর তাহা অপহরণ করিত।

(ষ) চারুদত্ত। পরিহাসে প্রয়োজন নাই।

चारु। कस्यां वेलायाम्?। (ङ)

विदू। भो! जदा तुमं मए भणिदोऽसि—सोदलो दे अग्गहत्थो। (च)

चारु। कदाचिदेवमपि स्यात्?। सर्वतो निरूप्य सहर्षम्। वयस्य! दिष्ट्या ते प्रियं निवेदयामि। (क)

विदू। किं ण अवहिदं?। (ख)

चारु। हृतम्।

(च) भो। यदा त्वं मया भणितोऽसि—शीतलस्ते अग्रहस्तः।

(ख) किं न अपहृतम्?।

---

(ङ) चारु इति। वेलाया समये, समर्पितवानिति शेष।

(क) चारु इति। एवम् अनेनार्पितम्, स्यात् भवेत्। अपिशब्द सम्भावनायाम्, तथ्य सम्भावयामीत्यर्थ। दिष्ट्या भाग्येन।

(ख) विदू इति। अपहृत तदलङ्करणमिति शेष।

---

(ঙ) বিদূষক। যদিও আমি মূর্খ হই, তথাপি পরিহাসের জায়গা বা সময় কি বুঝি না?।

(ঙ) চারুদত্ত। কোন্ সময় দিয়াছিলে?।

(চ) বিদূষক। সখে! যখন আমি তোমাকে বলিয়াছিলাম যে, 'তোমার হস্তাগ্র শীতল।'

(ক) চারুদত্ত। এরূপও কি কখন হয়?। (সকল দিক্ দেখিয়া হর্ষের সহিত) বয়স্য! ভাগ্যক্রমে তোমার প্রীতিকর সংবাদ জানাইতেছি।

(খ) বিদূষক। কি অপহরণ করে নাই?।

চারুদত্ত। অপহরণ করিয়াছে।

विदू। तधा वि किं पिअं ?। (ग)

चारु। यदसौ कृतार्थो गतः। (घ)

विदू। णासो क्खु सो। (ङ)

चारु। कथं न्यासः। मोहमुपगतः। (च)

विदू। समस्समदु भवं। जइ णासो चोरेण अवहिदो, तुमं किं मोहं उवगदो ?। (छ)

चारु। समाश्वस्य। वयस्य।

(ग) तथापि किं प्रियम् ?।

(ङ) न्यासः खलु सः।

(छ) समाश्वसितु भवान्। यदि न्यासश्चौरेणापहृतः, त्वं किं मोहमुपगतः ?।

---

(घ) चारु इति। असौ तस्करः, कृतार्थः तदस्मद्भरणापहरणेन निष्पादितप्रयोजनः। एतदेव प्रियमिति भावः। एतेन चारुदत्तस्य परदुःखकातरत्वमुदारत्वञ्च व्यज्यते।

(ङ) विदू इति। स अलङ्कारः खलु न्यासः वसन्तसेनाया निक्षेपः। अतस्तदपहरणेन निःस्वतया मत्कर्तमनुष्यालङ्कारप्रदानासम्भवः, तददाने च न्यासापहरणदोष इति न तन्निवेदनं कथमपि प्रियं भवितुमर्हतीति भावः।

(च) चारु इति। एतेन विस्मरणवशादेव पूर्वं प्रियमित्युक्तमिति बोध्यम्।

---

(গ) বিদূষক। তাহা হইলে আর প্রিয় কি ?।

(ঘ) চারুদত্ত। যে হেতু, ঐ চোর প্রয়োজন সাধন করিয়া গিয়াছে।

(ঙ) বিদূষক। সে যে গচ্ছিত ছিল।

(চ) চারুদত্ত। হায়। তাহা গচ্ছিত ছিল।। ( মূর্চ্ছিত হইলেন )

(ছ) বিদূষক। তুমি আশ্বস্ত হও। যখন গচ্ছিত ধন চোরে নিয়াছে, তখন তুমি মূর্চ্ছিত হইলে কেন ?।

চারুদত্ত। ( চৈতন্য লাভ করিয়া ) সখে।

क: श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति ।
शङ्कनीया हि लोकेऽस्मिन् निष्प्रतापा दरिद्रता ॥२४॥

भो: ! कष्टम् ।

यदि तावत् कृतान्तेन प्रणयोऽर्थेषु मे कृत: ।
किमिदानीं नृशंसेन चारित्रमपि दूषितम् ॥२५॥

क इति । को जन, भूतार्थं 'चौर एव स न्यासभूतमलङ्कार हृतवान्' इति यथार्थवृत्तान्तम्, श्रद्धास्यति विश्वसिष्यति, कोऽपि नेत्यर्थ, महामूल्यतया सावधानभावेन रक्षणसम्भवादिति भाव । किन्तु सर्वो जन, माम्, तूलयिष्यति तूलवत् लघु करिष्यति । 'दरिद्रोऽयं स्वयमपहृत्य चौरे अपवादमारोपयति' इति समालोचयन् मम लघुत्व जनयिष्यतीत्यर्थ । हि यस्मात् अस्मिन् लोके, निष्प्रतापा तेजःप्रकाशप्रभावरहिता, दरिद्रता शङ्कनीया समस्ताशङ्काविषयीभूता, अतो मम तादृशापवाद शङ्कनीय एवेति भाव ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार ।

"भूत क्ष्मादौ समाप्तौ" इत्यादि मेदि । तूलम् इव तूलवत् करिष्यतीति 'तत्करोति तदाचष्टे' इति णिच् ॥२४॥

यदीति । कृतान्तेन दैवेन, मे मम अर्थेषु धनेषु यदि तावत्, प्रणय प्रेम प्रेम्णा तदपहरणमित्यर्थ, कृत । करोतु तदप्यङ्गीकरोमीति भाव । किन्तु नृशंसेन क्रूरेण तेन कृतान्तेनेति शेष, इदानीं किं कस्मात्, चारित्रमपि मम चरित्रमपि दूषित दूषितत्वेन प्रख्यापितम्, 'चारुदत्तो न्यासमपहृत्य चरित्रभ्रष्टो जात' इति निन्दा प्रख्यापितेत्यर्थ, एतदेव कष्टमिति भाव । एतेन चारुदत्तो धनापेक्षया चरित्रं बहुमन्यत इति ध्वनितम् ॥२५॥

যথার্থ ঘটনা, কে বিশ্বাস করিবে? কিন্তু সকলেই আমাকে তুলার ন্যায় লঘু মনে করিবে। কারণ, এই জগতে প্রভাববিহীন দারিদ্র্যকে সকলেই আশঙ্কা করে ॥২৪॥

হায়! কি কষ্ট! দৈবও বিধাতা আমার ধনে ভাগ নাশ করিয়া-

विदू । अहं क्खु अवलविस्सं, केण दिस्सं? केण गहिदं? को वा सक्खि? त्ति । (ज)

चारु । अहमिदानीमनृतमभिधास्ये?। (झ)

भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यासप्रतिक्रियाम् ।
अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम् ॥२६॥

रद । ता जाव अज्जाधूदाए गदुअ णिवेदेमि ।
इति निष्क्रान्ता । (ञ)

(ज) अहं खलु अपलपिष्यामि, केन दत्तम्? केन गृहीतम्? को वा साक्षी? इति ।

---

(ञ) विदू इति । अपलापयिष्यामि मिथ्यात्वेन अपह्नुत्य वदिष्यामि, वसन्तसेनाया पुनस्तद्द्रव्यहरणवार्त्ता ज्ञापयामिति शेष ।

(झ) चारु इति । अनृतं मिथ्या अभिधास्ये वदिष्यामि किमिति काकु ।

मिथ्याभिधानाभावे तन्न्यासपरिशोधस्य क उपाय इत्याह भैक्ष्येणेति । भैक्ष्येणापि भिक्षाटनेनापि, न्यासस्य वसन्तसेनाया निक्षिप्तधनस्य प्रतिक्रिया परिशोध परिशोधयोग्य धनमित्यर्थं, पुनरर्जयिष्यामि, तथापि चारित्रभ्रंशकारणं सच्चरित्रतो विच्युतिहेतुभूतम् अनृतं मिथ्या, न अभिधास्यामि न वदिष्यामि, चारित्रभ्रंशस्य अभ्युदयप्रतिबन्धकत्वादिति भाव ॥२६॥

---

ছেন (ভাল বাসিয়া তাহা হরণ করিয়াছেন, তাহা করুন) কিন্তু সেই নিষ্ঠুর বিধাতা এখন আমার চরিত্রও, দূষিত করিলেন কেন ॥২৫॥

(জ) বিদূষক। নিশ্চয়ই আমি বলিব—কে দিয়াছে? কে গ্রহণ করিয়াছে? কেই বা সাক্ষী?।

(ঝ) চারুদত্ত। আমি এখন মিথ্যা বলিব?।

বরং আমি ভিক্ষা করিয়াও, বসন্তসেনার গচ্ছিত অলঙ্কারের পরিশোধযোগ্য ধন উপার্জন করিব, তথাপি চরিত্রনাশের কারণ মিথ্যা বলিব না ॥২৬॥

तत प्रविशति चेट्या सह चारुदत्तवधू ।

वधू । ससम्भ्रमम् । अह्व ! सच्चं अपरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह ? । (ट)

चेटी । भट्टिणि ! सच्चं । किं तु जो सो वेस्साजणकेरको अलंकारओ, सो अवहिदो । (ठ)

वधू । मोहं नाटयति ।

चेटी । समस्ससदु अज्जा धूदा । (ड)

(ञ) तद्यावत् आर्य्याधूतायै गत्वा निवेदयामि ।

(ट) अयि ! सत्यम् अपरिक्षतशरीर आर्य्यपुत्र आर्य्यमैत्रेयेण सह ? ।

(ठ) भर्त्रि ! सत्यम् । किन्तु य स वेश्याजनस्य अलङ्कारक , सोऽपहृत ।

---

(ञ) एव इति । धूता स्वधर्मस्य प्रभयाम् कल्पिता तदाख्या चारुदत्तस्य पत्नी तस्यै । यदि सा किञ्चित प्रतिकर्त्तुं शक्नुयादिति भाव ।

(ट) वधूरिति । ससम्भ्रम चित्तव्यस्तत्रासहितम् । अपरिक्षत धारणादिकाले चौरेण अविदीर्णं शरीर यस्य स । आर्य्या मान्य श्वशुर इति यावत् तस्य पुत्री भर्त्तेत्यर्थ ।

अस्य वाक्यस्य धूतया प्रत्ययनिष्ठुरतया मन्यमानत्वादस्य वच नाम प्रतिमुखसन्धेरङ्गम् । यथा साहित्यदर्पणे—'प्रत्ययनिष्ठुरं वचनम्' इति ।

---

(ঞ) রদনিকা। তা, আর্য্যা ধূতার নিকট যাইয়া ইহা জানাই। ( এই বলিয়া চলিয়া গেল )।

তাহার পর দাসীর সহিত চারুদত্তবধূর প্রবেশ।

(ট) বধূ। ( ব্যস্ততার সহিত ) ওবে! সত্যই কি আর্য্যপুত্র, আর্য্যমৈত্রেয়ের সহিত অক্ষতদেহ আছেন ?।

(ঠ) দাসী। স্বামিনি! সত্য বটে, কিন্তু সেই যে বেশ্যাটীর অলঙ্কার ছিল, তাহা অপহরণ করিয়াছে।

বধূ। ( মূর্চ্ছা অভিনয় করিল )।

वधूः । समाश्वस्य । हञ्जे ! किं भणासि ? "अपरिक्खदसरीरो अज्जउत्तो" त्ति । वरं दाणिं सो सरीरेण परिक्खदो, ण उण चारित्तेण । संपदं उज्जइणीए जणो एव्वं मन्तइस्सदि— "दलिद्दाए अज्जउत्तेण ज्जेव ईदिसं अकज्जं अणुचिट्ठिदं" त्ति । ऊर्द्ध्वमवलोक्य निःश्वस्य च । भअवं कअन्त ! पोक्खर-वत्त-पडिद-जल-बिन्दु-चञ्चलेहिं कीळसि दलिद्दपुरिसभाअधेएहिं । इअं च मे एक्का मादुघरलद्धा रअणावली चिट्ठदि, एदंपि अदिसोण्डीरदाए अज्जउत्तो ण गेण्हिस्सदि । हञ्जे ! अज्जमित्तेअं दाव सद्दावेहि । (ढ)

---

(ड) समाश्वसितु आर्य्या धूता ।

(ढ) हञ्जे ! किं भणसि—'अपरिक्षतशरीर आर्य्यपुत्र' इति । वरमिदानीं स शरीरेण परिक्षत, न पुनश्चारित्रेण । साम्प्रतमुज्जयिन्या जन एवं मन्त्रयिष्यति—'दरिद्रतया आर्य्यपुत्रेणैव ईदृशमकार्य्यमनुष्ठितम् ।' भगवन् ! कृतान्त ! पुष्करपत्रपतितजलबिन्दु-चञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः । इयञ्च मे एका मातृगृहलब्धा रत्नावली तिष्ठति । एतामपि अतिशौण्डीरतया आर्य्यपुत्रो न ग्रहीष्यति । हञ्जे ! आर्य्यमैत्रेयं तावत् शब्दापय ।

---

(ढ) वधूरिति । स आर्य्यपुत्र । परिक्षत इति वरम् ईषत्प्रियम्, पुन किन्तु चारित्रेण परिक्षतो न वरमित्यर्थ, शरीरापेक्षया चारित्रस्य मूल्यवत्त्वादिति भाव । मन्त्रयिष्यति आलोचयिष्यति । ईदृशकार्य्यं निक्षेपापहरणरूप कर्म्म । कृतान्त ! दैव ! पुष्करस्य पद्मस्य पत्रे पतिता ये जलबिन्दवस्तद्वत् चञ्चलै दरिद्रपुरुषाणा भागधेयै सौभाग्यै, क्रीडसि खेलसि । अतिशौण्डीरतया अत्यन्तौदार्य्यस्वभावतया । न ग्रहीष्यतीति, स्त्रीधनग्रहणस्य नितान्तकापुरुषताव्यञ्जकत्वादिति भाव । शब्दापय आह्वय ।

---

(ড) দাসী। আর্য্যা ধূতা আশ্বস্তা হউন।

(ঢ) বধূ। (আশ্বস্ত হইয়া) ওলো! তুই কি বলিতেছিস্, আর্য্যপুত্র অক্ষতদেহ আছেন? তিনি শরীরে পরিক্ষত হইতেন, সেও ভাল

चेटी। जं अज्जा धूदा आणवेदि। विदूषकमुपगम्य। अज्ज-मित्तेअ! धूदा दे सद्दावेदि। (ण)

विदू। कहिं सा?। (त)

चेटी। एसा चिट्ठदि, उवसप्प। (थ)

विदू। उपसृत्य। सोत्थि भोदीए। (द)

बधूः। अज्ज! वन्दामि। अज्ज! पुरत्थिआमुहो (१) होहि। (ध)

(ण) यदार्य्या धूता आज्ञापयति। आर्य्यमैत्रेय! धूता त्वां शब्दापयति।

(त) कस्मिन् सा?।

(थ) एषा तिष्ठति उपसर्प। (द) स्वस्ति भवत्यै।

(द) विदू इति। स्वस्ति माङ्गलम्। भवत्यै च। —इत्यादिना चतुर्थी।

ছিল, কিন্তু চরিত্রে নহে। এখন উজ্জয়িনীর লোক এইরূপ আলোচনা করিবে যে, 'দরিদ্রতাবশতঃ আর্য্যপুত্রই এইরূপ অকার্য্যের অনুষ্ঠান করিয়াছেন।' ( উপরের দিক্ চাহিয়া নিশ্বাস ত্যাগ করিয়া ) হা ভগবন্! বিধে! তুমি, পদ্মপত্র পতিত জলবিন্দুর ন্যায় চঞ্চল দরিদ্রলোকের ভাগ্যের দ্বারা খেলা কর। মাতার বাড়ী হইতে প্রাপ্ত এই এক ছড়া রত্নহারমাত্র আমার আছে, অত্যন্ত উদারস্বভাব বলিয়া আর্য্যপুত্র ইহাও গ্রহণ করিবেন না। চেটে! তুই আর্য্যমৈত্রেয়কে ডাক্ দেখি।

(ণ) দাসী। আর্য্যা ধূতা যাহা আদেশ করেন। ( বিদূষকের নিকটে যাইয়া ) আর্য্যমৈত্রেয়! ধূতা তোমাকে ডাকিতেছেন।

(ত) বিদূষক। কোথায় তিনি?।

(থ) দাসী। এই রহিয়াছেন, আইস।

(দ) বিদূষক। ( নিকটে যাইয়া ) আপনার মঙ্গল হউক।

(১) পৌরস্ত্যাভিমুখী।

विदू। एसो भोदि ! पुरत्थिआमुहो संवुत्तोह्मि। (न)

वधूः। अज्ज ! पडिच्छ इमं। (प)

विदू। किं णेदं ?। (फ)

वधूः। अहं क्खु रअणछट्ठिं उववसिदा आसि। तहिं जधा विहवाणुसारेण बम्हणो पडिग्गाहिदव्वो, सो 'अ ण पडिग्गाहिदो ; ता तस्स किदे पडिच्छ इमं रअणमालिअं'। (ब)

---

(ध) आर्य्य ! वन्दे । आर्य्य ! पुरस्तान्मुखो भव ।

(न) एष भवति ! पुरस्तान्मुख संवृत्तोऽस्मि ।

(प) आर्य्य ! प्रतीच्छ इमाम् ।

(फ) किं न्वेतत् ? ।

(ब) अहं खलु रत्नषष्ठीमुपोषिता आसम् । तस्मिन् यथाविभवानुसारेण ब्राह्मण प्रतिपादयितव्य, स च न प्रतिपादित, तत् तस्य कृते प्रतीच्छ इमां रत्नमालिकाम् ।

---

(ध) वधूरिति । पुरस्तात् मम सम्मुखे मुखं यस्य स । अन्यथा मुद्रा ग्रहणं न सम्भवतीति भाव ।

(प) वधूरिति । प्रतीच्छ गृहाण ।

(ब) वधूरिति । रत्नषष्ठीमुपोषिता षष्ठीतिथौ तदानीं तद् व्रतपालनविशेषकरणार्थं कृतोपवासेत्यर्थः । यथाविभवानुसारेण धनसम्पदनुसारेण, ब्राह्मण, प्रतिपादयितव्यो ब्राह्मणाय यत् किञ्चिद्दातव्यमिति तात्पर्य्यम् । स ब्राह्मण । तस्य प्रतिपादनस्य कृते निमित्ते । प्रतीच्छ गृहाण ।

---

(ध) বধূ। আর্য্য! আপনাকে নমস্কার করি। আর্য্য! আপনি আমার অভিমুখ হউন।

(ন) বিদূষক। দেবি! এই আপনার অভিমুখ হইয়াছি।

(প) বধূ। আর্য্য! ইহা গ্রহণ করুন।

(ফ) বিদূষক। এ কি ?।

विदू। गृहीत्वा। सोत्थि। गमिस्सं, पिअवअस्सस्स णिवेदेमि। (भ)

वधूः। अज्जमित्तेअ! मा क्खु मं लज्जावेहि। इति निष्क्रान्ता। (म)

विदू। सविस्मयम्। अह्वो! से महाणुभावदा। (य)

चारु। अये! चिरयति मैत्रेयः। मा नाम वैक्लव्यादकार्य्यं कुर्य्यात्। मैत्रेय! मैत्रेय! (र)

---

(भ) स्वस्ति। गमिष्यामि। प्रियवयस्यस्य निवेदयामि।

(म) आर्य्यमैत्रेय! मा खलु मां लज्जय।

(य) अहो! अस्या महानुभावता।

---

(म) वधूरिति। मा लज्जय पुनरर्पणेन लज्जितां न कुरु। तथा च स्वयं गृहीत्वा आर्य्यपुत्राय देहि, स च यथा न प्रत्याख्यानं करोति, तथैव त्वमादरं कुर्य्या इति भावः।

(य) विदू इति। महानुभावता सातिशयप्रभावशालित्वम् औदार्य्यमित्यर्थः। ईदृशस्यापि पत्युर्निर्धनत्वेऽपि आत्मन एव महामूल्यरत्नमालाप्रदानादिति भावः।

(र) चारु इति। चिरयति चिरं करोति विलम्बते इत्यर्थः। वैक्लव्यात् निर्वेदनविह्वलत्वात् स्वयमेव रक्षितन्यस्य न्यासस्य ममैव चौरहस्ते एव समर्पणेन आत्मधिक्कारोदयादित्यर्थः; अकार्यम् आत्महत्यादिरूपम्।

---

(ব) বধূ। আমি রত্নষষ্ঠীর উপবাস করিয়াছিলাম; তাহাতে সম্পত্তি অনুসারে ব্রাহ্মণকে প্রতিগ্রহ করাইতে হয়, কিন্তু সে প্রতিগ্রহ করাই নয়। তাই তাহার জন্য এই রত্নহার গ্রহণ করুন।

(ভ) বিদূষক। (গ্রহণ করিয়া) স্বস্তি, যাই, বয়স্যকে জানাই।

(ম) বধূ। আর্য্যমৈত্রেয়! আমাকে লজ্জিত করিবেন না। (এই বলিয়া চলিয়া গেল)।

(য) বিদূষক। (বিস্ময়ের সহিত) ইঁহার আশ্চর্য্য উদারতা!।

विदू। उपसृत्य। एसोम्हि। गेण्ह एदं। रत्नावलीं दर्शयति। (ल)

चारु। किमेतत्?।

विदू। भो! जं दे सरिस-दार-सङ्गहस्स फलं। (व)

चारु। कथं ब्राह्मणी मामनुकम्पते!। कष्टम्! इदानीमस्मि दरिद्रः।

आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः।
अर्थतः पुरुषो नारी, या नारी सार्थतः पुमान् ॥२७॥

(ल) एषोऽस्मि। गृहाण एताम्।

(व) भोः! यत् ते सदृशदारसङ्ग्रहस्य फलम्।

---

(व) विदू इति। सदृशदारसङ्ग्रहस्य स्वयोग्यभार्य्यापरिग्रहस्य। अनुरागवत्या तव भार्य्यया दत्तमेतदिति भावः।

आत्मेति। आत्मनो भाग्येन अदृष्टेन क्षतं नष्टं द्रव्यं धनं यस्य सः, स्त्रिया द्रव्येण धनेन अनुकम्पितो दयाविषयीकृतः। तत्र किं सम्पन्नमित्याह अर्थत इति। पुरुषः अर्थतः कार्य्यतः नारी जात इति शेषः, तथा या नारी सा अर्थतः कार्य्यतः पुमान् पुरुषो जातेति शेषः। तथा च अहं पुरुषः सन्नपि भार्य्याया एव दयापात्रीभूय

---

(য) চারুদত্ত। ওহে! মৈত্রেয় বড়ই বিলম্ব করিতেছে, বিহ্বলতানিবন্ধন অকার্য্য না করে। মৈত্রেয়! মৈত্রেয়!।

(ল) বিদূষক। (নিকটে যাইয়া) এই যে আছি। ইহা গ্রহণ কর। (রত্নহার দেখাইল)।

চারুদত্ত। এ কি?।

(ব) বিদূষক। সখে! তোমার যোগ্য দারপরিগ্রহের এ ফল।

চারুদত্ত। হায়! ব্রাহ্মণী আমার প্রতি দয়া করিতেছেন। কি কষ্ট! এখন আমি প্রকৃত দরিদ্র হইলাম।

अथवा, नाहं दरिद्रः । यस्य मम—

विभवानुगता भार्य्या सुखदुःखसुहृद्भवान् ।
सत्यञ्च न परिभ्रष्टं यद्दरिद्रेषु दुर्लभम् ॥२८॥

---

तत्तत्समाश्रयत्वात् नारीस्वरूपोऽस्मि, तथा मम भार्य्या च नारी सत्यपि मां प्रति दयाकारिणी भूत्वा मह्यं साहाय्यदानात् पुरुषस्वरूपा जातेति भावः ।

अत्र कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः, पुरुषे नारीत्वारोपस्य भार्य्यायां पुरुषत्वारोपस्य च प्रकृतदारिद्र्यप्रतिपादनोपयोगितया परिणामस्य, चनयोरङ्गाङ्गिभावेन सङ्करः । तथा पुरुषः इत्यभिधाय पुमानित्यभिधानात् प्रकृतिविपर्य्ययो भग्नप्रक्रमतादोषः, स च 'नारी च पुरुषोऽयं सः' इति पाठेन समाधेयः । न चैतत्पाठेऽपि पुनः कथितपदतादोष इति वाच्यम् 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादिवदुद्देश्यप्रतिनिर्देश्यविषयत्वात् कथितपदतायाः दर्पणकृदादिभिरदोषविषयतया व्यवस्थापितत्वात् । अतएव हि नारीशब्दस्य हि पाठेऽपि न कथितपदतादोष इति ध्येयम् ॥२७॥

विभवेति । भार्य्या विभवानुगता सम्पत्त्यनुसारिणी यादृशी विभवस्तादृश्येण वर्त्तत इत्यर्थः, भवान् सुखदुःखयोरुभयोरेव सुहृत्, तथा दरिद्रेषु यत् सत्यं दुर्लभम् तत् सत्यञ्च न परिभ्रष्टं भार्य्याया साहाय्यात्र विच्युतम् । ईदृश भार्य्यारत्न सुहृद्रत्न सत्यञ्च यस्यास्ति, स कथं दरिद्रो भवितुमर्हतीति भावः ।

अत्र व्यापकोऽदरिद्रताप्रतिपादनकार्य्यं प्रति प्रकृतत्रकारणोपन्यासात् समुच्चयोऽलङ्कारः ॥२८॥

---

নিজের অদৃষ্টবশতঃ ধন নষ্ট হইয়াছে, এখন স্ত্রীর ধনে দয়ার পাত্র হইতেছি। সুতরাং ভাগ্যবশতঃ পুরুষ—স্ত্রী, এবং সে—স্ত্রী, সে পুরুষ হইয়াছে ॥২৭॥

অথবা, আমি দরিদ্র নহি। যে আমার—

স্ত্রী, অবস্থার অনুগামিনী, তুমি, সুখে এবং দুঃখেও বন্ধু। বিশেষতঃ দরিদ্রে যাহা দুর্লভ, সেই সত্যও নষ্ট হয় নাই ॥২৮॥

मैत्रेय! गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशम्, वक्तव्या च मद्वचनात्—यत् खल्वस्माभिः सुवर्णभाण्डमात्मीयमिति कृत्वा विश्रम्भात् द्यूते हारितम्, तस्य कृते गृह्यतामियं रत्नावली इति। (ग)

विदू। मा दाव अक्खादिदस्स अभुत्तस्स अप्पमुल्लस्स चोरेहिं अवहिदस्स कारणादो, चदुस्समुद्दसारभूदा रअणावली दीअदि। (घ)

---

(घ) मा तावत् अखादितस्य अभुक्तस्य अल्पमूल्यस्य चौरैरपहृतस्य कारणात् चतुःसमुद्रसारभूता रत्नावली दीयते।

---

(ग) मैत्रेयेति। विश्रम्भात् अमविश्वासात् आत्मीयमिति ज्ञात्वा इत्यन्वयः।

(घ) विदू इति। अखादितस्य अभक्षितस्य, विक्रयादिना खादने तु तत्तुल्य प्रतिदानमुचितमेवेति भावः। अभुक्तस्य अङ्गे धारणादिना असम्भुक्तस्य। सम्भोगेन परिचयेऽपि तत्तुल्यप्रतिदानं सङ्गतमेवेति भावः। अल्पमूल्यस्येति। एतत्समानमूल्यत्वे तु एतद्दानं कथञ्चित् सङ्गच्छेत इत्याशयः। चतुर्णां समुद्राणां तदुत्थितरत्नानामित्यर्थः, सारभूता श्रेष्ठभूता। मा तावत् दीयते कोऽपीति शेषः। सुतरां त्वयापि न दीयतामिति भावः।

---

(গ) মৈত্রেয়। তুমি এই রত্নহার লইয়া বসন্তসেনার নিকট যাও, আমার কথানুসারে তাঁহাকে বলিবে যে, "আমি বিশ্বাসবশতঃ নিজের মনে করিয়া সেই স্বর্ণালঙ্কার পাশা খেলায় হারিয়াছি, তাহার জন্য এই রত্নহার গ্রহণ করুন।"

(ঘ) বিদূষক। যাহা বিক্রয় করিয়া খাওয়া হয় নাই, যাহা অঙ্গে ধারণ করিয়া সম্ভোগ করা হয় নাই, যাহার মূল্য অল্প এবং যাহা চোরে

चारु। वयस्य! मा मैवम्।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः।
तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥२८॥

तद्वयस्य! अस्मच्छरीरस्पृष्टिकया शापितोऽसि, नैनामग्राहयित्वा अत्रागन्तव्यम्। वर्द्धमानक! (स)

एताभिरिष्टिकाभिः सन्धिः क्रियतां सुसंहतः शीघ्रम्।
परिवाद-बहल-दोषान्न यस्य रक्षां परिहरामि? ॥३०॥

यमिति। तया वसन्तसेनया, यं विश्वासं समालम्ब्य आश्रित्य, अस्मासु न्यासो निक्षेपः कृतः, तस्य महतः प्रत्ययस्यैव विश्वासस्यैव, एतत् रत्नमालारूपं मूल्यं दीयते, न तु तस्य सुवर्णभाण्डस्य मूल्यमिति भावः।

अत्र विश्वासस्य मूल्यदानासम्भवेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। तथा विश्वासमित्यभिधाय प्रत्ययस्येत्यभिधानात् पूर्ववत् भग्नप्रक्रमतादोषः, स च 'विश्वासस्यैव दीयते' इति पाठेन समाधेयः ॥२८॥

(स) तदिति। अस्मच्छरीरस्य स्पृष्टिकया स्पर्शेन, शापितोऽसि शपथं कारितोऽसि। स्वयमेव विदूषकं स्पृशत एतत्क्रियेयमिति बोध्यम्। ब्राह्मणशरीरस्पर्शेन सञ्जातं शपथी हठीभवतीत्यभिप्रायः। एनां रत्नमालिकाम्।

অপহরণ করিয়াছে, সেই স্বর্ণালঙ্কারের জন্য, চারি সমুদ্রের সারভূত রত্নহার কেহই দান করে না।

চারুদত্ত। সখে! না না, এরূপ বলিও না।

বসন্তসেনা যে বিশ্বাস অবলম্বন করিয়া, আমার হাতে গচ্ছিত রাখিয়াছিলেন, সেই গুরুতর বিশ্বাসেরই এই মূল্য দিতেছি ॥২৮॥

(স) অতএব সখে! আমার শরীর স্পর্শদ্বারা তোমাকে শপথ করাইতেছি যে, এই রত্নমালা গ্রহণ না করাইয়া তুমি এখানে আসিবে না। বর্দ্ধমান!।

वयस्य ! मैत्रेय ! भवताप्यकृपण-शौण्डीर्यमभिधातव्यम्। (ङ)

विदू। भो ! दलिद्दो किं अकिवणं (१) मन्तेदि ?। (च)

चारु। अदरिद्रोऽस्मि सखे ! 'यस्य मम—विभवानुगता भार्या' इत्यादि

(च) भो ! दरिद्रः किम् अकृपणं मन्त्रयति ?।

---

एताभिरिति। एताभिः इष्टिकाभिः, शीघ्रं सन्धिं सन्धिरन्ध्रम्, सुसंहतं सम्यक् बद्धं, क्रियताम्। कुत इत्याह—परिवादे 'चारुदत्त स्वयमेव वसन्तसेनाया न्यासमपहृत्य चौर्योपरि तद्दोषारोपणार्थं स्वगृहभित्तावेव सन्धिं कृतः' इत्य लोकनिन्दायां बहुलः प्रचुरो यो दोषो लघुत्वप्रतारकत्वप्रकाशादिरूपस्तं नेच्छामि, यस्य सर्वं, रचा स्वरूपेण यावस्थितिम्, न परिहरामीति काकु मे परित्यजामि किमित्यर्थः, अपि तु परित्यजाम्येवेति तात्पर्य्यम्। तथा च सति लोकः पूर्व्ववदेव भित्तिदर्शनात् न स परिवादं कुर्य्यादिति भावः।

अत्र पूर्व्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुतया काव्यलिङ्गमलङ्कारः।

आर्य्या जातिः ॥३०॥

(ङ) वयस्येति। अकृपणवत् अदीनवत् शौण्डीर्यमौदार्य्यं यथा स्यात्तथा अभिधातव्यं वसन्तसेनासमीपे सर्व्वं वाक्यं वक्तव्यम्। यथा सा नाधिकमुपरि सन्दिहाना भवेदिति भावः।

(च) विदू इति। अकृपणमदीनम् अपि तु धनितुल्यमित्यर्थः, मन्त्रयति ब्रवीति वक्तुमर्हतीत्यर्थः, कथमपि नेति तात्पर्य्यम् कदापि स्वभावप्रकाशसम्भवादिति भावः।

---

এই ইটগুলি দিয়া তুই সত্বর সিঁধটাকে ভরাট কর্। কারণ, নিন্দাতে বহুতর দোষ আছে বলিয়া যাহা আমি রাখিতে চাহি না ॥৩০॥

(ঙ) সখে ! মৈত্রেয় ! তুমিও অকৃপণের ন্যায় উদারভাবে বলিবে।

(চ) বিদূষক। সখে ! দরিদ্র ব্যক্তি কি অকৃপণভাবে বলিতে পারে ?।

---

(१) अकिविणं।

मद। सुसदिसी। (घ)

वसन्त। कधं तुमं जाणासि ?। (ङ)

मद। जेण अज्जआए सुसिणिद्धा दिट्ठी अणुलग्गा। (च)

वसन्त। हञ्जे! किं वेस-वास-दाक्खिण्णे ण मदणिए! एव्वं भणासि ?। (छ)

मद। अज्जए! किं जो ज्जेव जणो वेसे पड़िवसदि, सो ज्जेव अलीअदक्खिणो भोदि ?। (ज)

(ग) हञ्जे मदनिके। अपि सुसदृशी इयं चित्राकृतिः आर्य्यचारुदत्तस्य ?।

(घ) सुसदृशी। (ङ) कथं त्वं जानासि ?।

(च) येन आर्य्याया: सुस्निग्धा दृष्टिरनुलग्ना।

(छ) हञ्जे। किं वेशवासदाक्षिण्येन मदनिके। एवं भणसि ?।

(ज) आर्य्ये! किं य एव जनो वेशे प्रतिवसति, स एव अलीकदक्षिणो भवति ?।

(ग) वसन्त इति। हञ्जे इति चेटीं प्रति सम्बोधनसूचकमव्ययम्। "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः। चित्ररूपा आकृतिश्चित्राकृतिः। सुसदृशी प्रकृताकृतिसंवादिनी। तथा च अति मदाकृतियोग्या च किमिति भावः।

(छ) वसन्त इति। वेशे वेश्यालये वासेन अवस्थानेन यद्दाक्षिण्यं वाक्पटुत्वं तेन।

[গ] বসন্তসেনা। মদনিকা! এই চিত্রের আকৃতি, আর্য্যচারুদত্তের ঠিক্ সমান কি না ?।

[ঘ] মদনিকা। ঠিক্ সমান।

[ঙ] বসন্তসেনা। তুমি কি করিয়া জানিলে ?।

[চ] মদনিকা। যেহেতু, আপনার স্নিগ্ধ দৃষ্টি, একেবারে লাগিয়া রহিয়াছে।

[ছ] বসন্তসেনা। ওলো মদনিকা! তুমি বেশ্যালয়ে বাস করার ঔদার্য্যবশতই কি এইরূপ বলিতেছ ?।

वसन्त। हञ्जे! णाणा-पुरिससङ्गेण वेस्साजणो अलीअदक्खिणो भोदि। (झ)

मद। जदो दाव अज्जआए दिट्ठी इध अभिरमदि हिअअं च; तस्स कारणं किं पुच्छीअदि?। (ञ)

वसन्त। हञ्जे! सहीजणादो उवहसणीअदां रक्खामि। (ट)

[झ] हञ्जे। नानापुरुषसङ्गेन वेश्याजनः अलीकदक्षिणो भवति।

[ञ] यतस्तावत् आर्य्याया दृष्टिरिह अभिरमते हृदयञ्च, तस्य कारणं किं पृच्छ्यते?।

(ट) हञ्जे। सखीजनादुपहसनीयतां रक्षामि।

---

(झ) मद इति। अलीकदक्षिणो मिथ्यावाक्पटुः।

(ञ) मद इति। यतो यत्। आर्य्यायास्तव। इह चित्राङ्कते। अभिरमते आसज्यते। हृदयञ्च अभिरमते इत्यन्वयः। तत्र दृष्टिहृदययोरभिरमणस्य। पृच्छ्यते "अपि सुखहर्मी" इत्यनेन कथं जिज्ञास्यते? परमसुन्दरत्वादियमाकृतिः सर्व्वथैव तव सुखहर्मीति नास्त्येव कश्चित् प्रश्नावसरस्तेन च सत्वरमेवाभिसरेति भावः।

(ट) वसन्त इति। रक्षामि अभिसरणविलम्बेन निवारयामि। तथा च अनुरक्तिमात्रमेवाभिसरणे ममाधिकृततामाश्रित्य सखीजन उपहसिष्यति, विलम्बेनाभिसरणे तु नास्ति तस्य सम्भव इति भावः।

---

[ঝ] মদনিকা। আর্য্যে! যে লোকই বেশ্যালয়ে বাস করে, সে-ই কি মিথ্যা উদারস্বভাব হয়?।

[ঝ] বসন্তসেনা। ওলো! নানাবিধ পুরুষের সংসর্গে বেশ্যারা মিথ্যা উদারস্বভাব হইয়া থাকে।

[ঞ] মদনিকা। যে হেতু আপনার দৃষ্টি, এই চিত্রে আসক্ত হইয়াছে এবং চিত্তও আশক্ত হইয়াছে, তাহার কারণ জিজ্ঞাসা করিতেছেন কি?।

पुन पठति। तदगच्छतु भवान्। अहमपि कृतशौचः सन्ध्यामुपासे। (क)

इति निष्क्रान्ता सर्वे।

## इति सन्धिच्छेदो नाम तृतीयोऽङ्कः। (१)

(क) चाह इति। कृत शौच मूत्रपुरीषत्यागोत्तरजलमृत्प्रक्षालनादि कार्य्य येन स तथोक्त सन्, सन्ध्या प्रात सन्ध्याम्, उपासे आराधयामि।

इति महामहोपाध्याय श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचिताया मृच्छकटिक टीकाया बसन्तसुषमासमाख्याया तृतीयाङ्कविवरण समाप्तम्॥०॥

(क) চারুদত্ত। সখে! আমি দরিদ্র নহি। ('যে আমার স্ত্রী, অবস্থার অনুগামিনী' ইত্যাদি পুনবায় পাঠ করিলেন) অতএব তুমি যাও। আমিও, শৌচ করিয়া প্রাতঃসন্ধ্যা করি।

(ইহার পর সকলে চলিয়া গেল।)

সন্ধিচ্ছেদ নামে তৃতীয় অঙ্ক সমাপ্ত॥০॥

(১) সন্ধিচ্ছেদো নাম তৃতীয়োঽঙ্ক সমাপ্ত।

# चतुर्थोऽङ्कः।

—.०.—

तत प्रविशति चेटी।

चेटी। आणत्तम्हि अत्ताए अज्जआए सआसं गन्तुं। एसा अज्जआ चित्तफलअ-णिसस्स दिट्ठी मदणिआए सह किं पि मन्तअन्ती चिट्ठदि। ता जाव उवसप्पामि। इति परिक्रामति। (क)

तत प्रविशति यथानिर्द्दिष्टा वसन्तसेना मदनिका च। (ख)

वसन्त। हञ्जे मदणिए! अवि सुसदिसी इअं चित्ताकिदी अज्जचारुदत्तस्स?। (ग)

---

(क) आज्ञाप्तास्मि मात्रा आर्य्याया: सकाशं गन्तुम्। एषा आर्य्या चित्रफलकनिषण्णदृष्टिर्मदनिकया सह मन्त्रयन्ती तिष्ठति। तद्यावदुपसर्पामि।

---

(क) चेटीति। मात्रा वसन्तसेनाया जनन्या आर्य्याया वसन्तसेनाया:। चित्रफलके निषण्णा स्थिता दृष्टिर्यस्या: सा। मन्त्रयन्ती आलपन्ती।

(ख) तत इति। यथानिर्द्दिष्टा चित्रफलकनिषण्णदृष्टि:।

---

তদনন্তর দাসীর প্রবেশ।

(ক) দাসী। বসন্তসেনার মাতা, বসন্তসেনার নিকট যাইবার জন্য আমাকে আদেশ করিয়াছেন। আর্য্যা বসন্তসেনা চিত্রফলকে দৃষ্টি স্থাপিত করিয়া, মদনিকার সঙ্গে কোন বিষয় আলোচনা করতঃ অবস্থান করিতেছেন। তা, উঁহার নিকট উপস্থিত হই। (এই বলিয়া পাদক্ষেপ করিতে লাগিল)।

[খ] তাহার পর যথানির্দ্দিষ্টরূপে বসন্তসেনা ও মদনিকার প্রবেশ।

मद। अज्जए! एव्वं णेदं। सहीजणचित्ताणुवत्ती अवलाजणो भोदि। (ठ)

प्रथमा चेटी। उपसृत्य। अज्जए! अत्ता आणवेदि—गहिदाव-गुण्ठणं पक्खदुआरए सज्जं पवहणं। ता गच्छ त्ति। (ड)

वसन्त। हञ्जे! किं अज्जचारुदत्तो मं णइस्सदि?। [ढ]

चेटी। अज्जए! जेण पवहणेण सह सुवण्ण-दस-साहस्सिओ अलङ्कारओ अणुप्पेसिदो। [ण]

(ठ) आर्य्ये। एवं नेदम्। सखीजनचित्तानुवर्त्ती अबलाजनो भवति।

(ड) आर्य्ये। माता आज्ञापयति—गृहीतावगुण्ठनं पक्षद्वारे सज्जं प्रवहणं तद्गच्छ इति।

(ढ) हञ्जे। किम् आर्य्य चारुदत्तो मां नेष्यति?।

---

(ठ) मद इति। एवं नेदम्, इदानीमेवाभिसरणेऽपि न त्वां सखीजन उपहसिष्यतीत्यर्थः। तत्र हेतुमाह सखीजनेति। तथा च यत् सखीजना अपि अबलाजना एव त्वमपि च तेषां सखीजन एवेत्यवश्यमेव तैस्तव चित्तमनुवर्त्तितव्यमिति भावः।

(ड) प्रथमेति। गृहीतम् अवगुण्ठनं बहिरावरणं येन तत्, पक्षद्वारे पार्श्वद्वारे, सज्जं प्रस्तुतम्, प्रवहणं गोशकटम्।

---

(ট) বসন্তসেনা। ওলো! সখীজন হইতে উপহাস নিবারণ করিতেছি।

(ঠ) মদনিকা। আর্য্যে! ইহা এরূপ নহে। স্ত্রীলোক সখীজনের চিত্তানুবর্ত্তী হইয়া থাকে।

(ড) প্রথম দাসী। (নিকটে যাইয়া) মাতা আদেশ করিতেছেন যে—"পার্শ্বের দ্বারে বহিরাবৃত প্রবহণ (গাড়ী) সজ্জিত হইয়াছে। সুতরাং তুমি যাও।"

(ঢ) বসন্তসেনা। ওলো! আর্য্য চারুদত্ত কি আমাকে নিবেন?।

वसन्त । को उण सो ? । [त]

चेटी । एसो ज्जेव राअस्सालो संठाणओ । [थ]

वसन्त । सक्रोधम् । अवेहि । मा पुणो एव्वं भणिस्ससि । [द]

चेटी । पसीददु पसीददु अज्जआ । सन्देसेण म्हि पेसिदा । [ध]

वसन्त । अहं सन्देसस्स ज्जेव कुप्पामि । [न]

---

(ण) आर्ये । येन प्रवहणेन सह सुवर्ण-दशसाहस्रिकोऽलङ्कारः अनुप्रेषितः ।

(त) कः पुनः सः ? ।

(थ) एष एव राजश्यालः संस्थानकः ।

(द) अपेहि । मा पुनरेवं भणिष्यसि ।

(ध) प्रसीदतु प्रसीदतु आर्या । सन्देशेनास्मि प्रेषिता ।

(न) अहं सन्देशस्यैव कुप्यामि ।

---

(ण) चेटीति । सुवर्णानां दशभिः सहस्रैः क्रीत इति सुवर्णदशसाहस्रिकः ।

(थ) चेटीति । संस्थीयते दोषैरनेनेति संस्थानकः । कुत्सायां कप्रत्ययः ।

(ध) चेटीति । सन्देशेन तव मातुर्वाचिकेन । सुतरां नास्त्येव ममापराध इति भावः ।

---

(ণ) দাসী। আর্য্যে! যিনি প্রবহণের সহিত, দশসহস্র স্বর্ণমুদ্রা-দ্বারা ক্রীত অলঙ্কার পাঠাইয়াছেন।

(ত) বসন্তসেনা। সে আবার কে ?।

(থ) দাসী। ইনিই রাজার শালা সংস্থানক।

(দ) বসন্তসেনা। (ক্রোধের সহিত) দূর হ। পুনরায় এরূপ বলিস্ না।

(ধ) দাসী। আপনি প্রসন্ন হউন প্রসন্ন হউন। (আপনার মাতা এই) খবরের সঙ্গে আমাকে পাঠাইয়াছেন।

चेटी। ता किंत्ति अत्तं विण्णविस्सं। [प]

वसन्त। एव्वं विण्णाविदव्वा—"जइ मं जीअन्तीं इच्छसि ता एव्वं ण पुणो अहं अत्ताए आणाविदव्वा।" [फ]

चेटी। जधा दे रोअदि। इति निष्क्रान्ता। [ब]

प्रविश्य शर्विलकः—

दत्त्वा निशाया वचनीयदोषं
निद्रां च जित्वा नृपतेश्च रथ्यान्।
स एष सूर्योदयमन्दरश्मिः
क्षपाक्षयाच्चन्द्र इवास्मि जातः॥१॥

(प) तत् किमिति मातरं विज्ञापयिष्यामि ?।

(फ) एवं विज्ञापयितव्या—यदि मां जीवन्तीमिच्छसि, तदा एवं न पुनरहं मात्रा आज्ञापयितव्या।

(ब) यथा ते रोचते।

---

(फ) वसन्त इति। सर्वत्र एवम् तस्य वाचिकस्य लुप्यतीति ध्येयं।

(ब) वसन्त इति। पुनरप्येवं विज्ञापने आत्महत्यां करिष्यामीति भावः।

दत्त्वेति। निशायाः सम्बन्धि, वचनीयदोषं "रात्रिमुखं हि यामिनी" इत्य

---

(ন) বসন্তসেনা। আমি যে এখন পরদেশের উপরই ক্রুদ্ধ হইয়া থাকি।

अपि च । यः कश्चित्त्वरितगतिर्निरीक्षते मां
सम्भ्रान्तं द्रुतमुपसर्पति स्थितं वा ।
तं सर्वं तुलयति दूषितोऽन्तरात्मा
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥८॥

---

पाददोषम्, दत्त्वा स्वयमेव चौर्य्यं विधाय रात्रेरुपरि तन्निमित्तमपवादमारोप्येत्यर्थः, तथा निद्राञ्च स्वपने रक्षाया साधव इति मत्वा । रक्षिपुरुषास्ताय, जित्वा एकत्र वर्जयित्वा अन्यत्र गुप्तप्रचारेण वञ्चयित्वा, स एष अस्मि अहम्, अपाश्रयात् निशावसानात्, सूर्य्योदयात् मन्दा अल्पीभूता रश्मय किरणा यस्य स तादृश, चन्द्र इव जात हीनप्रभाव सम्पन्न ।

मालोपमालङ्कार । इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥१॥

य इति । त्वरिता शीघ्रा गतिर्यस्य स तादृशो य कश्चिज्जन, सम्भ्रान्त चौर्य्य कारणात् भयव्यस्तचित्त मा निरीक्षते, वा अथवा, सम्भ्रान्तमेव स्थित कुत्रचिद्विद्यमान माम्, द्रुतमुपसर्पति । दूषित स्वस्य चौर्य्यकारणात् प्राप्तापराध, अन्तरात्मा ममान्त -करणम् त सर्वं जनम् तुलयति आत्मनो धारकत्वेन आशङ्कते । हि तथाहि, मनुष्य स्वै स्वकीयैर्दोषै, शङ्कितो भवति, शङ्काकारणाभावेऽपीति भाव ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार ।

प्रहर्षिणी वृत्तम्—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥१॥

---

( প্রবেশ করিয়া ) শর্বিলক। রাত্রির উপরে অপবাদ দিয়া, নিদ্রাকে জয় করিয়া এবং রক্ষী রাজপুরুষদিগকে বঞ্চনা করিয়া, রাত্রি শেষ হওয়ায় সূর্য্যোদয়কালে অল্পকিরণ চন্দ্রের ন্যায়, সেই আমি এই হীনপ্রভ হইয়াছি ॥১॥

আরও, দ্রুতগামী যে কোন লোক, ব্যস্তচিত্ত আমাকে দেখে, অথবা ব্যস্তচিত্তে আমি দাঁড়াইয়া আছি এমন অবস্থায় যে কোন লোক আমার নিকট দ্রুত আগমন করে, আমার অপরাধী অন্তঃকরণ, সেই সকল

वसन्त । हञ्जे ! इमं दाव चित्तफलअं मम सअणीए-ठाविअ तालवेण्टअं गेण्हिअ लहु आअच्छ । (म)

मद । जं अज्जआ आणवेदि । इति फलकं गृहीत्वा निष्क्रान्ता । (य)

शर्वि । इदं वसन्तसेनाया गृहम् । तद्यावत् प्रविशामि । प्रविश्य । क्व नु मया मदनिका द्रष्टव्या ? ।

ततः प्रविशति तालवृन्तहस्ता मदनिका ।

(म) हञ्जे ! इदं तावत् चित्रफलकं मम शयनीये स्थापयित्वा, तालवृन्तकं गृहीत्वा लघु आगच्छ ।

(य) यदार्य्या आज्ञापयति ।

(म) वसन्त इति । शयनीये शय्यायाम् । तालवृन्तकं व्यजनम् । लघु द्रुतम् । एतेन तदानीं ग्रीष्माधिक्यं सूचितम् ।

পবিজনেব সঙ্গে কথোপকথনে আসক্ত কোন লোককে উপেক্ষা কবিয়া গিয়াছি, কোন স্থানে, স্ত্রীলোকই বাডীব রক্ষক ইহা দেখিয়া, সে বাডী পবিত্যাগ কবিয়াছি এবং বক্ষী বাজপুরুষগণ পার্শ্বে আসিয়া উপস্থিত হইলে, গৃহেব স্তম্ভের ন্যায় অবস্থান কবিয়াছি, এইরূপ বহুতব ঘটনায় গত বাত্রিকে দিন কবিয়া ফেলিয়াছিলাম ॥৩॥

( এই বলিয়া পদক্ষেপ কবিতে লাগিল )।

(ম) বসন্তসেনা। মদনিকা। এই চিত্র ফলকখানা আমাব শয্যাব উপবে বাখিয়া, পাখাখানা লইয়া, শীঘ্র আইস।

(য) মদনিকা। আপনি যাহা আদেশ কবেন। ( এই বলিয়া চিত্র-ফলক লইয়া চলিয়া গেল। )

শর্বিলক। এই বসন্তসেনাব বাডী। তা, প্রবেশ করি। ( প্রবেশ করিয়া ) আমি মদনিকাকে কোথায় দেখিতে পাইব ?।

তদনন্তব তালবৃন্তহস্তে মদনিকার প্রবেশ।

शर्वि। (दृष्ट्वा) अये! इयं मदनिका—

मदनमपि गुणैर्विशेषयन्ती
रतिरिव मूर्त्तिमती विभाति येयम्।
मम हृदयमनङ्गवह्नितप्तं
भृशमिव चन्दनशीतलं करोति ॥४॥

मदनिके!।

मद। (दृष्ट्वा) अम्मो! कधं सव्विलओ!। सव्विलअ! साअदं ते? कहिं तुमं?। (२)

(२) अहो कथं शर्विलक। शर्विलक! स्वागतं ते? कस्मिन् त्वम्?।

मदनमिति। गुणैः रूपविलासादिभिः, मदनमपि कामदेवमपि, विशेषयन्ती विशेषेण मोहयन्ती, इयं मदनिका, मूर्त्तिमती रतिरिव विभाति। या इयम्, भृश-मत्यन्तम्, अनङ्गवह्नितप्तं कामानलोत्तप्तीकृतम्, मम हृदयम्, चन्दनेन चन्दनलेपेन शीतलमिव करोति।

अत्र प्रथमा वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षा, द्वितीया च सर्वैव गुणोत्प्रेक्षा; अनयोः परस्परनिरपेक्षतया संसृष्टिः। पुष्पिताग्रा वृत्तम् ॥४॥

(२) मद इति। अहो इत्याश्चर्ये। आकस्मिकप्रियतमदर्शनाच्च आश्चर्यम्। कथं-शब्दो हर्षे। स्वागतं सुखेनागमनं किमिति काकुः। कस्मिन् स्थाने त्वं चलितोऽसीति शेषः।

শর্বিলক। (দেখিয়া) ওহে এই মদনিকা—

সৌন্দর্যগুণে কামদেবকেও বিশেষভাবে মুগ্ধ করতঃ, মূর্ত্তিমতী রতির ন্যায় শোভা পাইতেছে। যে এই মদনিকা, অত্যন্ত কামানলে সন্তপ্ত আমার হৃদয়েতে, যেন চন্দনদ্বারা শীতল করিতেছে ॥৪॥

মদনিকা!।

शर्वि । कथयिष्यामि । इति सानुरागमन्योन्यं पश्यतः ।

वसन्त । चिरअदि मदणिआ । ता कहिं णु क्खु सा ? । (गवाक्षकेण दृष्ट्वा ।) कधं एसा केणावि पुरिसकेण सह मन्तअन्ती चिट्ठदि । जधा अदिसिणिद्धाए णिच्चलदिट्ठिए आपिवन्ती विअ एदं णिज्झाअदि, तधा तक्केमि, एसो सो जणो एदं इच्छदि अभुजिस्सं कादुं । ता रमदु रमदु । मा कस्सावि पीदिच्छेदो भोदु । ण क्खु सद्दाविस्सं । (ल)

(ल) चिरयति मदनिका । तत् कस्मिन् नु खलु सा ? कथमेषा केनापि पुरुषकेण सह मन्त्रयन्ती तिष्ठति । यथा अतिस्निग्धया निश्चलदृष्ट्या आपिबन्तीव एतं निध्यायति, तथा तर्कयामि—एष स जन एतामिच्छति अभुजिष्यां कर्तुम् । तत् रमतां रमताम् । मा कस्यापि प्रीतिच्छेदो भवतु । न खलु शब्दापयिष्यामि ।

(ल) वसन्त इति । गवाक्षकेण क्षुद्रगवाक्षद्वारेण । क्षुद्रार्थे कप्रत्ययः । मन्त्रयन्ती गुप्तं भाषमाणा । एतं पुरुषम्, निध्यायति अवलोकयति । "निवर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः । स प्राग् दृष्टः । एतां मदनिकाम् । भुङ्क्ते स्वाम्युच्छिष्टमिति भुजिष्या दासी । "रुचिभुजिष्या किष्यन्" । "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः । अभुजिष्यां कर्तुं स्वयं ग्रहणेन मम दास्यान्मोचयितुमित्यर्थः । शब्दापयिष्यामि मदनिकामाह्वयिष्यामि तथात्वे अनयोः प्रेमालापभङ्गप्रसङ्ग इति भावः ।

(ব) মদনিকা। (দেখিয়া) ওহে! শর্বিলক যে! শর্বিলক! তোমার শুভাগমন ত! তুমি কোথায় চলিয়াছ?।

শর্বিলক। বলিব। (ইহার পর উভয়ে পরস্পর অনুরাগের সহিত দেখিতে লাগিল।)

(ল) বসন্তসেনা। মদনিকা বড় বিলম্ব করিতেছে। তা, সে কোথায়? (গবাক্ষদ্বার দিয়া দেখিয়া) এই মদনিকা যে কোন পুরুষের সহিত আলাপকরতঃ অবস্থান করিতেছে। যখন অতিস্নিগ্ধ ও নিশ্চল দৃষ্টি

मद। सव्विलअ! कधेहि। (व)

शर्वि। सशङ्कं दिशोऽवलोकयति। (श)

मद। सव्विलअ! किं णेदं? ससङ्को विअ लक्खीअसि। (ष)

शर्वि। वक्ष्ये त्वां किञ्चित् रहस्यम्, तद्विविक्तमिदम्?। (स)

मद। अध इं। (ह)

(व) शर्विलक! कथय।

(ष) शर्विलक! किं न्विदम्? सशङ्क इव लक्ष्यसे।

(ह) अथ किम्।

(व) मद इति। कथय कस्मिन् स्थाने चलितोऽसीति इदानीमेव ब्रूहीत्यर्थः।

(श) शर्वि इति। दिशः सर्वाः। दिशामवलोकनं विजनतापरीक्षार्थम्।

(स) शर्वि इति। रहस्यं गुप्तविषयम्। इदं स्थानम्, विविक्तं विजनं किमिति काकुः। "विविक्तौ पूतविजनौ" इत्यमरः।

দ্বারা যেন পান করতঃ ইহাকে দেখিতেছে, তখন আমি মনে করি—এই সেই লোক, এই মদনিকাকে অদাসী করিতে ইচ্ছা করে ( দাস্যবৃত্তি হইতে মুক্ত করিতে ইচ্ছা করে ) তা, । কাহারই যেন প্রীতিচ্ছেদ না হয়। আমি ডাকিব না।

(ব) মদনিকা। শর্বিলক। বল।

(শ) শর্বিলক। ( আশঙ্কার সহিত সকল দিক্ নিরীক্ষণ করিতে লাগিল। )

(ষ) মদনিকা। শর্বিলক। এ কি? তোমাকে যেন আশঙ্কিত বলিয়া লক্ষ্য করিতেছি।

(স) শর্বিলক। তোমাকে কোন গোপনীয় বিষয় বলিব। সুতরাং এ স্থানটী নির্জন ত?।

वसन्त। कधं परमरहस्सं। ता ण सुणिस्सं। (च)

शर्वि। मदनिके! किं वसन्तसेना मोक्ष्यति त्वां निष्क्रयेण?। (क)

वसन्त। कधं मम सम्बन्धिणी कधा। ता सुणिस्सं इमिणा गवक्खेण ओवारिदसरीरा। (ख)

मद। सव्विलअ! भणिदा मए अज्जआ, तदो भणादि, जइ मम सच्छन्दो, तदा विणा अत्थं सव्वं परिजणं अभुजिस्सं करइस्सं। अध सव्विलअ! कुदो दे एत्तिओ विहवो? जेण मं अज्जआसआसादो मोआइस्ससि। (ग)

---

(च) कथं परमरहस्यम्। तत् न श्रोष्यामि।

(ख) कथं मम सम्बन्धिनी कथा। तत् श्रोष्यामि अनेन गवाक्षेण अपवारितशरीरा।

---

(ङ) मद इति। अयकिमित्येकमेवाव्ययमङ्गीकारे। "अङ्गीकारेऽपि आयकिम्" इति हलायुधः।

(च) वसन्त इति। परमरहस्यम् एकान्तगोपनीयम्, विविक्ततायै स्यादिति भावः।

(क) शर्वि इति। निष्क्रयेण धनविनिमयेन।

(ख) वसन्त इति। अपवारितशरीरा, अन्यथा ममावलोकनेन ययोरालापनिवृत्तिः स्यादिति भावः।

---

(ঙ) মদনিকা। হাঁ।

(চ) বসন্তসেনা। অত্যন্ত গোপনীয়। তা আমি শুনিব না।

(ক) শর্বিলক। মদনিকা! বসন্তসেনা ধনের বিনিময়ে তোমাকে ছাড়িয়া দিবেন কি?।

(খ) বসন্তসেনা। এ যে আমার সম্বন্ধেই কথা হইতেছে। তা, এই গবাক্ষদ্বারা আবৃতদেহ হইয়া শুনিব।

शर्वि। दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च।
अद्य रात्रौ मया भीरु! त्वदर्थे साहसं कृतम् ॥५॥

वसन्त। पसण्णा से आकिदो, साहसकम्मदाए उण उव्वेअणीआ। (घ)

(ग) शर्विलक! भणिता मया आर्य्या; ततो भणति—यदि मम स्वच्छन्द तदा विना अर्थं सर्वं परिजनमभुजिष्य करिष्यामि। अथ शर्विलक! कुतस्ते एतावान् विभव? येन मामार्य्यासकाशात् मोचयिष्यसि।

(घ) प्रसन्ना अस्य आकृति, साहसकर्म्मतया पुनरुद्वेजनीया।

(ग) मद इति। भणिता 'उपयुक्तधनलाभेन मां मोक्ष्यसि न वा' इति पृष्टेत्यर्थ, आर्य्या वसन्तसेना। स्वच्छन्द स्वत एवाभिप्राय। "अभिप्रायश्छन्द आशय" इत्यमर। अभुजिष्यमदासम् दास्या मोचयिष्यामीत्यर्थ। विभवो धनम्।

दारिद्र्येणेति। हे भीरु! भयशीले! दारिद्र्येण अभिभूत आक्रान्तस्तेन, अतो गृहादेव धनं दातुं न शक्यमिति भाव। तव स्नेह प्रेम अनुगत प्राप्तस्तेन च, अतो निष्कृतिरपि न सम्भवतीति भाव। मया, अद्य रात्रौ "उभयतोऽर्द्धरात्र वा अह" इति दुर्गसिंहोक्त गतरात्रिरपि इत्यर्थ, त्वदर्थे तव निष्क्रयार्थे, साहस चौर्य्यम्, कृतम् ॥५॥

(घ) वसन्त इति। प्रसन्ना शान्ता। साहस कर्म्म यस्या सा तस्या भावस्तया। उद्वेजयतीति उद्वेजनीया उद्वेगजनिका। 'कृत्यल्युटोऽन्यत्रापि' इति कर्त्तर्य्यनीय।

(গ) মদনিকা। শর্বিলক। আমি আর্য্যা বসন্তসেনাকে জিজ্ঞাসা করিয়াছিলাম, তাহাতে তিনি বলেন—"যদি আমার নিজ হইতে অভিপ্রায় হয়, তবে আমি বিনা ধনেই সকল পরিজনকে মুক্ত করিয়া দিব।" শর্বিলক। এত ধন তোমার কোথা হইতে আসিল? যে, আমাকে আর্য্যা বসন্তসেনার নিকট হইতে মুক্ত করিবে।

শর্বিলক। হে ভীরু! আমি দারিদ্র্যাভিভূত, অথ চ তোমার প্রতি অনুরক্ত, তাই, আজ রাত্রিতে তোমার নিমিত্ত সাহসের কার্য্য করিয়াছি ॥৫॥

मद। सव्विलअ! इत्थीकल्लवत्तस्स कारणेण उहअं पि संसए विणिक्खित्तं। (ङ)

शर्वि। किं किम्?।

मद। सरीरं चारित्तं च। (च)

शर्वि। अपण्डिते! साहसे श्रीः प्रतिवसति। (छ)

मद। सव्विलअ! अखण्डिदचारित्तोसि। ता ण क्खु दे मम कारणादो साहसं करन्तेण अच्चन्तविरुद्धं आचरिदं?। (ज)

(ङ) शर्विलक। स्त्रीकल्यवर्त्तस्य कारणेन उभयमपि संशये विनिक्षिप्तम्।

(च) शरीरं चारित्रञ्च।

(ज) शर्विलक। अखण्डितचारित्रोऽसि, तत् न खलु त्वया मम कारणात् साहसं कुर्वता अत्यन्तविरुद्धमाचरितम्?।

---

(ङ) मद इति। स्त्रीकल्यवर्त्तस्य पूर्वव्याख्यानात् अल्पस्थायिन्या स्त्रिया। संशये स्थायित्वसन्देहे।

(च) मद इति। चौर्य्यकरणाय प्रवृत्तौ राजपुरुषकर्त्तृकसंहारसम्भवेन शरीरं तत्कार्य्यप्रकाशसम्भवेन च चारित्रं संशये विनिक्षिप्तमित्यन्वयः।

(छ) शर्वि इति। श्रीः सम्पत्तिः, साहसकारिण एव सम्पत्तिर्भवतीत्यर्थः।

(ज) मद इति। अखण्डितचारित्रोऽसि साधुभावादविच्युतचरित्रोऽसि। इदन्तु

---

(ঘ) বসন্তসেনা। ইহার আকৃতি শান্ত, কিন্তু সাহসের কার্য্য উদ্বেগেরও বিষয়।

(ঙ) মদনিকা। শর্ব্বিলক। অস্থায়ী স্ত্রীলোকের জন্য তুমি উভয়কেই সংশয়ে ফেলিয়াছিলে।

শর্ব্বিলক। কি কি?।

[চ] মদনিকা। শরীর এবং চরিত্র।

[ছ] শর্ব্বিলক। মুগ্ধে! সাহসেই লক্ষ্মী বাস করেন।

शर्वि ।

नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां
विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम् ।
धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचित्
कार्य्याकार्य्यविचारिणी मम मतिश्चौर्य्येऽपि नित्यं स्थिता ॥६॥

लोकप्रसिद्धिवशादहं जानामीति भावः । साहसं चौर्य्यम् । न खलु अत्यन्तविरुद्धमाचरसि किमिति काकुः । अत्यन्तविरुद्धमेवाचरसीत्यर्थः ।

नो इति । अहं धनार्थी सन्, फुल्लां फुल्लकुसुमां प्रस्फुटितपुष्पभूषितामित्यर्थः, लतामिव, विभूषणवतीं विशिष्टालङ्कारधारिणीम्, अबलां स्त्रियम्, नो मुष्णामि तद्भूषणविक्रयेण धनग्रहणार्थं नापहरामि, पुष्पार्थं लताहरणस्येव अलङ्कारार्थं स्त्रीहरणस्य गुरुतरान्याय्यत्वादिति भावः । विप्रस्वं ब्राह्मणस्वत्वास्पदीभूतम्, काञ्चनं स्वर्णम्, न हरामि, तदपहरणस्य महापातकत्वेन अत्यन्तविरुद्धत्वादित्याशयः । अथो तथा, यज्ञार्थम् अभ्युद्धृतम् आयोजितं धनरत्नादिकं न हरामि, तदपहरणस्यापि यज्ञव्याघातकत्वेन नितान्तागर्हितत्वादित्यभिप्रायः । तथा, क्वचिदपि धात्र्याः उपमातुः उत्सङ्गगतं क्रोडस्थितम् बालं शिशुम्, न हरामि तदलङ्कारविक्रयेण धनलाभार्थं नापहरामि, तदपहरणस्यापि धात्र्या अपि शोकोदयात् प्राणनाशकत्वेन एकान्तानौचित्यादिति भावः । अतएव मम मतिर्बुद्धिः चौर्य्येऽपि विषये, नित्यं कार्य्याकार्य्यविचारिणी कर्त्तव्याकर्त्तव्यविवेकशालिनी सती, स्थिता, सुतरां तव कारणात् साहसं कुर्वतापि मया अत्यन्तविरुद्धं नाचरितमित्याशयः ।

अत्र प्रथमे पदे श्रौती उपमा, द्वितीये काञ्चनयज्ञार्थद्रव्ययोः हरामीत्येकया क्रियया सम्बन्धाभिधानात् तुल्ययोगिता, तृतीये धनार्थशब्दयोः पर्य्यायतया आपातत पौनरुक्त्यप्रतीतावपि परं धनप्रयोजनीयार्थकतया पर्य्यवसानात् भिन्नाकारशब्दगतत्वात्

[খ] মদনিকা। শর্বিলক! তোমার চরিত্র, পূর্ব্বে খণ্ডিত হয় নাই। তা, তুমি আমার জন্য সাহস করতঃ, অত্যন্ত বিরুদ্ধ কোন আচরণ কর নাই ত ?।

तद्विज्ञाप्यतां वसन्तसेना—

अयं तव शरीरस्य प्रमाणादिव निर्म्मितः ।

अप्रकाश्यं (१) ह्यलङ्कारः मत्स्नेहाद्धार्य्यतामिति ॥७॥

---

पुनरुक्तवदाभासः, तथा चतुर्थपादं प्रति पूर्वपादत्रयवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। तथा हरामीत्यस्य त्रिरुपादानात् कथितपदतादोषः, स च एकस्मिन् हरामीत्यत्र नयामीति पाठेन समाधेयः।

अत्र ब्राह्मणस्यैव मैत्रेयस्य हस्तात् सुवर्णभाण्डस्य प्रागपहृतत्वेऽपि तदानीं तस्य ब्राह्मणत्वेन ज्ञानाभावात् 'विप्रस्व न हरामि' इत्यनेन न विरोधः। ब्राह्मणस्वर्णहरणस्य महापातकत्वं प्रायश्चित्तविवेकादावनुसन्धेयम्।

शार्दूलविक्रीडितं वृत्तम् ॥८॥

अयमिति। तव वसन्तसेनायाः शरीरस्य प्रमाणादिव परिमाणं गृहीत्वैव, तयैव एतद्भूषणप्रमाणदर्शनादिति भावः, निर्मितः शिल्पिना कृतः, अयमलङ्कारः, मत्स्नेहात् स्तैन्येन सख्या ममानुरोधादित्यर्थः, हि निश्चितम्, अप्रकाश्यः जनसमीपे गोप्यः यथा स्यात्तथा त्वया धार्य्यतां गोपनभावेनैवाय परिधीय इत्यर्थः। इतिशब्दस्य विज्ञाप्यतामिति पूर्वगतेनान्वयः।

अत्र क्रियोत्प्रेक्षालङ्कारः। प्रमाणादिति ल्यब्लोपे पञ्चमी ॥७॥

---

শর্বিলক। আমি ধনার্থী হইয়া, কখনও প্রস্ফুটিত পুষ্প লতার ন্যায় অলঙ্কারবতী অবলাকে অপহরণ করি না এবং ব্রাহ্মণের স্বর্ণ, যজ্ঞের জন্য আনীত বস্তু এবং ধাত্রীর ক্রোড়স্থিত বালক হরণ করি না। কারণ, আমার বুদ্ধি চৌর্য্যবিষয়েও সর্ব্বদা কর্ত্তব্যাকর্ত্তব্য বিবেকবতী হইয়াই অবস্থান করে ॥৬॥

অতএব বসন্তসেনাকে জানাও—

---

(१) अप्रकाश्य ।

मद। सव्विलअ! अप्पकाअं (१) अलङ्कारओ त्ति दुवेवि ण जुज्जदि (२)। ता उवणेहि दाव पेक्खामि एदं अलङ्कारअं। (झ)

शर्वि। इदमलङ्करणम्। इति साशङ्कं समर्पयति।

मद। निरूप्य। दिट्ठपुरुव्वो विअ अअं अलङ्कारओ। ता भणेहि कुदो दे एसो?। (ञ)

(झ) शर्विलक! अप्रकाश्यम् अलङ्कारक इति द्वयमपि न युज्यते। तदुपनय तावत् प्रेक्षे एतमलङ्कारकम्।

(ञ) दृष्टपूर्व इवायमलङ्कारः। तद्भण कुतस्ते एषः?।

---

(झ) मद इति। न युज्यत इति। तथा च अलङ्क्रियते अनेनेति अलङ्कारः। तत्र च लोकेभ्यः शोभाप्रदर्शनार्थमेव अलङ्कारधारणम्। एवञ्च अप्रकाश्यत्वेन किमर्थमलङ्कारधारणम्? अलङ्कारधारणत्वेन कथमप्रकाश्यम्?। विशेषतश्च वेश्याया अलङ्कारधारणजनितशोभाया स्वमात्रद्रष्टव्यत्वे तदुद्देश्यस्य बाधितत्वमिति भावः।

(ञ) मद इति। एष अलङ्कारक कुतस्ते हस्तगतोऽभूदिति शेषः।

---

তোমার শরীরের পরিমাণ লইয়াই যেন এই অলঙ্কার নির্ম্মিত হইয়াছিল, এখন আমার স্নেহে গোপনে এই অলঙ্কার ধারণ কর ॥৭॥

[ঝ] মদনিকা। শর্বিলক। 'গোপন' এবং 'অলঙ্কার ধারণ' এই দুইটীই সঙ্গত হয় না। তা, আন দেখি এই অলঙ্কার।

শর্বিলক। এই অলঙ্কার। (এই বলিয়া আশঙ্কার সহিত অর্পণ করিল)।

[ঞ]। মদনিকা। (নিরূপণ করিয়া) এই অলঙ্কার যেন পূর্বে দেখিয়াছি বলিয়া বোধ হয়। তা, বল দেখি—ইহা কোথা হইতে তোমার হস্তগত হইল?।

---

(१) अप्पकासो। (२) अप्प च अणो त्ति दुवेवि ण जुज्जदि।

शर्वि । मदनिके ! किं तव अनेन । गृह्यताम् । (ट)

मद । सकोपम् । जइ मे पच्चअं ण गच्छसि, ता किं णिमित्तं मं णिक्किणसि ? । (ठ)

शर्वि । अयि ! प्रभाते मया श्रुतं श्रेष्ठिचत्वरे—यथा सार्थवाहस्य चारुदत्तस्य इति । (ड)

वसन्तसेना मदनिका च मूर्च्छां नाटयतः । (ढ)

(ठ) यदि मे प्रत्ययं न गच्छसि, तत् किं निमित्तं मां निष्क्रीणासि ?

---

(ट) शर्वि इति । अनेन एतत्प्राप्तिवृत्तान्तज्ञानेन ।

(ठ) मद इति । प्रत्ययं विश्वासम्, न गच्छसि न प्राप्नोषि । निष्क्रीणासि धनदानविनिमयेन स्वायत्तीकर्तुमिच्छसीत्यर्थः । तथा च प्रिया हि नाम सर्वविश्वासस्थानम् आदावेव चेत् तत्राविश्वासः, तदा तस्याचिरमहितकरसाध्योऽयमुदासीन एव सर्वत्रेति भावः ।

(ड) शर्वि इति । श्रेष्ठिचत्वरे वणिक्पल्ल्याम् । सार्थवाहस्य वणिग्व्यवसायिनः । अत्र वज्रं नाम प्रतिमुखसन्ध्यङ्गम्—"प्रत्यक्षनिष्ठुरं वज्रम्" इति दर्पणलक्षणात् ।

(ढ) वसन्तेति । स्वगृहे चौरे प्रविष्टे आत्मनः स्वकीयोऽलङ्कार एव धनं हृतम्, तत्र च चौरोऽपि स्वकीयोपनिधिहारादिना आत्मानं मोचयितुं चेष्टते । एवञ्च शर्विलककृतप्रकाशादिना चारुदत्तस्य अनिष्टसम्भावनया भीतिवशात् वसन्तसेनाया मूर्च्छा, मदनिकायाश्च तत्सम्पर्कादिति बोध्यम् ।

---

(ট) শর্বিলক। মদনিকা! সে খবর দিয়া তোমার দরকার কি ?। নাও।

(ঠ) মদনিকা। (ক্রোধের সহিত) যদি আমার উপরে বিশ্বাসই না কর, তাহা হইলে আমাকে হস্তগত করিতে চাও কেন ?।

[ড] শর্বিলক। ওহে! প্রাতঃকালে বণিক্‌পাড়ায় আমি শুনিয়াছি যে—ইহা বাণিজ্যব্যবসায়ী চারুদত্তের।

शर्वि । मदनिके । समाश्वसिहि । किमिदानीं त्वम्—

विषादस्रस्तसर्व्वाङ्गी सम्भ्रमभ्रान्तलोचना ।
नीयमानाऽभुजिष्यात्वं कम्पसे नानुकम्पसे ॥८॥

मद । समाश्वस । साहसिअ । ण क्खु तुए मम कारणादो इमं अकज्जं करन्तेण, तस्सिं गेहे कोवि वावादिदो परिक्खदो वा ? । (ग)

(ग) साहसिक ! न खलु त्वया मम कारणादिदमकार्य्यं कुर्वता तस्मिन् गेहे कोऽपि व्यापादितः परिक्षतो वा ? ।

विषादेति । अभुजिष्यात्वम् अदासीत्वम्, नीयमाना एतदलङ्कारविनिमयेन अधुनैव मया प्राप्यमाणा त्वम्, विषादेन शोकेन स्रस्तानि भूमौ पतितानि सर्वाणि अङ्गानि यस्याः सा, तथा सम्भ्रमेण भयव्यस्ततया भ्रान्ते घूर्णिते लोचने यस्याः सा तादृशी सती, किं कम्पसे, किन्तु न अनुकम्पसे मां प्रति न दयसे । तथा च दासीत्वे सत्येव स्वामिन्याः शोकसम्भवे आत्मनोऽपि शोकः प्रदर्शनीय एव, अन्यथा स्वामिन्याः कोपेन अनिष्टसम्भावना स्यात्, अत्र तु अलङ्कारविनिमयेन त्वं तस्मात् दासीत्वान्मोच्यस एव; तथापि स्वामिन्याः भयशोकसम्भवेन आत्मनोऽपि भयशोकप्रदर्शनार्थं कम्पनमसङ्गतमेव । एवं मयैव तव अभुजिष्यात्वकरणात् मां प्रति तव दयाकरणमुचितमेवेति भावः ।

अत्र भुजिष्यात्वरूपकारणाभावेऽपि कम्पनरूपकार्य्योत्पत्तेर्विभावना, तथा अभुजिष्यात्व-प्रापणरूपकारणे सत्यपि अनुकम्पारूपकार्य्यानुत्पत्तेर्विशेषोक्तिः, अनयोर्मिथो निरपेक्षतया संसृष्टिः ॥८॥

[ট] বসন্তসেনা ও মদনিকা মূর্চ্ছা অভিনয় করিল।

শর্ব্বিলক। মদনিকা! আশ্বস্ত হও।

শোকে তোমার সমস্ত অঙ্গ ভূতলে লুণ্ঠিত হইতেছে এবং ব্যস্ততা-বশতঃ নয়নদ্বয় ঘূর্ণিত হইতেছে, এই অবস্থায় কেন এখন তুমি কাঁপিতেছ ? অথচ তোমাকে দাসবৃত্তি হইতে মুক্ত করিতেছি, তথাপি কেন দয়া করিতেছ না ? ॥৮॥

शर्वि। मदनिके! भीते सुप्ते न शर्विलकः प्रहरति। तन्मया न कश्चिद् व्यापादितो नापि परिक्षतः।

मद। सच्चं?। (त)

शर्वि। सत्यम्।

वसन्त। (संज्ञां लब्ध्वा) अम्महे! पच्चुज्जीविदम्हि। (थ)

मद। पिअं। (द)

शर्वि। (सेर्ष्यम्) मदनिके! किं नाम प्रियमिति?। (ध)

---

(त) सत्यम्?।

(थ) अम्मो! प्रत्युपजीवितास्मि।

(द) प्रियम्।

---

(ण) मद इति। न खलु कोऽपि व्यापादितः परिक्षतो वेति काक्वा प्रश्नो व्यज्यते।

(त) मद इति। अत्रापि काकु'रदमुत्र सत्यं किमित्यर्थः।

(थ) वसन्त इति। 'अम्महे' इति विस्मयार्थे देशीयभाषा। प्रत्युपजीवितास्मि पुनरुपस्थितजीवनास्मि, चारुदत्तस्य स्वास्थ्यसंवादलाभादिति भावः।

(ध) शर्वि इति। चारुदत्तस्य स्वास्थ्यप्राप्तेः किं सम्पर्कायातव किं प्रियमित्यर्थः।

---

[ণ] মদনিকা। (আশস্ত হইয়া) সাহসিক। তুমি আমার জন্য এই অকার্য্য করিতে থাকিয়া, সেই বাড়ীতে কাহাকেও হত্যা বা আহত কর নাই ত?।

শর্ব্বিলক। মদনিকা। ভীত বা নিদ্রিত ব্যক্তির উপরে শর্ব্বিলক প্রহার করে না। অতএব আমি কাহাকেও হত্যা বা আহত করি নাই।

[ত] মদনিকা। সত্য?।

শর্ব্বিলক। সত্য।

[থ] বসন্তসেনা। (চৈতন্য লাভ করিয়া) আহা! বাঁচিলাম।

[দ] মদনিকা। ইহা প্রীতিকর সংবাদ।

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्य्यं
सद्वृत्तपूर्वपुरुषेऽपि कुले प्रसूतः ।
रक्षामि मन्मथविपन्नगुणोऽपि मानं
मित्रञ्च मां व्यपदिशस्यपरञ्च यासि ॥८॥

त्वदिति । सन्ति साधूनि वृत्तानि व्यवहारा येषां तादृशाः पूर्वपुरुषा यस्मिन् तथोक्ते कुले वंशे, प्रसूतोऽपि जातोऽपि अहम्, तव स्नेहेन प्रणयेन बद्धं हृदयं यस्य स तादृशः, हि निश्चितं सन्, अकार्य्यं कर्त्तव्यविपरीतं निन्दितचौर्य्यकार्य्यं करोमि । तथा मन्मथेन कामावेगेन विपन्ना नष्टा गुणाः सत्त्वविद्यादयो यस्य स तथाविधः सन्नपि, मानं तव गौरवम्, रक्षामि अवहेलनेन बलात्कारेण च प्रख्यातां स्थापयामि । किन्तु त्वम्, मां मित्रं वल्लभम्, व्यपदिशसि मुखेन ब्रवीषि, अपरञ्च पुरुषं चारुदत्तमित्यर्थः, यासि कर्म्मणा भजसे । वेश्यात्वेन अतीव लघुस्वभावा त्वमिति भावः ।

मत्प्रणयिना शर्विलकेन चारुदत्तस्य अनिष्टकरणात् दासीरूपा सखीरूपा च मां प्रति स्वामिनी सखी च वसन्तसेना रुष्टा सौहार्द्दहीना च भविष्यति इति विभाव्यैव इयं मदनिका भयेन कम्पिता शोकेन च अमाद्ये इत्यवधार्य्य शर्विलकेन पूर्वं "विषादस्रस्त-सर्व्वाङ्गी" इत्यादिकमुक्तम्, इदानीन्तु वसन्तसेनाया असन्निधान एव चारुदत्तस्य स्वास्थ्य-हानि निर्बन्धातिशयकरणात चारुदत्ते प्रत्येवेयमनुरक्तेति विविच्य "त्वत्स्नेह"—इत्याद्यभिहितमिति बोध्यम् ।

अत्र व्यपदिशसि-यासीत्यनेकक्रियाणीत्वमित्येककारकत्वात् दीपकमलङ्कारः । वसन्ततिलका वृत्तम् ॥८॥

---

[ধ] শর্বিলক। (ঈর্ষ্যার সহিত) মদনিকা। কি প্রীতিকর সংবাদ ?।

যে বংশের পূর্বপুরুষেরা সৎকার্য্যকারী ছিলেন, সেই বংশে জন্মিয়া আমি, তোমার প্রতি অনুরাগে আবদ্ধচিত্ত হইয়াই অকার্য্য করিয়াছি এবং কামাবেগে আমার গুণ বিনষ্ট হইলেও, আমি তোমার গৌরব রক্ষা করিতেছি, অথচ তুমি আমাকে প্রিয়ও বলিতেছ, অন্য পুরুষকেও ভজনা করিতেছ ॥৮॥

साकूतम् । (न)

इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः ।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥१०॥
अयञ्च सुरतज्वालः कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥११॥

(न) साकूतमिति। आकूतेन मदनिकागतस्नेहत्वविज्ञप्त्यभिप्रायेण सहेत्यर्थः।

इह इति। इह जगति, सर्वं स्वं धनमेव फलमेषामस्तीति सर्वस्वफलिनः, कुलपुत्राः सद्वंशजाता जना एव महाद्रुमा महावृक्षाः, वेश्या एव विहगाः पक्षिणस्तैः भक्षिताः फलखादनेन खादिताः सन्तः, अलमत्यन्तम्, निष्फलत्वं धनरूपफलशून्यत्वम्, यान्ति प्राप्नुवन्ति। अतएव सर्वनाशकरी वेश्या धिक् इति भावः।

अत्र समस्तवस्तुविषयं साङ्गरूपकमलङ्कारः। तथा निष्फलत्वमित्यत्र सर्वस्वरूपस्य उपमेयस्य अनभिधानात् न्यूनपदत्वदोषः, प्राचीनमतेन वाक्यसमाप्तावपि "कुलपुत्रमहाद्रुमाः" इत्यस्य विशेषणत्वेन पुनरनुपादानात् समाप्तपुनरात्तत्वदोषः, एवं वेश्याविहगयोः उपमेयोपमानयोर्लिङ्गभेदात् दर्पणमते भग्नप्रक्रमतादोषश्च, वेश्याविहङ्गमीभुक्ता यान्त्यत्र स्वफलक्षयम् इति पाठे तु तेषां समाधानम्। न च तथा पाठे स्वशब्दस्य विरूपादानात् पुनः कथितपदत्वदोष इति वाच्यम् तस्य उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वव्यवस्थापनात् अत्र तु उद्देश्यप्रतिनिर्देश्यविषयरूपत्वात्।

ननु 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः' इत्यभिधानात् सर्वं स्वमेव फलं यथा ते सर्वस्वफलाः इति बहुव्रीहिणैवोपपत्तौ कथं मत्वर्थीय इन्प्रत्यय इति चेन्न अत्र प्रामाण्यस्य इनविधानात् तदर्थस्य च बहुव्रीहिणा वक्तुमशक्यत्वात् अतएव हि मुक्तानुशासने 'बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः' इत्यभिधानात् ॥१०॥

[न] [ অভিপ্রায়ের সহিত ] এই জগতে সদ্বংশজাত পুরুষগণ মহাবৃক্ষ, সমস্ত ধন তাহার ফল, কিন্তু বেশ্যারূপ পক্ষিগণ সেই মহাবৃক্ষগুলিকে ভক্ষণ করে, তাহাতে সে গুলি একেবারে নিষ্ফলতা [ নির্ধনতা ] প্রাপ্ত হয় ॥১০॥

वसन्त। सस्मितम्। अहो! से अस्थाणे आवेओ। (प)

शर्वि। सर्वथा—

अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति।
श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्या परिसर्पणानि॥१२॥

(प) अहो! अस्य अस्थाने आवेग।

---

अयमिति। अपि चेति चार्थ। सुरतमेव ज्वाला अर्चिर्यस्य स, प्रणय अनुराग एव इन्धन काष्ठ यस्य स, अय माहकेरसूयमान, काम एव अग्नि ॥, प्राणिनाम एव वर्त्तत इति शेष। यत्र कामाग्नौ, नराणां यौवनानि धनानि च ह्यन्ते अदृष्टेन निक्षिप्यन्ते घृतादीनि हवींषीव निक्षिप्यमाणानि लोप प्रयान्तीत्यर्थ। अतएव महानर्थमूल कामनमपि त्याज्यमिति भाव।

अत्र सुरतादौ ज्वालात्वाद्यारोप शाब्द, यौवनादौ हविरारोपस्तु आर्थ इति एकदेशविवर्त्तिरूपकमलङ्कार ॥११॥

(प) वसन्त इति। अस्य शर्विलकस्य, अस्थाने अविषये, आवेग ईर्ष्याप्रभाव। तथा च मदनिका चारुदत्त प्रति न खल्वनुरक्ता, तथापि अस्येदृशी सम्भावना भ्रममूलैवेति भाव।

अपण्डिता इति। ये पुरुषा, स्त्रीषु च श्रीषु सम्पत्सु च विश्वसन्ति आत्मीयत्वेन विश्वास कुर्वन्ति, ते पुरुषा सर्वथा अपण्डिता अज्ञा, मे मम मता अभिमता। हि यस्मात् श्रिय सम्पद, तथैव नार्य स्त्रियश्च, भुजङ्गकन्याना सर्पीणा परिसर्पणानि तद्वत् सर्वतो वक्रगमनानि कुटिलव्यवहाराय कुर्वन्ति। सुतरा तत्रासिनामेवा अपण्डितत्व युक्तमेवेति पराधुरक्ताया मदनिकायामात्मीयत्वेन विश्वासकरणादहमप्यपण्डित एवेति भाव।

---

এই কামই অগ্নি, রমণ তাহার শিখা এবং প্রণয় তাহার ইন্ধন, যে অগ্নিতে মানুষের যৌবন ও ধন আহুতি দেয় ॥১১॥

[প] বসন্তসেনা। [ঈষৎ হাস্তের সহিত] কি আশ্চর্য্য! এই ব্যক্তির দেখিতেছি, অস্থানে ঈর্ষ্যার আবেগ হইয়াছে।

स्त्रीषु न रागः कार्य्यो रक्तं पुरुषं स्त्रियः परिभवन्ति ।
रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥१२॥

---

अत्र अप्रस्तुतपुरुषसामान्याभिधानात् प्रस्तुतान्यरूपपुरुषविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः ; स्त्रियः प्रस्तुताः स्त्रियश्चाप्रस्तुताः, तासाञ्च विश्वासरूपैकधर्म्माभिसम्बन्धाद्दीपकम्, अपण्डितमननकार्य्यस्य भुजङ्गकन्यागुप्यपरिसर्पणकारणरूपकार्य्येण समर्थनादर्थान्तरन्यासः, पूर्व्वमेव प्रस्तुताभिः स्त्रीभिः सह पूर्व्वार्द्धेन प्रस्तुतानां श्रीणां कुर्व्वन्तीत्येकक्रियाभिसम्बन्धात् तुल्ययोगिता ; तथा अन्यपरिसर्पणं कथमन्ये कुर्व्वन्तीति असम्बन्धेऽसम्भवन् भुजङ्गकन्यानां परिसर्पणानीव परिसर्पणानीति सादृश्यं बोधयतीति निदर्शना च, इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ।

तथा पूर्व्वार्द्धे स्त्रीषु चेति प्रथमं पठित्वा परार्द्धे नार्थ्ये इति परपाठादस्थानस्थपदतादोषः, स्त्रीशब्देन प्रक्रम्य नारीशब्दाभिधानाद्भग्नप्रक्रमतादोषश्च, "स्त्रियो हि कुर्व्वन्ति तथा श्रियश्च" इति पाठे तु तयोः समाधानम् ।

उपेन्द्रवज्रेन्द्रवज्रयोर्मिश्रणादुपजातिर्वृत्तम् ॥११॥

स्त्रीष्विति । स्त्रीषु रागः प्रेम, न कार्य्यो न विधेयः । कुत इत्याह—स्त्रियः रक्तमात्मानं प्रत्यनुरक्तं पुरुषम्, परिभवन्ति अवमानयन्ति । हि यस्मात् हेतोः रक्तैव आत्मानं प्रति स्वत एवानुरक्ता स्त्री रन्तव्या अनुरागविषयीकर्त्तव्या, तु किन्तु विरक्तभावा पूर्व्वतोऽनुरागविहीना, हातव्या विश्वसनापरित्यागेन दुरत एव परित्यक्तव्या । अतएव इयं मदनिकापि विरक्तभावत्वं न् भाविपरिभवसम्भवाच्च मया हातव्येति भावः ।

अत्रएवात्रापि पूर्व्ववदेव अप्रस्तुतप्रशंसालङ्कारः, वाक्यार्थहेतुकं काव्यलिङ्गञ्च, अनयोः अङ्गाङ्गिभावेन सङ्करः ।

आर्य्या जातिः ॥१२॥

---

শর্ব্বিলক। যাহারা স্ত্রীলোক ও সম্পদের উপরে বিশ্বাস করে, তাহা-দিগকে আমি সর্ব্বপ্রকারেই মূর্খ বলিয়া মনে করি। কারণ, সম্পদ ও স্ত্রীলোক, সর্প ও কন্যার ন্যায় বক্রগমন [কুটিল ব্যবহার] করিয়া থাকে ॥১১॥

सुष्ठु खल्विदमुच्यते—(फ)

एता हसन्ति च रुदन्ति च वित्तहेतोः
विश्वासयन्ति पुरुषं न तु विश्वसन्ति।
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानसुमना इव वर्जनीयाः ॥१४॥

(फ) सुष्ठु इति। सुष्ठु प्रशस्तमव्ययम्। "सुष्ठु दुष्ठु प्रशंसने" इत्यमरः।

एता इति। एता वेश्या, वित्तहेतोः पुरुषात् धनादानार्थम्, हसन्ति पुरुषस्य अनुरागवर्द्धनार्थम् आत्मनश्च अनुरागख्यापनार्थम्, हास्यं कुर्व्वन्ति च, रुदन्ति धनवस्त्वाद्यभावं ज्ञापयन्त्यो रोदनं कुर्व्वन्ति च। तथा पुरुषं विश्वासयन्ति, हावभावादिना आत्मानं प्रति विश्वस्तं कुर्व्वन्ति, तु किन्तु, स्वयं पुरुषं न विश्वसन्ति, अचिरतधननिष्काशनेन विरक्तिसम्भवादिति भावः। तस्मात् कुलशीलसमन्वितेन सत्कुलोत्पत्तिसत्स्वभावविशिष्टेन नरेण, श्मशानस्य सुमनाः पुष्पमिव, वेश्या वर्जनीया, दृष्टिसौरभतया रम्या अपि अमाङ्गलिकत्वादिति भावः।

यद्यपि अप्रस्तुतवेश्यासामान्याभिधानात् मदनिकारूपवेश्याविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, हसन्तीत्याद्यनेकक्रियाणाम् एता इत्येककारकत्वात् दीपकम्, श्रौती उपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तथा चतुर्थपादे उपमानोपमेययोर्व्वचनभेदात् भग्नप्रक्रमतादोषः, "ज्योत्स्ना इव सिता कीर्त्तिः" इति दर्पणोदाहरणवत्, 'वर्जनीया' इति बहुवचनस्य उभयत्रान्वयाभावेन सुधियामुद्वेगजनकत्वम्। "वेश्या श्मशानसुमना इव वर्जनीया" इत्येकवचनान्तपाठे तु तद्दोषपरिहारः। अमरकोषटीकायां रघुनाथेन तथैव पठितश्च।

ननु "स्त्रियः सुमनसः पुष्पम्" इत्यमरकोषे पुष्पसामान्यार्थे बहुवचननिर्द्देशात् "बहव

স্ত্রীলোকের প্রতি অনুরাগ কর্ত্তব্য নহে, কারণ, স্ত্রীলোকেরা অনুরক্ত পুরুষকে অপমানিত করে। অনুরক্তার প্রতিই অনুরাগ কর্ত্তব্য, কিন্তু অননুরক্তাকে পরিত্যাগ করা উচিত ॥১৩॥

[ফ] লোকে এ কথা ভালই বলে—

स्त्रियो नाम चपलाः—(ब)

अन्यं मनुष्यं हृदयेन कृत्वा अन्यं ततो दृष्टिभिराह्वयन्ति ।
अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥१६॥

"समुद्रवीचीव चलस्वभावाः सन्ध्याभ्रलेखेव मुहूर्त्तरागाः ।
वेश्याः कृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति ॥"

इति पाठेन तु तयोः समाधानम् । उपजातिर्वृत्तम् ॥१५॥

(ब) स्त्रिय इति । चपलाः अस्थिरहृदयाः, स्त्रियः प्रकरणात् वेश्या इति परपद्यस्थक्रियाभिरन्वीयते ।

अन्यमिति । हृदयेन अन्यं मनुष्यं कृत्वा मनसा अन्यं पुरुषं कामयित्वेत्यर्थः, ततः परम्, दृष्टिभिरन्यं मनुष्यमाह्वयन्ति । अन्यत्र मनुष्ये, मदप्रसेकं यौवनमदसम्बन्धिनं हावभावादिकम्, मुञ्चन्ति प्रयोजयन्ति, शरीरेण च अन्यं मनुष्यम्, कामयन्ते कामस्य चरमव्यापाररूपं सुरतं निष्पादयन्ति । अतो भिन्नान्तर्बहिःस्वभावाः खल्विमाः सर्वथैव अविश्वसनीया इत्याशयः ।

अत्र पूर्ववदप्रस्तुतप्रशंसा, एकवेश्याजातस्यानेकगोचरत्वात् विशेषालङ्कारश्च अनयोः पूर्ववत् सङ्करः । तथा "वाक्यवाग्मुखि भाति इन्दुश्चन्दनबिन्दुवत्" इति दर्पणोदाहृतवत् प्रथमद्वितीयचरणयोः सन्धिकरणाभावात् सन्धिविश्लेषदोषः, कृत्वेति क्ताप्रत्ययेनैव आनन्तर्यबोधनेऽपि पुनस्ततः इत्युपादानादधिकपदत्वदोषः, अन्यमिति वारं वारमभिधानान्नवीकृतत्वदोषः, प्रसेकशब्दस्य विलासार्थावाचकत्वादवाचकत्वदोषः, पूर्वं परस्मैपदद्वयं प्रकाश्य कामयन्त इत्यात्मनेपदप्रयोगाद्भग्नप्रक्रमतादोषश्च । तेषां परीहाराय श्लोक एवं पठनीयः —

"अन्यं मनुष्यं हृदयेन कृत्वाऽपरं पुनर्दृष्टिभिराह्वयन्ति ।
अन्यत्र मुञ्चन्ति मदप्रभावं परं शरीरेण च सम्भजन्ति ॥"

इन्द्रवज्रा वृत्तम् ॥१६॥

---

দিগের অনুরাগ, সন্ধ্যাকালীন মেঘরেখার রক্তিমার ন্যায় অল্পকালস্থায়ী। আর, বেশ্যারা ধন আকর্ষণ করিয়া, নির্ধন পুরুষকে নিষ্পীড়িত অলক্তকের ন্যায় পরিত্যাগ করে ॥১৫॥

सूक्तं खलु कस्यापि—(भ)

न पर्वताग्रे नलिनी प्ररोहति
न गर्द्दभा वाजिधुरं वहन्ति।
यवाः प्रकीर्णा न भवन्ति शालयो
न वेशजाताः शुचयस्तथाङ्गनाः ॥१७॥

(भ) सूक्तमिति। सूक्तं शोभनोक्तिरित्यर्थः। एतेन "एता हसन्ति च" इत्यादिकं "न पर्वताग्रे" इत्यादिकञ्च पद्यं प्राचीनमुक्तकपद्यमासीदिति प्रतीयते।

नेति। नलिनी पद्मिनी पर्वताग्रे, न प्ररोहति नोत्पद्यते, जलाभावात्। गर्द्दभा, वाजिधुरं अश्वेन वहनीयभारम्, न वहन्ति वोढुं शक्नुवन्ति, तादृशसामर्थ्याभावात्। प्रकीर्णा क्षेत्रे निक्षिप्ता, यवा शालयो धान्यानि न भवन्ति, भिन्नजातीयत्वात्। तथा एवम्, वेशे वेश्यालये जाता अङ्गना स्त्रियः, शुचयः कुलस्त्रीवदव्यभिचारितया पवित्रा न भवन्तीत्यर्थः, भिन्नप्रकृतिकत्वादिति भावः।

अत्र मालारूपो दृष्टान्तालङ्कारः। तथा नलिनीत्येकवचनान्तेन प्रक्रम्य अन्यत्र बहुवचनान्तप्रयोगात् भग्नप्रक्रमता दोषः, स च "गिरेर्न पद्मान्युदयन्ति मस्तके" इति पाठेन समाधेयः।

तथा "मदनिके! किं नाम प्रियमिति" एतदारभ्य इत्यन्तसन्दर्भे मदनिकां प्रति शर्विलकस्य विरागात् विधूतं नाम प्रतिमुखसन्ध्यङ्गम्—"विधूतं स्यादरतिः" इति प्रलक्षणात्।

तथा 'प्रिय' इति मदनिकया कथितविषयस्य उपालम्भरूपेण एतावता प्रबन्धेन धर्मकथा उत्कीर्त्तनात् अर्थविशेषणं नाम नाट्यालङ्कारः। यथा साहित्यदर्पणे—

---

(ব) চঞ্চলস্বভাব বেশ্যারা, মনে মনে অন্য পুরুষকে কামনা করিয়া, পরে দৃষ্টিদ্বারা অন্য পুরুষকে আহ্বান করে, অপর পুরুষের প্রতি হাব-ভাবাদি প্রকাশ করে এবং শরীরদ্বারা অন্য পুরুষের কামপিপাসার নিবৃত্তি করে ॥১৬॥

(ভ) কোন ব্যক্তির এই একটী সুন্দর উক্তি—

**आः, दुरात्मन् चारुदत्तहतक! अयं न भवसि?।** इति कतिचित् पदानि गच्छति। (स)

**मद। अञ्चले गृहीत्वा। अइ असम्बद्धभासअ! असम्भावणीए कुप्पसि। (य)**

(य) अयि असम्बद्धभाषक। असम्भावनीये कुप्यसि।

'उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तत स्यादर्थविशेषणम् ॥"

वाजिनो धूः अनेन ( शकटेन ) वाजिवाहो भारस्ता वाजिधुरमिति कवेरभिप्रायात 'धुरनक्षस्य' इति राजादित्वादतप्रत्ययो न भवति, अक्षसम्बन्धित्वात ।

उपेन्द्रवज्रा वंशस्थविलयोर्मेलनादुपजातिर्वृत्तम् । ईदृशमेलनं ग्रन्थान्तरेऽपि दृश्यते । यथा कातन्त्रपञ्जिकाधृतम्—

"अविघ्नम यावदिदं शरीरं पततवश्य परिखेदतुर्वहम ।' इत्यादि । भ ।ष।परि॰च्छे दे "उद्गृह्य नयनस्य गोचरो द्रव्याणि तदन्ति पृथक्त्वमस्या ।' इत्यादि ॥१७।

(स) इदानीं मदनिकाया प्रियं मत्वा चारुदत्तमाक्रोशति आः इत्यादि । हतकौ हताश, निन्दाया कप्रत्यय, 'अग्निचीक इत्यादिवत तस्य परनिपात । अयं मदनिकाया अनुरागपात्रीभूत न भवसीति काकु । अचिरादेव त्वा दमयिष्यामीति भाव । गच्छति तत प्रस्थातुमिति शेष ।

(य) मद इति । गृहीत्वा प्रस्थातुमुद्यत शर्विलकमिति शेष । असम्बद्धभाषक । अप्रासङ्गिकप्रलापिन् । वेश्यानिन्दाया अत्र प्रसङ्गाभावादिति भाव । असम्भावनीये मया सम्भावयितुमप्यशक्ये विषये चारुदत्तानुरागे । नाहं चारुदत्त प्रति अनुरागिणीति तवायं कोपो निरर्थक एवेति भाव ।

পদ্মিনী, পর্বতের অগ্রে উৎপন্ন হয় না, গর্দ্দভগণ ঘোড়ার ভার বহন করিতে পারে না, যব রোপণ করিলে ধান্য হয় না এবং বেশ্যালয়ে উৎপন্ন স্ত্রীলোকেরা কখনও পবিত্র হয় না ॥১৭॥

(স) ওরে দুরাত্মন্ হতাশ চারুদত্ত! তুই না মদনিকার প্রিয়পাত্র হইয়াছিস্? (এই বলিয়া কয়েক পা অগ্রসর হইল।)

शर्वि। कथमसम्भावनीयं नाम ?। (र)

मद। एसो क्खु अलङ्कारओ अज्जआकेरओ। (ल)

शर्वि। ततः किम् ?।

मद। स च तस्स अज्जस्स हत्थे विणिक्खित्तो। (व)

शर्वि। किमर्थम् ?।

मद। कर्णे। एव्वं विअ। (श)

(ल) एष खल्वलङ्कार आर्य्यासम्बन्धी।

(व) स च तस्य आर्य्यस्य हस्ते विनिक्षिप्त।

(श) एवमिव।

---

अत्र उपन्यासो नाम प्रतिमुखसन्ध्यङ्गम्, "उपन्यासः प्रसादनम्" इति लक्षणात्।

(र) शर्वि इति। नाम सम्भावयामि। त्वदैव प्रियजनस्तास्यावार्त्तालाभेन "प्रिय" इत्युक्तत्वादिति भाव।

(ल) मद इति। आर्य्यासम्बन्धी वसन्तसेना स्वामिक।

(व) मद इति। स च अलङ्कार, तस्य आर्य्यस्य चारुदत्तस्य, हस्ते विनिक्षिप्त वसन्तसेनया न्यासीकृत।

---

(য) মদনিকা। (শর্বিলকের অকম্প শ্রবণ করিয়া) ওহে! তুমি অপ্রাসঙ্গিক কথা বলিতেছ এবং আমার যাহা অসম্ভাবনীয়, সেই বিষয়ে তুমি ক্রোধ করিতেছ।

(র) শর্বিলক। অসম্ভাবনীয় হইবে কেন ?।

(ল) মদনিকা। এই অলঙ্কার আর্য্যা বসন্তসেনার।

শর্বিলক। তাহাতে কি হইল ?।

(ব) মদনিকা। বসন্তসেনা এই অলঙ্কার আর্য্য চারুদত্তের হস্তে গচ্ছিত রাখিয়াছিলেন।

শর্বিলক। কি নিমিত্ত ?।

शर्वि। सर्वैलक्ष्यम्। भोः! कष्टम्। (घ)

छायार्थं ग्रीष्मसन्तप्तो यामेवाहं समाश्रितः।
अजानता मया सैव पत्रैः शाखा वियोजिता ॥१८॥

वसन्त। कधं एसोवि सन्तप्पदि ज्जेव। ता अजाणन्तेण एदिणा एव्वं अणुचिट्ठिदं। (ङ)

(ङ) कथमेषोऽपि सन्तप्यते एव। तदजानता एतेन एवमनुष्ठितम्।

---

(ग) मद इति। एवमिव उभयस्तेह एव उभयोर्लीलायातप्रसक्त्यर्थमिव, विनिश्चित इति पूर्वेणान्वयः। एतेन वसन्तसेनाचारुदत्तौ परस्परानुरागिणाविति द्योतितम्। स्वामिनीविषयत्वादेव गोपनार्थं कर्णे स्तुतम्।

(घ) शर्वि इति। वैलक्ष्येण लज्जावशादप्रतिभत्वेन सहेति सवैलक्ष्यम्।

छायेति। ग्रीष्मसन्तप्तः अहम्, छायार्थम् अनातपलाभार्थम्, यामेव शाखाम्, समाश्रितः, भवामीति शेषः। अजानता प्रकृततत्त्वमनवगच्छता मया, सैव शाखा, पत्रैः छायाकारकैः पर्णैः सह, वियोजिता पत्रपातनेन विभक्तीकृता। तथा च कामसन्तप्तोऽहं तत्कामसन्तापशान्त्यर्थं मदनिकां यद्येतु तत्स्वामितया यामेव वसन्तसेनां समाश्रितो भवामि, तस्या एवायमलङ्कार इत्यजानता मया सैव वसन्तसेना, अपहृतेन तेनालङ्कारेण वियोजिता, अतएव रुष्टा सा वसन्तसेना कदापि तां मदनिकां मह्यं न दास्यतीति दुरदृष्टविमुग्धं मां धिगिति भावः।

अत्रचात्र अप्रस्तुतायाः शाखायाः अभिधानात् प्रस्तुतायाः समायाः वसन्तसेनायाः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः ॥१८॥

(ङ) वसन्त इति। एष मदनिकया सह आलपन् जनोऽपि, सन्तप्यत एव मम

---

(গ) মদনিকা। (কাণে কাণে) এই জন্যই যেন।

(ঘ) শর্বিলক। (অপ্রতিভতার সহিত) হায়! কি কষ্ট!

আমি গ্রীষ্মে সন্তপ্ত হইয়া, ছায়ার জন্য যাহাকে আশ্রয় করিয়াছিলাম, আমি না জানিয়া সেই শাখাটিকেই পত্র বিহীন করিলাম ॥১৮॥

शर्वि। मदनिके! किमिदानीं युक्तम्?। (ङ)

मद। इत्थ तुमं ज्जेव पण्डिओ। (च)

शर्वि। नैवम्। पश्य—

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः।
पुरुषाणान्तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥१८॥

(च) अत्र त्वमेव पण्डित।

---

अन्यदारापहरणादिति शेष। अजानता मदीयत्वेन अनवगच्छता, एतेन जनेन, एव चौर्य्यम्। अतोऽस्य गुरुतरापराधो मम च कोपकारणं नास्तीति भाव।

(ङ) शर्वि इति। युक्तं कर्त्तुमुचितम्, वसन्तसेनाया कोपोपशमायेति शेष।

(च) मद इति। अत्र विषये। पण्डित सुचतुरत्वात् कर्त्तव्यावधारणक्षम। अतस्त्वमेव चिन्तयेति भाव।

स्त्रिय इति। एतत्प्रभृतय स्त्रियो हि स्त्रीजातय एव, निसर्गात् स्वभावादेव शास्त्रोपदेशं विनैवेत्यर्थ, पण्डिता खलु सङ्कटे कर्त्तव्यावधारणनिपुणा एव कथमन्यथा विभिन्नस्वभावानां पुरुषाणां चित्तवृत्तीरनुसरन्तीति भाव। तु किन्तु पुरुषाणां पाण्डित्यं नैपुण्यम्, शास्त्रैरेव उपदिश्यते शिक्ष्यते शास्त्रोपदेशेनैव जायत इत्यर्थ। अतो मदपेक्षया तवैव कर्त्तव्यावधारणे योग्यताधिक्यमिति भाव।

अत्र अप्रस्तुतस्त्रीपुरुषसामान्याभिधानात् प्रस्तुतमदनिकाशर्व्विलकरूपस्त्रीपुरुषविशेषप्रतीतेरप्रस्तुतप्रशंसा, पुरुषापेक्षया स्त्रीणामाधिक्यप्रतिपादनात् व्यतिरेकश्च, अनयोरेकाश्रयानुप्रवेशरूप सङ्कर ॥१८॥

---

(ঘ) বসন্তসেনা। ইনিও সন্তুষ্ট হইতেছেন। তা, না জানিয়াই ইনি এইরূপ করিয়াছেন।

(ঙ) শর্ব্বিলক। মদনিকে! এখন কি করা উচিত।

(চ) মদনিকা। এ বিষয়ে তুমিই অভিজ্ঞ।

শর্ব্বিলক। তাহা নহে। দেখ—

मद । सव्विलअ ! जइ मम वअणं सुणीअदि, ता तस्स ज्जेव महाणुभावस्स पडिणिज्जादेहि । (क)

शर्वि । मदनिके ! यद्यसौ राजकुले मां कथयति ? । (ख)

मद । ण चन्दादो आदवो होदि । (ग)

वसन्त । साहु, मदणिए ! साहु । (घ)

(क) शर्विलक ! यदि मम वचनं श्रूयते, तत् तस्यैव महानुभावस्य प्रतिनिर्यातय ।
(ग) न चन्द्रादातपो भवति । (घ) साधु, मदनिके ! साधु ।

---

(क) मद इति । तत् तदा, महानुभावस्य समस्तसद्गुणशालितया महाप्रभावस्य, तस्य चारुदत्तस्यैव समीपे प्रतिनिर्यातय स्वयमेव गत्वा प्रत्यर्पय ।

(ख) शर्वि इति । असौ चारुदत्तः राजकुले गृहे विचारकसमीपे इत्यर्थः, मां कथयति मामुद्दिश्य 'एतदलङ्कारस्य चौरोऽयम्' इति वक्ष्यतीत्यर्थः । तदा तु मे विपत्तिरिति भावः ।

(ग) मद इति । यथा चन्द्रादातपो न भवति, तथा सर्वदैव परोपकारिणश्चारुदत्तात् तवापकारो न भविष्यतीति भावः ।

अतएवात्र कथनादप्रस्तुतात् प्रस्तुतस्यप्रतीतेरप्रस्तुतप्रशंसालङ्कारः । तथा प्रगमनं नाम प्रतिमुखसन्धेरङ्गम् । यथा साहित्यदर्पणे—

"प्रगमनं वाक्यं स्यादुत्तरोत्तरम् ।"

---

এই সকল স্ত্রীলোকেরা স্বভাবতই অভিজ্ঞ, কিন্তু পুরুষদিগের অভিজ্ঞতা শাস্ত্রশিক্ষাতেই জন্মিয়া থাকে ॥১৯॥

(ক) মদনিকা। শর্বিলক! যদি আমার কথা শোন, তবে এই অলঙ্কার সেই মহাত্মার নিকটই প্রত্যর্পণ কর।

(খ) শর্বিলক। মদনিকা। যদি উনি রাজদ্বারে আমাকে বলিয়া দেন ?।

(গ) মদনিকা। চন্দ্র হইতে রৌদ্র হয় না।

शर्वि । मदनिके !

न खलु मम विषादः साहसेऽस्मिन् भयं वा
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम् ? ।
जनयति मम चेदं कुत्सितं कर्म्म लज्जां
नृपतिरिह शठानां मादृशां किं नु कुर्य्यात् ? ॥२०॥

---

(घ) वसन्त इति । उपयुक्तोत्तरदानात् प्रियतमस्य समाचार साधुवाद ।

नेति । अस्मिन् साहसे चौरितद्रव्यस्य पुनः प्रत्यर्पणरूपे मनोज्ञकार्य्ये मम विषाद अवसाद चेतसोऽस्वास्थ्यमिति यावत्, भयं वा, न खलु वर्त्तत इति शेष । हि तथाहि, त्वं तस्य साधोः सदयस्य, गुणान् परापकारनिवृत्ति परोपकारप्रवृत्तिप्रभृतिधर्मान्, किमर्थं कथयसि ? तस्य तादृशगुणानां सर्वजनविदितया ममापि सर्वथैव विदितत्वात् नास्ति तव कथनापेक्षा, अतश्च स कथमपि ममापकारं न करिष्यतीत्यवधारणात् मम विषादो नास्तीति भाव । किन्तु इदं कुत्सितं कर्म्म मा संगर्हितं चौर्य्यकार्य्यमेव, "वा ष्यादिकल्पोपमयोरिवार्थे च समुच्चये" इति विश्व । कर्त्तृ, मम लज्जां जनयति, तत्-समीपे गन्तुमिति भाव । ननु भयं कथं नास्तीत्याह—इह अस्मिन् अपराधे, नृपतिः ईदृशां धूर्त्तानाम्, किं नु शासनं कुर्य्यात् कर्त्तुं शक्नुयात् ? अपि तु किमपि नैवेत्यर्थं । नृपतिरादौ मां धर्त्तुमेव न शक्नुयात्, धृते च प्रमाणोपस्थापनेऽपुत्रेण निर्दोष एव प्रतिपादितो भवेयमिति नास्ति भयमिति भाव ।

अत्र व्याख्यायामर्थ तद्विशा वाक्यार्थ हेतुक काव्यलिङ्गद्वयस्य मिथो निरपेक्षतया संसृष्टि ।

मालिनी वृत्तम् ॥२०॥

---

(ঘ) বসন্তসেনা । সাধু, মদনিকে ! সাধু ।

শর্ব্বিলক । মদনিকে ! এই সাহসের কার্য্যে, আমার মনের দুর্ব্বলতা বা ভয় হইতেছে না, সুতরাং তুমি কি জন্য সেই সাধুর গুণকীর্ত্তন করিতেছ । এই গর্হিত কার্য্যই, তাঁহার নিকটে যাইতে আমার লজ্জা

तथापि नीतिविरुद्धमेतत्। अन्य उपायश्चिन्त्यताम्। (ङ)

मद। सो अअं अवरो उवाओ। (च)

वसन्त। को क्खु अवरो उवाओ हुविस्सदि। (छ)

मद। तस्स ज्जेव अज्जस्स केरओ भविअ, एद अलङ्कारअं अज्जआए उवणेहि। (ज)

शर्वि। एवं कृते किं भवति?।

मद। तुमं दाव अचोरो, सो वि अज्जो अरिणो, अज्जआए सक अलङ्कारअं उवगदं भोदि। (झ)

(च) सोऽयमपर उपायः।

(छ) क खलु अपर उपायो भविष्यति।

(ज) तस्यैव आर्यस्य सम्बन्धी भूत्वा, एतमलङ्कारकमार्याया उपनय।

(ङ) तस्यैव वस्तेन लज्जासङ्कोच विहाय स्वयमर्पयस्व सद्यस्तामित्याह तथापीति। एतत् चौरितद्रव्यस्य प्रत्यर्पणञ्च चौरस्यैव तत्स्वामिसमीपे गमनम् नीतिविरुद्ध चौरसमाजव्यवहारविरुद्धम्।

(ज) मद इति। तस्यैव आर्यस्य चारुदत्तस्य सम्बन्धी यत्किञ्चिद्भृत्यादिसम्बन्धवान्। आर्याया वसन्तसेनायाः समीपे।

জন্মাইতেছে। নাজা এই অপবাদে আমার মত ধূর্ত্তদিগের কি করিতে পারেন? ॥২০॥

(ঙ) তথাপি ইহা নীতিবিরুদ্ধ। অতএব অন্য উপায় চিন্তা কর।

(চ) মদনিকা। এই সেই আর একটা উপায়।

(ছ) বসন্তসেনা। অন্য উপায় কি হইবে?।

(জ) মদনিকা। তুমি সেই আর্য্য চারুদত্তের লোক হইয়া, এই অলঙ্কার আর্য্যা বসন্তসেনার নিকট লইয়া যাও।

শর্ব্বিলক। এরূপ করিলে কি হইবে?।

शर्वि। ननु! अतिसाहसमेतत्। (ञ)

मद। अज्ज! उवणेहि। अण्णधा अदिसाहसं। (ट)

वसन्त। साहु, मदणिए! साहु। अभुजिस्साए विअ मन्तिदं। (ठ)

---

(झ) त्वं तावदचौरः, सोऽपि आर्य्यः अनृणः, आर्य्यायाः स्वकः अलङ्कारकः उपगतो भवति।

(ट) आर्य्य! उपनय। अन्यथा अतिसाहसम्।

(ठ) साधु, मदनिके! साधु। अभुजिष्ययैव मन्त्रितम्।

---

(झ) मद इति। सोऽपि आर्य्यः चारुदत्तः, अनृणः, न्यासस्य येन केनापि प्रकारेण पुनः स्वामिनीहस्त एव प्रत्यर्पणादिति भावः। स्वकः स्वकीयः। उपगतः प्राप्तः।

(ञ) शर्व्वि इति। नन्विति सम्बोधने। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। एतत्—तत्प्रकारेण वसन्तसेनायाः समर्पणम्, अतिसाहसं गुरुतरमनीषत्-कार्य्यम्, सर्व्वेषामेव मिथ्याख्यापकानां प्रतिपादनप्रवर्त्तैरिति भावः। तेनैतदपि न पारयामीति व्यज्यते।

(ट) मद इति। उपनय वसन्तसेनायाः समीपे एतमलङ्कारमिति शेषः। अन्यथा तत्साध्यकरणे, अतिसाहसं गुरुतरसाहसकार्य्यं स्यादिति शेषः, उभाभ्यामेव चारुदत्त-वसन्तसेनाभ्यां राजद्वारे तदभियोगसम्भवादिति भावः।

(ठ) वसन्त इति। अभुजिष्ययैव अदास्या व, मन्त्रितमुक्तं युक्तिर्दत्ते त्यर्थः। प्रायेण वर्व्वरस्वभावा दास्य एव युक्तेर्दातुमक्षमत्वादित्याशयः।

---

(ঝ) মদনিকা। তুমি চোর হইলে না, চারুদত্তও অনৃণী হই-লেন, বসন্তসেনাও নিজের অলঙ্কার পাইলেন।

(ঞ) শর্বিলক। ওহে! এটা গুরুতর সাহসের কাজ।

(ট) মদনিকা। ওহে! বসন্তসেনার নিকটেই লইয়া যাও, না হইলেই গুরুতর সাহসের কাজ হইবে।

शर्वि। मयाप्ता महती बुद्धिर्भवतीमनुगच्छता।

निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ॥२१॥

मद। तेण हि तुमं इमस्सिं कामदेवगेहे मुहुत्तअं चिट्ठ, जाव अज्जआए तुह आगमणं णिवेदेमि। (ड)

शर्वि। एवं भवतु।

मद। उपसृत्य। अज्जए! एसो क्खु चारुदत्तस्स सआसादो वम्हणो आअदो। (ढ)

(ड) तेन हि त्वमस्मिन् कामदेवगेहे मुहूर्त्तकं तिष्ठ, यावदार्य्यायै तवागमनं निवेदयामि।

(ढ) आर्य्ये। एष खलु चारुदत्तस्य सकाशात् ब्राह्मण आगतः।

---

मयेति। भवतीं त्वाम्, अनुगच्छता कर्त्तव्यबोधाय अनुसरता मया, महती बुद्धिः आप्ता प्राप्ता। तथा च नष्ट अप्रकाशितत्वाददर्शनं गतश्चन्द्रो यस्या तस्यामन्धकाराच्छन्नायामित्यर्थः, निशायाम्, मार्गदर्शकः पथिभ्रान्तस्य गन्तव्यपथप्रदर्शको जनो दुर्लभः। यथाहि अन्धकाराच्छन्नायां निशायां पथिभ्रान्तस्य गन्तव्यपथप्रदर्शक इव कर्त्तव्यमूढस्य ममेदानीं कर्त्तव्यमुपदिशन्ती [illegible] परमबन्धुरसीत्यभिप्रायः।

अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥२१॥

---

(ঢ) বসন্তসেনা। সাধু, মদনিকা! সাধু, তুমি অদাসীর ন্যায় বলিয়াছ।

শর্বিলক। তোমার অনুসরণ করিয়া আমি গুরুতর বুদ্ধি লাভ করিলাম। চন্দ্র অস্তমিত হইলে রাত্রিতে পথ-প্রদর্শক লোক দুর্লভ ॥২১॥

(ড) মদনিকা। তা হইলে, আমি আর্য্যা বসন্তসেনার নিকট যে পর্য্যন্ত তোমার আগমন নিবেদন করি, সে পর্য্যন্ত তুমি এই কামদেবগৃহে একটু কাল থাক।

শর্বিলক। এইরূপই হউক।

वसन्त। हञ्जे! केरअं त्ति कधं तुमं जाणासि?। (ण)

मद। अज्जए! अत्तकेरअं पि ण जाणामि?। (त)

वसन्त। स्वगतं सशिरःकम्पं विहस्य। जुज्जदि प्रकाश्यम्। पविसदु। (थ)

मद। जं अज्जआ आणवेदि। उपगम्य। पविसदु सव्विलओ। (द)

(ण) हञ्जे! (तस्य) सम्बन्धीति कथं त्वं जानासि?।

(त) आर्य्ये! आत्मसम्बन्धिनमपि न जानामि?।

(थ) युज्यते। प्रविशतु।

(द) यदार्य्या आज्ञापयति। प्रविशतु शर्व्विलक।

---

(ण) वसन्त इति। सम्बन्धी चारुदत्तसम्पर्कवान्।

(त) मद इति। आत्मसम्बन्धिनमपि आत्मीयमपि। भवत्याः प्रियतमसम्बन्धित्वेन भवत्या आत्मसम्बन्धित्वात् भवद्दास्या ममापि आत्मसम्बन्धित्वमस्तीति भावः।

(थ) वसन्त इति। शिरःकम्पेन अनुमोदनसूचकमस्तकाम्पनेन सहितं सशिरःकम्पम्। युज्यते अस्मिन् जने तवात्मसम्बन्धित्वमिति शेषः, आत्मन एव प्रियतमत्वादिति भावः। पूर्वं मदनिकया वसन्तसेनायाः प्रियतमसम्बन्धित्वेनात्मसम्बन्धित्वमुक्तम्, इदानीं वसन्तसेनया तु तत्प्रियतमत्वेनैव तदात्मसम्बन्धित्वं प्रतिपादितमिति बोध्यम्।

---

(ঢ) মদনিকা। (বসন্তসেনার নিকট উপস্থিত হইয়া) আর্য্যে। চারুদত্তের নিকট হইতে এই একটী ব্রাহ্মণ আসিয়াছেন।

(ণ) বসন্তসেনা। ওলো! চারুদত্তের ইহা তুমি কি করিয়া জানিলে?।

(ত) মদনিকা। আর্য্যে! নিজের লোককেও জানি না?।

(থ) বসন্তসেনা। (মস্তককম্পনের সহিত হাস্য করিয়া স্বগত) সঙ্গত বটে। (প্রকাশ্যে) প্রবেশ করুন।

शर्वि॑। उपसृत्य सवैलक्ष्यम्। स्वस्ति भवत्यै। (ध)

वसन्त। अज्ज। वन्दामि। उवविसदु अज्जो। (न)

शर्वि॑। सार्थवाहस्त्वां विज्ञापयति—जर्जरत्वाद्गृहस्य दूरक्ष्यमिदं भाण्डम्, तद्गृह्यताम्। इति मदनिकाया समर्प्य प्रस्थित। (प)

(न) आर्य। वन्दे। उपविशतु आर्य।

---

अतएवोक्तमदनिकावाक्य दर्पणोक्तचतुर्थपताकास्थानम्। तथा च साहित्यदर्पणे—

"द्व्यर्थो वचनविन्यास सुश्लिष्ट काव्ययोजित।
प्रधानार्थान्तराक्षेपी पताकास्थानक परम्॥"

अत्र च मदनिकाशर्विलकपरिणयरूपप्रधानार्थान्तराक्षेप उन्नेय, परिणीतत्वेनैव शर्विलकस्य मदनिकाया आत्मसम्बन्धित्वसम्भवात्।

(ध) शर्वि इति। वैलक्ष्येण लज्जासङ्कोचेन सहेति सवैलक्ष्यम्। लज्जासङ्कोचस्तु आत्मनश्चौरत्वादिति बोध्यम्। भवत्यै स्वस्ति मङ्गलं भवत्विति शेष।

"स्वस्त्याशीःक्षेमपुण्यादौ" इत्यमर। भवत्यै इति "नमःस्वस्ति—" इत्यादिना चतुर्थी।

(प) शर्वि इति। सार्थवाहो वणिक्, स च प्रकरणाच्चारुदत्त। अत्र निरुप-पदसार्थवाहशब्दप्रयोगात् चारुदत्तेन सहात्मन सम्बन्धित्वेन समानस्थानवर्तित्वं सूचितम्, न पुनरनुचरत्वमित्यवधेयम्। गृहस्य जर्जरत्वात् पुरातनतया जीर्णत्वात्, इदं भाण्ड सुवर्णभूषणरूपं दुःखेन रक्ष्यते इति हेतो सर्वदा सतर्कभावेन रक्षणीयतया कार्यान्तर-व्यापृतानामस्माकं क्लेशेन रक्षणीयमित्यर्थ। स्वामिन्या वसनभूषणादिकं दास्यैव रक्षतीति

---

(न) মদনিকা। আর্য্যা যাহা আদেশ করেন। (নিকটে যাইয়া) শর্ব্বিলক প্রবেশ করুন।

(ধ) শর্ব্বিলক। (নিকটে উপস্থিত হইয়া সলজ্জভাবে) আপনার মঙ্গল হউক।

(ন) বসন্তসেনা। আর্য্য! প্রণাম করি। আপনি উপবেশন করুন।

वसन्त। अज्ज! ममावि दाव पडिसन्देसं तहिं अज्जो णेदु। (फ)

शर्वि। स्वगतम्। कस्तत्र यास्यति? प्रकाशम्। कः प्रतिसन्देशः?। (ब)

वसन्त। पडिच्छदु अज्जो मदणिअं। (भ)

(फ) आर्य्य! ममापि तावत् प्रतिसन्देशं तत्रार्य्यो नयतु।

(भ) प्रतीच्छतु आर्य्यो मदनिकाम्।

---

मदनिकायाः समीपे समर्पणम्। तेन च वसन्तसेनाया धनित्वगौरवातिशयौ दर्शितौ इति बोध्यम्। प्रस्थित प्रस्थातुमुद्यत।

(फ) वसन्त इति। आर्य्यो भवान्। तस्मिन् चारुदत्तसमीपे। प्रतिसन्देशं प्रतिवाचिकम्।

(ब) शर्वि इति। कस्तत्र यास्यति? कोऽपि नैवेत्यर्थः, लज्जावशाद्गमनाशक्यत्वादिति भाव।

(भ) वसन्त इति। प्रतीच्छतु गृह्णातु। अयमेव प्रतिसन्देशवाक्यलक्ष्यं वक्तव्य, स एव च मे प्रतिसन्देश इति भाव।

---

(প) শর্ব্বিলক। বণিক্ (চারুদত্ত) আপনাকে জানাইতেছেন— "আমার বাড়ী জীর্ণ বলিয়া, এই অলঙ্কার রক্ষা করা কষ্ট, তা' গ্রহণ করুন।" (এই বলিয়া মদনিকার হস্তে অলঙ্কার অর্পণ করিয়া প্রস্থান করিবার উদ্যোগ করিল।)

(ফ) বসন্তসেনা। আর্য্য! আপনি সেখানে আমার প্রত্যুত্তর নিয়া যা'ন।

(ব) শর্ব্বিলক। (স্বগত) কে সেখানে যাইবে?। (প্রকাশ্যে) কি প্রত্যুত্তর?।

(ভ) বসন্তসেনা। আপনি মদনিকাকে গ্রহণ করুন।

शर्व्वि । भवति ! न खल्ववगच्छामि । (म)

वसन्त । अहं अवगच्छामि । (य)

शर्व्वि । कथमिव ?।

वसन्त । अहं अज्जचारुदत्तेण भणिदा—"जो इमं अलङ्कारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा ।" ता सो ज्जेव एदं दे देदित्ति एव्वं अज्जेण अवगच्छिदव्वं । (र)

शर्व्वि । स्वगतम् । अये । विज्ञातोऽहमनया । प्रकाशम् । साधु, आर्य्यचारुदत्त । साधु । (ल)

(य) अहमवगच्छामि ।

(र) अहमार्य्यचारुदत्तेन भणिता—"य इममलङ्कारकं समर्पयिष्यति, तस्य त्वया मदनिका दातव्या"। तत् स एव एतां ते ददातीति । एवमार्य्येण अवगन्तव्यम् ।

---

(म) शर्व्वि इति । न खल्ववगच्छामि भवत्या वाक्यार्थमिति शेषः । प्रार्थनाया-मङ्गतायामपि अप्रार्थितफलत्वात् दानप्रस्तावो मां विस्मापयतीति भावः ।

(य) वसन्त इति । कौतुकोक्तिरियम् ।

(र) वसन्त इति । एतां मदनिकाम् । आर्य्येण भवता ।

(ल) शर्व्वि इति । विज्ञातो मदनिकाप्रार्थित्वेनावगतः । वयमनया ईदृश-मसम्भवमुपन्यस्य दिव्यागय ।

---

(ম) শর্ব্বিলক । আমি আপনার কথার অর্থ বুঝিতেছি না ।

(য) বসন্তসেনা । আমি বুঝিতেছি ।

শর্ব্বিলক । কি রকম ? ।

(র) বসন্তসেনা । আর্য্য চারুদত্ত আমাকে বলিয়াছেন যে—"এই অলঙ্কার যে দিয়া দিবে, তাহার হস্তে তুমি মদনিকাকে দান করিবে ।" তা' তিনিই ইহাকে দান করিতেছেন, ইহা আপনি জানিবেন ।

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा ।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥२२॥

अपि च ।

गुणेषु यत्नः पुरुषेण कार्य्यो न किञ्चिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥२३॥

गुणेष्विति । पुरुषैः सदा गुणेष्वेव हि दयौदार्य्यादिगुणार्जनेष्वेव, प्रयत्नः कर्त्तव्यः, न धनार्जनादिष्विति भावः । कुत इत्याह—गुणयुक्तो दरिद्रोऽपि जनः, अगुणैर्दयौदार्य्यादिगुणविहीनैः ईश्वरैर्धनिभिः, न समस्तुल्यः, अपि तु अधिक एवेत्यर्थः, निर्गुणधनिभिर्गणित साधारणदीनतामात्रादिति भावः ।

अत्र गुणयुक्तदरिद्रसामान्यात् चारुदत्तरूपगुणयुक्तदरिद्रविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, परार्द्धार्थरूपकारणेन पूर्व्वार्द्धार्थरूपकार्य्यस्य समर्थनादर्थान्तरन्यासश्च, अनयोरङ्गाङ्गिभावेन सङ्करः । "य कौमारहरः स एव हि वरः—" इत्यादिवत् 'एव हि' शब्दद्वयमेव अन्यतरनियम सूचयतीति न हिशब्दोपादानादपार्थकत्वदोषः ॥२२॥

उक्तमर्थमेवाद्य किञ्चिद्विशेषप्रतिपादनाय पुनराह गुणेष्विति । पुरुषेण गुणेषु दयौदार्य्यादिगुणार्ज्जनेषु यत्नः कार्य्यः कर्त्तव्यः । कथमेतदित्याह—गुणानां सताम्, किञ्चिदपि वस्तु न अप्राप्यतमम् अपि तु सर्व्वमेव प्राप्यमित्यर्थः । कुत इत्यमेतदित्याह—उडुपेन नक्षत्रपतिना चन्द्रेण गुणप्रकर्षात् आत्मनः सौन्दर्य्यशीतलत्वादिगुणातिरेकात्, अलङ्घ्यम् अन्येन लङ्घयितुमशक्यमपि शम्भोर्महादेवस्य उत्तमाङ्गं मस्तकम्, उल्लङ्घितमारूढम् ।

अत्रापि प्रथमचरणार्थरूपकार्य्यस्य द्वितीयचरणार्थरूपकारणेन समर्थनादर्थान्तर

---

(न) शर्व्विलक । (স্বগত) ও ! ইনি আমাকে জানিয়াছেন। (প্রকাশ্যে) সাধু, আর্য্য চারুদত্ত ! সাধু।

মানুষ, গুণোপার্জ্জন করিবার জন্য সর্ব্বদা চেষ্টা করিবে। কারণ, গুণবান দরিদ্রও, নির্গুণ ধনীদিগের সমান নহে ॥২২॥

আরও, মানুষ, গুণোপার্জ্জন করিবার জন্য চেষ্টা করিবে। কারণ,

वसन्त। को एत्थ पवहणिओ। [व]

प्रविश्य सप्रवहणश्चेट। अज्जए! सज्जं पवहणं। [श]

वसन्त। हञ्जे मदणिए! सुदिट्ठं मं करेहि। दिस्सासि। आरुह पवहणं। सुमरेसि मं। [ष]

(व) कोऽत्र प्रवहणिक ?।

(श) आर्य्ये! सज्ज प्रवहणम्।

(ष) हञ्जे मदनिके! सुदृष्टां मा कुरु। दृश्यासि। आरोह प्रवहणम्। स्मरसि माम्।

न्यस्य, द्वितीयचरणार्थरूपसामान्यस्य द्वितीयार्द्धार्थरूपविशेषेण समर्थनादर्थान्तरन्यासश्च, अनयोरपि पूर्व्ववत् सङ्करः ।

अनयोः पुष्पं नाम प्रतिमुखसन्ध्यङ्गम्, "पुष्पं विशेषवचनं मतम्" इति साहित्यदर्पणलक्षणात् ।

"नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" "उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्" इति चामरः ।

उपेन्द्रवज्रा छन्दः ॥१३॥

(श) प्रवहणेति। प्रोह्यत आरोहणेनेति प्रवहणं गोशकटं तेन सहेति सप्रवहणं चेटः प्रवहणं सज्जीकृत्येत्यर्थः, चेटो गोशकटचालयिता दासः । सज्जं प्रस्तुतम्।

(ष) वसन्त इति। सुदृष्टां प्रकृष्टचित्ततया शोभनदृष्टिविषयीभूताम्। एतद् यथा न कदर्थ्य न दृष्टिविषयीभविष्यामीति भावः। दृश्यासि अर्पितक इति केच ।

গুণের অপ্রাপ্য কিছুই নাই। চন্দ্র, গুণাধিক্যবশতই অঙ্গের অলঙ্কারীয় মহাদেবের মস্তকে স্থান করিয়াছেন ॥২৩॥

(ব) বসন্তসেনা। এখানে গোশকটচালক কে আছ ?।

(শ) (গোশকটের সহিত প্রবেশ করিয়া) চেটা। আর্য্যে! শকট প্রস্তুত।

मद। रुदती। परिच्चत्तम्हि अज्जआए। इति पादयोः पतति। (म)

वसन्त। सम्पदं तुमं ज्जेव वन्दणीआ संवुत्ता। ता गच्छ, आरुह पवहणं। सुमरेसि मं। (ह)

शर्वि। स्वस्ति भवत्यै। मदनिके!

सुहृष्टः क्रियतामेष शिरसा वन्द्यतां जनः।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम् ॥२४॥

(म) परित्यक्तास्मि आर्यया।

(ह) साम्प्रतं त्वमेव वन्दनीया संवृत्ता। तद्गच्छ, आरोह प्रवहणम्। स्मरसि माम्।

---

एतेन मदनिका वसन्तसेनायाः क्रीतदासी आसीदिति प्रतीयते। स्मरसीति भविष्यत्सामीप्ये वर्त्तमाना, स्मरिष्यसीत्यर्थः।

(म) मद इति। पादयोः पतति, प्रथमं तत्कालीनवन्दनार्थमित्याशयः।

(ह) वसन्त इति। त्वं वन्दनीया, ब्राह्मणपरिगृहीतत्वादित्यभिप्रायः।

सुहृष्ट इति। एष वसन्तसेनारूपो जनः सुहृष्टः प्रीतिप्रफुल्लनेत्रैः शुभनिरीक्षित- क्रियताम्, एष शिरसा वन्द्यतां पुष्पाञ्जलिना नमस्कारः क्रियताम्। यत्र जने अनुग्रहेण त्वमिव ददाति मतीत्यर्थः, दुर्लभं साधारणस्त्रिया प्रायेण लब्धुमशक्यम्, वधूशब्द एव अवगुण्ठनं सकामपुरुषान्तरदृष्टिनिवारकत्वादावरणम्, ते तव उपरि, प्राप्तमुपस्थितम्। य एवं वधूं करोतीति कथं न सुहृष्टं शिरसा वन्दितञ्च करोतीति भावः।

---

(ম) বসন্তসেনা। মদনিকা! আমার প্রতি শুভদৃষ্টি কর। তুমি প্রদত্ত হইলে। এখন গাড়ীতে উঠ। আমাকে স্মরণ করিও।

(ম) মদনিকা। (কাঁদিতে কাঁদিতে) আপনি আমাকে পরিত্যাগ করিলেন। (এই বলিয়া পায়ের উপর পড়িল।)

(হ) বসন্তসেনা। এখন তুমিই বন্দনীয় হইয়াছ। তা যাও, গাড়ীতে উঠ। আমাকে স্মরণ করিও।

শর্বিলক। আপনার মঙ্গল হউক। মদনিকে!

इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः।

नेपथ्ये। कः कोऽत्र भोः!। राष्ट्रियः समाज्ञापयति— "एष खलु आर्य्यको गोपालदारको राजा भविष्यती"ति सिद्धादेशप्रत्यय-परित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे बन्धनागारे बद्धः। ततः स्वेषु स्वेषु स्थानेषु अप्रमत्तैर्भवद्भिर्भवितव्यम्। (ख)

अत्र पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार निरूढ केवलरूपकस्य अनयोरङ्गाङ्गिभावेन सङ्करः। तथा 'इदानीं' इत्येव यत्किञ्चित् पदस्य अनुक्ततया न्यूनपदत्वदोषः, स च 'यस्मात्ते दुर्लभं प्राप्तम्' इति पाठेन समाधेयः ॥२४॥

(ख) नेपथ्य इति। राष्ट्रियो राष्ट्रपालः उपरिस्तनरक्षिपुरुषः। आर्य्यक सज्जन। सज्जाया कपुत्रः। "महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः" इत्यमरः। गोपालदारको गोपपुत्रः। सिद्धादेशे सिद्धपुरुषवाक्ये यः प्रत्ययो विश्वासस्तेन परित्रस्तो नितान्तभीतस्तेन, पालकेन पालकनाम्ना। घोषात् आभीरपल्लीतः। "घोष आभीरपल्ली स्यात्" इत्यमरः। भवद्भिर्युष्माभिः रक्षिपुरुषैः, अप्रमत्तैः सावधानैः। यथायमार्य्यको नापसर्तुमर्हतीति भावः।

अत्र सन्दर्भश्चूलिका नाम अर्थोपक्षेपकः। यथा साहित्यदर्पणे—

"अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका।"

---

এই ব্যক্তির প্রতি শুভদৃষ্টি কর এবং সম্ভবমতে ইহাকে প্রণাম কর। যিনি অনুগ্রহ করিয়া দান করিলে, তুমি দুর্লভ বধূশব্দের আবরণ পাইয়াছ ॥২৪॥

( এই বলিয়া মদনিকার সহিত গাড়ীতে উঠিয়া যাইতে লাগিল )

(খ) নেপথ্যে। এখানে কে কে আছ হে। রক্ষিসেনাপতি আদেশ করিতেছেন—"আর্য্যকনামে এই গোপবালক রাজা হইবে" কোন সিদ্ধপুরুষের এইরূপবাক্যে বিশ্বাসবশতঃ ভীত হইয়া, রাজা পালক, গোপপল্লী হইতে তাহাকে আনিয়া ভয়ঙ্কর কারাগারে আবদ্ধ করিয়াছেন। সুতরাং তোমরা স্ব স্ব স্থানে সাবধান হইয়া থাকিবে।

शर्वि । (आकर्ण्य ।) कथं राज्ञा पालकेन प्रियसुहृदार्य्यको मे बद्धः । कलत्रवांश्चास्मि संवृत्तः । आः, कष्टम् । अथवा —(क)

दयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च ।
सम्प्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः ॥२५॥

भवतु, अवतरामि । (इत्यवतरति ।)

---

तथाच विरोधो नाम प्रतिमुखसन्धेरङ्गम्, "विरोधो व्यसनप्राप्तिः" इति तदीयलक्षणात् ।

(क) शर्वि इति । कलत्रवान् मया परिगृहीतस्त्रीसहितः । उभयोरेव द्वयस्य च पीयतया क परित्यज्य क गच्छेयं यामीत्यत कष्टमित्याशयः ।

अत्र तापनं नाम प्रतिमुखसन्धेरङ्गम् । यथा साहित्यदर्पणे—

"उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ।"

द्वयमिति । सुहृच्च वनिता च इदं द्वयं वस्तुयुगलम्, लोके नराणामतीव प्रियम् तु किन्तु, सम्प्रति कारायां बन्धनकाले, सुन्दरीणां वनितानां शतादपि, सुहृद्विशिष्टतमः पर्य्यवेक्षणीयत्वे उत्कृष्टतमः । तथा च स्वस्या वनितामुपेक्ष्यापि विपन्नं सुहृदं तदर्थमेवेदानीं मया पर्य्यवेक्षणीय इति भावः ।

अत्र पूर्वार्द्धे प्रस्तुतयोरेव सुहृद्वनितयोः प्रियत्वरूपैकगुणसम्बन्धात् तुल्ययोगिता, परार्द्धे च वनितापेक्षया सुहृद आधिक्यवर्णनात् व्यतिरेकः, अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा वनितेति प्रक्रम्य सुन्दरीणामित्यभिधानात् प्रक्रतिविपर्य्ययो भग्नप्रक्रमतादोषः, स तु 'सम्प्रति तु वनितानाम्' इति पाठेन परिहार्य्यः ।

आर्य्या जातिः ॥२५॥

---

(क) শর্ব্বিলক। (শুনিয়া) কি রাজা পালক, আমার প্রিয়সুহৃৎ আর্য্যককে আবদ্ধ করিয়াছেন।। হায় কি কষ্ট।। অথবা—

জগতে, সুহৃৎ ও ভার্য্যা এই দুইটী বস্তুই, মানুষের অত্যন্ত প্রিয়। কিন্তু এখন শত সুন্দরী ভার্য্যা হইতেও সুহৃৎ অত্যন্ত অধিক।২৫।

হউক, আমি অবতরণ করি। (এই বলিয়া গাড়ী হইতে নামিল।)

मद । सास्रमञ्जलिं बद्धा । एव्वं णेदं । ता परं णेदु मं अज्जउत्तो समीवं गुरुअणाणं । (ख)

शर्वि । साधु, प्रिये । साधु । अस्मच्चित्तसदृशमभिहितम् । चेटमुद्दिश्य । भद्र । जानीषे रेभिलस्य सार्थवाहस्य उदवसितम् ? (ग)

चेटः । अधइं । (घ)

शर्वि । तत्र प्रापय प्रियाम् ।

चेटः । जं अज्जो आणवेदि । (ङ)

(ख) एवमेतत् । तत्परं नयतु मामार्य्यपुत्र समीपं गुरुजनानाम् ।

(घ) अथकिम् ।

(ङ) यदार्य्य आज्ञापयति ।

---

(ख) मद इति । एवमेतत् त्वया यदुक्तं तत् सत्यमेवेत्यर्थः । तत् तस्मात् परम् अपरम्, गुरुजनानां समीपम् । वसन्तसेनाया दास्यान्मुक्तया पुनस्तद्गमनं नोचित मिति भावः ।

(ग) शर्वि इति । अस्माकं चित्तसदृशं चित्तवृत्त्यनुरूपम् । मयापीदानीमेतदेव चिन्तितमित्याशयः । रेभिलस्य तदाख्यस्य सार्थवाहस्य वणिजः, उदवसितं गृहम् [redacted]नीषे परिचिनोषि किमिति काकुः ।

---

(খ) মদনিকা। ( অঞ্জলি বন্ধন করিয়া, অশ্রুপাতের সহিত ) ইহা এইরূপ বটে। তবে আমাকে অদ্য গুরুজনের নিকট নিন্।

(গ) শর্বিলক। ভাল, প্রিয়ে! ভাল। তুমি আমার অভিপ্রায়ের অনুরূপই বলিয়াছ। ( শকটচালকের প্রতি ) ভদ্র! তুমি রেভিল-নামক বণিকের বাড়ী চেন ?।

(ঘ) শকটচালক। হাঁ।

শর্বিলক। সেইখানে প্রিয়াকে লইয়া যাও।

(ঙ) শকটচালক। আপনি যাহা আদেশ করেন।

मद। जधा अज्जउत्तो भणादि। अप्पमत्तेण दाव अज्ज-उत्तेण होदव्वं। इति निष्क्रान्ता। (च)

शर्वि। अहमिदानीम्—

ज्ञातीन् विटान् स्वभुजविक्रमलब्धवर्णान्
राजापमानकुपितांश्च नरेन्द्रभृत्यान्।
उत्तेजयामि सुहृदः परिमोक्षणाय
यौगन्धरायण इवोदयनस्य राज्ञः ॥२६॥

(च) यथा आर्य्यपुत्रो भणति, अप्रमत्तेन तावदार्य्यपुत्रेण भवितव्यम्।

---

(च) मद इति। यथा आर्य्यपुत्रो भणति, तथास्तु इति शेषः। अप्रमत्तेन अप्रमत्ततया सावधानेन। अन्यथा राज्ञो विरोधित्वेन विपद् शङ्केति भावः।

ज्ञातीनिति। उदयनस्य राज्ञो वत्सराजस्य परिमोक्षणाय, यौगन्धरायणस्तदाख्यस्तदीय मन्त्रीव, अहमिदानीम्, सुहृदो मित्रस्य आर्य्यकस्य, परिमोक्षणाय, ज्ञातीन् राज्ञो दायादान्, विटान् "विटस्तु धूर्त्तः" इत्यादिदर्पणादिलक्षितान् सुचतुरान् जनान्, स्वभुजविक्रमे आत्मबाहुबलप्रकाशे लब्धवर्णान् विचक्षणान् वीरान् इत्यर्थः तान्, तथा राजापमानेन राजकर्त्तृकापमानेन कुपितान् नरेन्द्रभृत्यान् तस्यैव राज्ञः अमात्यान् उत्तेजयामि राज्ञो विरुद्धत्वे उत्साहयामि। तथा सति राज्ञो ध्वंसेन अस्मदीयार्य्यकस्य मुक्तिर्भविष्यतीति भावः।

अत्र उत्तेजनाख्यैकया क्रियया अप्रस्तुतानामिव ज्ञात्यादीनां कर्त्तृतया अभिसम्बन्धात्

---

(চ) মদনিকা। আর্য্যপুত্র! আপনি যেরূপ বলিলেন, তাহাতে আপনি সর্ব্বদাই সাবধান হইবেন। (ইহার পর চলিয়া গেল।)

শর্ব্বিলক। পূর্ব্বে বৎসরাজ উদয়নের মুক্তির নিমিত্ত, তদীয় মন্ত্রী যৌগন্ধরায়ণের ন্যায় আমি এখন বন্ধু আর্য্যকের মুক্তির জন্য রাজা পালকের জ্ঞাতিবর্গকে, চতুর লোকসকলকে, আত্ম বাহুবলপ্রকাশে বিচক্ষণ বীরগণকে এবং রাজকর্ত্তৃক অপমানবশতঃ ক্রুদ্ধ রাজকর্ম্মচারীদিগকে (রাজার বিরুদ্ধে) উত্তেজিত করিব ॥২৬॥

अपि च। प्रियसुहृदमकारणे गृहीतं
रिपुभिरसाधुभिराहितात्मशङ्कैः।
सरभसमभिपत्य मोचयामि
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥२७॥

इति निष्क्रान्तः।

---

तुल्ययोगितालङ्कारः श्रौती उपमा च, अमीषां अप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। तथा राजनि पूर्वस्य नरेन्द्रे इत्यभिधानात् पूर्वोक्तिविषयो भग्नप्रक्रमतादोषः, एवं यौगन्धरायण उत्तेजयामास अहन्तु उत्तेजयामीति पुरुषभेदात् कालभेदाच्च अपरोऽपि भग्नप्रक्रमतादोषः, किन्तु नरेन्द्रमल्पेन इत्यत्र तदैवमल्पेन इति पाठे उत्तेजयन् हि फलवान् सुहृदो निमुक्तौ इति पाठे च तन्निरासः। न च तथात्वेऽपि यौगन्धरायणः फलवानभवत् अहन्तु फलवान् भविष्यामीति पुनः पुरुषभेदात् कालभेदाच्च भग्नप्रक्रमतायास्तादवस्थ्यमेव, पूर्वोक्त न्यूनपदतादोषश्चेति वाच्यम् अनभिहितपदवैषम्ये भग्नप्रक्रमताया अनुपपत्तेः भवत्यादीनाम् अध्याहारे न्यूनपदताया वामनादिभिरनङ्गीकृतत्वाच्च।

चण्डसेनो नाम उज्जयिनीराजो वत्सराजमुदयनं केनापि कारणेन कारागारे बद्धवान्। वत्सराजमन्त्री यौगन्धरायणस्तु चण्डसेनस्य श्याल्यादीनुत्तेज्य वत्सराजमुद्धारयामासेति कथा-सरित्सागरोपाख्यानमत्र द्रष्टव्यम्।

"लक्ष्मवर्णौ विचक्षणः" इत्यमरः। वसन्ततिलका वृत्तम् ॥२६॥

प्रियेति। आहिता धृता आत्मशङ्का आर्य्यकादात्मविपदाशङ्का यैस्तैः, असाधुभिः रिपुभिः पालकादिभिः कारणस्याभावे अकारणं तस्मिन् सत्यपि, गृहीतं कारायामाबद्धम्, अतएव राहुमुखे शशाङ्कबिम्बमिव तत्र च स्थितम् प्रियसुहृदमार्य्यकम् सरभसं सवेगम्, अभिपत्य उपस्थाय मोचयामि।

अत्र श्रौती समासगतोपमालङ्कारः। अध्यवसायो नाम नाट्यालङ्कारश्च, "प्रतिज्ञा-ध्यवसायकः" इति दर्पणलक्षणात्।

"रभसो वेगहर्षयोः" इति विश्वः। पुष्पिताग्रा वृत्तम् ॥२७॥

---

আরও, আশঙ্কিত দুরাত্মা শত্রুগণ, প্রিয়সুহৃৎ আর্য্যকে অকারণে

प्रविश्य चेटी। अज्जए! दिट्ठिआ वड्ढसि। अज्जचारुदत्तस्स सआसादो बम्हणो आअदो। (छ)

वसन्त। अहो! रमणीअदा अज्ज दिवसस्स। ता हञ्जे! आदरं बन्धुलेण समं पवेसेहि णं। (ज)

चेटी। जं अज्जआ आणवेदि। इति निष्क्रान्ता। (झ)

(छ) आर्ये! दिष्ट्या वर्द्धसे। आर्यचारुदत्तस्य सकाशात् ब्राह्मण आगत।

(ज) अहो! रमणीयता अद्य दिवसस्य। तत् हञ्जे! आदरं बन्धुलेन समं प्रवेशय एनम्।

(झ) यदार्या आज्ञापयति।

---

(ज) वसन्त इति। बन्धुलेन "परगृहललिता—" इत्यादिवक्ष्यमाणलक्षणेन पुरुषविशेषसमूहेन। एनं ब्राह्मणम्।

---

কারাগারে আবদ্ধ করিয়াছে, তিনি এখন রাহুমুখে চন্দ্রমণ্ডলের ন্যায় সেখানে অবস্থান করিতেছেন। অতএব আমি বেগে উপস্থিত হইয়া তাঁহাকে মুক্ত করিব ॥২৭॥

(এই বলিয়া চলিয়া গেল।)

(ছ) (প্রবেশ করিয়া) দাসী। আর্য্যে! ভাগ্যবশতঃ আপনি উন্নতিলাভ করিয়াছেন। আর্য্য চারুদত্তের নিকট হইতে একটী ব্রাহ্মণ আসিয়াছে।

(জ) বসন্তসেনা। অহো! অদ্যকার দিনের বড়ই রমণীয়তা দেখিতেছি। অতএব ঝি! বন্ধুলগণের সহিত তাঁহাকে সাদরে প্রবেশ করাও।

(ঝ) দাসী। আপনি যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেল।)

विदूषको बन्धुलैन सह प्रविशति ।

विदू । हीही भो ! तवच्चरणकिलेसविणिज्जिदेण रक्खसराआ रावणो पुप्फकेण विमाणेण गच्छदि, अहं उण बम्हणो अकिदतवच्चरणकिलेसो वि णरणारीजणेण (१) गच्छामि ! (ञ)

चेटी । पेक्खदु अज्जो अम्हकेरकं गेहदुआरं । (ट)

विदू । अवलोक्य सविस्मयम् । अहो ! सलिल-सित्त-मज्जिद-किदहरिदोवलेवणस्स, विविह-सुअन्धि-(२) कुसुमोवहार-चित्त-

(ञ) हीही भो । तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति, अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि ।

(ट) प्रेक्षतामार्य्य अस्मदीयं गृहद्वारम् ।

(ठ) अहो ! सलिल सिक्त मार्जित कृत-हरितोपलेपनस्य, विविध-सुगन्धिकुसुमोप-

(ञ) विदू इति । "हीही" इत्येकमेव हर्षद्योतकमव्ययम् । तथा च मेदिनी— "हीहीमव्दो विस्मयहास्ययो ।" तपश्चरणक्लेशेन विनिर्जित विनिर्जित्य कुवेरादानीतेन । गच्छतीति अध्याहर्त्तव्यमपदयोर्वर्त्तमाना । नरयुक्तो नारीजनस्तेन पुष्पकावदनेनेति भाव । अहो मम सौभाग्यमिति भाव ।

(ठ) विदू इति । अत्र षष्ठ्यन्तपदानि वसन्तसेनाभवनद्वारस्येति वक्ष्यमाणस्य

বন্ধুলগণের সহিত বিদূষকের প্রবেশ ।

(ঞ) বিদূষক । বেশ্ বেশ্ । রাক্ষসরাজ রাবণ, তপস্যা করার ক্লেশে নির্জিত পুষ্পকবিমানে গমন করিতেন, আর (গরীব) ব্রাহ্মণ আমি, তপস্যা করার ক্লেশ না করিয়াও, নর-নারীগণের সঙ্গে গমন করিতেছি ।

(ট) দাসী । আর্য্য ! আপনি আমাদের গৃহদ্বার দর্শন করুন ।

(১) অবরণারোজনেণ । (২) সুগন্ধ ।

लिहिद-भूमिभाअस्स, गअणतलालोअण-कोदूहल दूरुण्णामिद-सीसस्स, दोलाअमाणावलम्बिदेरावण-हत्थब्भमाइद-मल्लिआदाम-गुणालङ्किदस्स, समुच्छिद-दन्तिदन्ततोरणाव-भासिदस्स, मज्ञा-

द्वार चित्रलिखितभूमिभागस्य, गगनतलालोकन कौतूहलदूरोन्नमितशीर्षस्य, दोलायमानाव-लम्बितैरावण हस्त भ्रमायित मल्लिकादामगुणालङ्कृतस्य, समुच्छ्रित-दन्तिदन्त तोरणाव-

भासितस्य । आदौ सलिलेन सिक्त धौतम् अनन्तरञ्च मार्जित ततः हरितेन हरिद्वर्ण-रञ्जनद्रव्येण उपलिप्त यस्य तत्र तस्य । क्रमात् पदयोर्द्वयोः पदयोः कर्म्मधारय ।

विविधानां सुगन्धिकुसुमानामुपहारे सुन्दरभावेन विन्यासे चित्रे लिखित इव च निक्षिप्ते चित्रित इव भूमिभागो यत्र तस्य ।

गगनतलस्य आलोकनाय यत् कौतूहलं तेन दूरं अत्युच्चं उन्नमितमुन्नीलितं शीर्षं मस्तकं येन तस्य, तस्येव । अत्र प्रतीयमानोत्प्रेक्षालङ्कारः ।

दोलायमानौ वायुवेगेन सञ्चलितौ अवलम्बितौ नीचे लम्बितौ तथा ऐरावणहस्तस्य भ्रमो यस्मिन् स इव आचरितौ इति ऐरावणहस्तभ्रमायितौ ऐरावतहस्तिनः शुण्डाभ्रमजनकौ इत्यर्थः, यौ मल्लिकादामगुणौ मल्लिकाकुसुममालारूपौ तेन अलङ्कृतस्य भूषितस्य ।

समुच्छ्रितेन अत्युन्नतेन दन्तिदन्ततोरणेन हस्ति निर्म्मिततोरणेन अवभासितस्य शोभितस्य ।

शक । ( दर्शन করিয়া বিস্ময়ের সহিত । কি আশ্চর্য্য ! বসন্তসেনার ভবনদ্বারের কি অদ্ভুত সৌন্দর্য্য । এখানে প্রথমে জলদ্বারা ধৌত করিয়াছে এবং মার্জন করিয়াছে, পরে হরিদ্বর্ণ রঞ্জকদ্রব্য লেপন করিয়াছে, নানাবিধ সুগন্ধি পুষ্প সুন্দরভাবে বিন্যস্ত করায়, ইহার ভূমি ভাগ যেন চিত্রপটে চিত্রিত করিয়া রাখা হইয়াছে। আকাশতলদর্শন করিবার কৌতুকবশতঃ, মস্তক যেন অতিদূরে উত্তোলন করিয়াছে। বায়ুবেগে আন্দোলিত, অধোলম্বিত এবং ঐরাবতহস্তীর শুণ্ডের ভ্রমজনক মল্লিকাপুষ্পমালায় এই দ্বারটী অলঙ্কৃত হইয়াছে। অত্যুচ্চ হস্তিদন্তের

रअणोवहारोवसोहिणा पवणबलन्दोलणा-लम्बन्तचञ्चलग्गहत्थेण, "इदो एहि" त्ति वाहरन्तेण विअ मं सोहग्गपडाआणिवहेणोवसोहिदस्स, तोरणधरणत्थम्भवेदिआ-णिक्खित्त-समुल्लसन्तहरिद-चूदपल्लवललामफटिह मङ्गल-कलसाहिरामोहअपासस्स, महासुर-

भासितस्य, महारत्नोपहारशोभिना पवनबलान्दोलना-लम्बमानाग्रहस्तेन "इत एहि" इति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य, तोरणधरणस्तम्भवेदिका निक्षिप्तसमुल्लस-द्धरित चूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य, महासुर-वक्ष-स्थल दुर्भेद्य-

---

महारत्नानां चन्द्रकान्तादीनामुपहारेण ग्रथनेन शोभत इति तेन, पवनबलेन वायुवेगेन या आन्दोलना सञ्चालनं तया लम्बमानम् अधोलम्बमानकम्पितम् अग्रहस्तो हस्ताग्रं यस्य तेनेव स्थितेनेत्यर्थः। मां व्याहरतेव वदतेव स्थितेन, सौभाग्यपताकानिवहेन सौभाग्य-सूचकपताकासमूहेन, उपशोभितस्य। अत्र प्रतीयमानोत्प्रेक्षावाच्योत्प्रेक्षयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

तोरणधारणस्य ये स्तम्भाः स्तम्भानां या वेदिका मूले चत्वरभूमयस्तासु निक्षिप्तैः स्थापितैः, समुल्लसन्तः शोभमाना हरिताः पालाशवर्णाः चूतपल्लवा आम्रकिसलयानि येषु तैः, ललामानाम् उत्कृष्टानां स्फटिकानां निर्मिता इत्यर्थः। ये मङ्गलकलशा माङ्गलिकपूर्णकुम्भाः अभिरामं मनोहरम् उभयपार्श्वं यस्य तस्य तथोक्तस्य।

"ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः।

তোরণে এই দ্বারদেশ শোভিত হইয়াছে। চন্দ্রকান্তপ্রভৃতি মহারত্ন গ্রথিত থাকায় শোভিত, বায়ুর আন্দোলনে চঞ্চল এবং অধোলম্বিত, সুতরাং হস্তাগ্রের ন্যায় অবস্থিত, তাহাতে 'এইদিকে আইস' এই কথাই যেন আমাকে বলিতেছে,—এইরূপ সৌভাগ্যসূচক পতাকাসমূহে এই দ্বারদেশ শোভিত হইয়াছে। তোরণধারণস্তম্ভের নীচের বেদি দুইটার উপরে উৎকৃষ্ট স্ফটিকময় দুইটা মাঙ্গলিক কুম্ভ স্থাপিত করা হইয়াছে, সে গুলির উপরে হরিদ্বর্ণ সুন্দর আম্রপল্লব দেওয়া হইয়াছে, তাহাতে

वज्जत्थलदुब्भेज्जवज्जणिरन्तरपरिबद्धकणअकवाडस्स, दुग्गदजण-मणोरहाआसकरस्स, वसन्तसेणा-भवण-दुआरस्स सस्सिरीअदा। जं सच्चं मज्झत्थस्स वि जणस्स बलाहिट्टिं आआरेदि। (ठ)

चेटी। एदु एदु। इमं पढमं पओट्ठं पविसदु अज्जो। (ड)

विदू। प्रविश्यावलोक्य च। हीही भो! इधो वि पढमे पओट्ठे ससि-सङ्ख-मुणालसच्छाओ, विणिहिद-चुण्ण-मुट्ठिपाण्डुराओ,

---

वज्र-निरन्तरप्रतिबद्ध-कनक-कपाटस्य दुर्गतजनमनोरथायासकरस्य, वसन्तसेनाभवनद्वारस्य सश्रीकता। यत्सत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति।

(ड) एतु एतु। इमं प्रथमं प्रकोष्ठं प्रविशतु आर्यः।

(ढ) हीही भोः। इतोऽपि प्रथमे प्रकोष्ठे शशि शङ्ख-मृणालसच्छायाः, विनिहित-

---

महाप्रमाणा हिरण्यादीनां बहुमूल्यत्वात् दुर्भेद्यानि, वज्रैर्हीरकैः हीरकमयशङ्कुभि-रित्यर्थः, प्रतिबद्धानि उपरिनियुक्तानि च कनककपाटानि यत्र तस्य।

तथा दुर्गतानां दरिद्राणां जनानां ये मनोरथाः अभिलाषास्तेषाम् आयासं वार-वारमाकर्षणेन परिश्रमं करोतीति तस्य तथोक्तस्य, वसन्तसेनाया भवनद्वारस्य, सश्रीकता शोभाकान्तित्वम्। यत्सत्यमेतन्निश्चितमित्यर्थः, यत् मध्यस्थस्य उदासीनस्य विषयनिःस्पृहस्य जनस्य दृष्टिम्, बलात् आकारयति आमन्त्रयति आकर्षतीत्यर्थः, एत-द्भवनद्वारमिति शेषः।

---

দ্বারের উভয় পার্শ্ব অতি মনোহর দেখা যাইতেছে। ইহার স্বর্ণময় কপাটদ্বয় মহাবীরের বক্ষঃস্থলের ন্যায় দুর্ভেদ্য এবং ঘন ঘন হীরকশঙ্কু (পেরেক) দ্বারা বিদ্ধ রহিয়াছে। আর, এই দ্বারদেশটী, দরিদ্রলোকের অভিলাষের পরিশ্রমজনক। সুতরাং এই দ্বারদেশ, বলপূর্ব্বক উদাসীন ব্যক্তিরও দৃষ্টি আকর্ষণ করে।

(ড) দাসী। আর্য্য আসুন আসুন, এই প্রথম প্রকোষ্ঠে প্রবেশ করুন।

विविह-रअण-पडिबद्धकञ्चण-सोवाण-सोहिदाओ, पासादपन्तिओ, ओलम्बिदमुत्तादामेहिं फटिहवादाअणमुहचन्देहिं णिज्झाअन्तीविअ उज्जइणिं। सोत्तिओ विअ सुहोवविट्ठो णिद्दाअदि

चूर्णमुष्टिपाण्डुरा, विविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिता, प्रासादपङ्क्तय, अवलम्बितमुक्तादामभि स्फटिकवातायनमुखचन्द्रैर्निध्यायन्तीव उज्जयिनीम्। श्रोत्रिय इव

---

(ढ) विदू इति इतोऽपि अस्मिन्नपि। प्रकोष्ठे कक्षायाम्। शशिनश्चन्द्रस्य शङ्खस्य मृणालस्य च समाना छाया कान्तिर्यासां ताः। "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः। विनिहितैः सर्वत्र समानभावेन स्थापितैः चूर्णमुष्टिभिः मुष्टिः मुष्टिपरिमितचूर्णैः पाण्डुराः शुभ्रवर्णाः। तथा विविधरत्नैः प्रतिबद्धानि खचितानि यानि काञ्चनसोपानानि तैः शोभिताः। अवलम्बितानि अधोलम्बितानि मुक्तादामानि ग्रथितमौक्तिकानि मुक्तामयहाराश्च येषु तैः, स्फटिकवातायनान्येव स्फटिकनिर्मित-गवाक्षा एव मुखचन्द्राः तैः उज्जयिनीम्, निध्यायन्तीव अवलोकयन्तीव। अत्र रूपकसङ्कीर्णः क्रियोत्प्रेक्षालङ्कारः तेन च उज्जयिन्याः शोभातिशयो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

श्रोत्रियो ब्राह्मणविशेषः। सुखोपविष्ट एकत्र उत्कटविषयस्पृहाभावेन निश्चिन्त-त्वात् अन्यत्र [illegible] गृहस्य सुरचिततया निरुद्वेगत्वादिति भावः। अत्र समानगत-श्रौतोपमालङ्कारः।

श्रोत्रियमाह याज्ञवल्क्ये देवल—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा। षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्॥"

(ঢ) বিদূষক। (প্রবেশপূর্বক দর্শন করিয়া) ওহ! অত্যন্ত আশ্চর্য্য ত। এই প্রথম প্রকোষ্ঠে চন্দ্র, শঙ্খ ও মৃণালের সমান কান্তি-সমন্বিত, মুষ্টিপরিমিত চূর্ণ প্রদান করায় শুভ্রবর্ণ এবং নানাবিধ-রত্ন-খচিত স্বর্ণময় সোপানে শোভিত প্রাসাদশ্রেণী, লম্বিত-মুক্তামালাসমন্বিত স্ফটিকময় গবাক্ষরূপ মুখচন্দ্রদ্বারা উজ্জয়িনী নগরীকে যেন দর্শন করি-

दोवारिओ। सद्धा कलमोदणेण पलोहिदा ण भक्खन्ति वाअसा वलिं सुधासवण्णदाए। आदिसदु भोदी। (ख)

चेटी। एदु एदु अज्जो। इमं दुदिअं पओट्टं पविसदु अज्जो। (ग)

विदू। प्रविश्यावलोक्य च। ही ही भो! इधो वि दुदिए पओट्टे पज्जन्तोवणीद-जवस-तुस-कवल-सुपुट्ठा-तेल्लब्भङ्गिदविसाणा वद्धा पवहण-वइल्ला। अअं अवरदो अवमाणिदो विअ कुलीणो

सुखोपविष्टो निद्राति दौवारिकः। श्रद्धया कलमौदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया। आदिशतु भवती।

(ग) एतु एतु आर्य्य। इम द्वितीय प्रकोष्ठ प्रविशतु आर्य्य।

(घ) हीही भो! इतोऽपि द्वितीये प्रकोष्ठे पर्य्यन्तोपनीत यवस तुष कवल-सुपुष्टास्तैलाभ्यक्तविषाणा बद्धा प्रवहणबलीवर्द्दाः। अयमपरतः अवमानित इव कुलीनो

तथा वायसा काका श्रद्धया दधियुक्तेन, कलमस्य धान्यविशेषस्य ओदनेन अन्नेन तद्दलिघटकनैव, प्रलोभिता लुब्धीकृता अपि, सुधासवर्ण तया धवलतया समन्तात् तद्बलि-घटकानुस्यूतसवर्णं तया बलिं प्रासादभित्तिमालम्बी दत्त गृहस्थस्य निक्षेपार्थं दधिमिश्रित-कलमौदनरूपमुपहारम् न भक्षयन्ति, समन्ताल्लिप्तसुधासमानादिति भावः।

अत्र वायसानामन्नेषु सुधाभ्रमाद्भ्रान्तिमानलङ्कारो वाचकाभावाद्व्यङ्ग्यते।

आदिशतु गन्तव्यपथमिति शेषः।

ছেন। দৌবারিকগণ, শ্রোত্রিয় ব্রাহ্মণের ন্যায় সুখে উপবেশন [illegible] নিদ্রা যাইতেছে। কাকপক্ষিগণ অন্নের লোভী হইয়াও, [illegible] সমানবর্ণ বলিয়া, (তাহার ভ্রমবশতঃ) দধিযুক্ত কলমধান্যের [illegible] অন্নরূপ পূজোপহার ভক্ষণ করিতেছে না। তুমি পথ [illegible]

(গ) দাসী। আর্য্য আসুন আসুন, এই দ্বিতীয় [illegible] করুন।

दीहं णीससदि सेरिहो। इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स। इदो इदो अवराणं अस्साणं केसकप्पणा करीअदि। अअं अवरो पाड़च्चरो विअ दिढ़वद्धो

दीर्घं निःश्वसिति सैरिभः। इतश्च अपनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य। इत इतः

---

(त) विदू इति। पर्य्यन्ते मुखप्रान्ते उपनीतानामुपस्थापितानां यवसानां घासानां तुषाणां धान्यत्वचाञ्च कवलैर्ग्रासैः, सुपुष्टाः पुष्टदेहाः, तैलेन अभ्यक्तानि लिप्तानि विषाणानि शृङ्गानि येषां ते बलीवर्दाः, प्रवहणबलीवर्दाः शकटवाहिनो वृषभाः, वर्त्तन्ते इति शेषः।

"घासो यवसम्" "कडङ्गरो बुष क्लीवे धान्यत्वचि तुषः पुमान्।" इति चामरः।

कुलीन उच्चकुलोत्पन्नो जन। सैरिभो महिषः। श्रौतोपमालङ्कारः। न चात्र 'हरवन्नीलकण्ठोऽयं विराजति शिखावल' इति दर्पणोदाहृतवत् उपमानस्य जातिप्रमाधिक्यादनुचितार्थत्वदोष इति वाच्यम्, कौतुककरणाय ईदृशवैषम्येणाभिधानस्यैव विदूषकस्य स्वभावत्वात्।

"लुलापो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरः।

अपनीत निवारित युद्ध यस्य तस्य। श्रौत्युपमालङ्कारः। पूर्ववदनुचितार्थत्वदोषाभाव।

केशानां कल्पना पारिपाट्येन स्थापना।

---

(त) विदूषक। (प्रवेशपूर्वक दर्शन करिया) হে! বড়ই আশ্চর্য্য ত। এই দ্বিতীয় প্রকোষ্ঠেও, কতকগুলি শকটচালক বৃষ বহিয়াছে, (উহাদের) সম্মুখে প্রদত্ত ঘাস ও চিটা ভক্ষণ করিয়া, উহারা খুব পুষ্ট হইয়াছে এবং উহাদের শিং গুলিতে তৈল মাখিয়া রাখিয়াছে। এই আর একটা মহিষ, অপমানিত কুলীনের ন্যায় দীর্ঘনিশ্বাস ত্যাগ করিতেছে। এদিকে আবার যুদ্ধ হইতে নিবারিত মল্লযোদ্ধার ন্যায় মেষের গ্রীবা মর্দ্দন করিয়া দিতেছে। এইখানে এইখানে আবার ঘোটকগণের

मन्दुराए साहासिओ। अन्यतोऽवलोक्य च। इदो अ कूरखुअ-तेल्ल-मिस्सं पिण्डं हत्थी पड़िच्छावीअदि मेत्थपुरिसेहिं। आदिसदु भोदी। (त)

चेटी। एदु एदु अज्जो। इमं तदिअं पओट्ठं पविसदु अज्जो। (थ)

विदू। प्रविश्य दृष्ट्वा च। हीही भो! इधो वि तदिए पओट्ठे इमाइं दाव कुलउत्तजणोववेसणणिमित्तं विरचिदाइं आसणाइं। अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ। एसो अ

अपरैश्चामस्थाने कौशकल्पना क्रियते। अयमपरः पाटच्चर इव दृढबद्धो मन्दुरायां शाखामृगः। इतश्च कूरघृत तैल मिश्र पिण्ड हस्ती प्रतिग्राह्यते मात्रपुरुषैः। आदिशतु भवती।

(थ) एतु एतु आर्य्यः। इमं तृतीयं प्रकोष्ठं प्रविशतु आर्य्यः।

(द) हीही भो। इतोऽपि तृतीये प्रकोष्ठे इमानि तावत् कुलपुत्रजनोपवेशन-

पाटच्चरश्चौरः। मन्दुराया वाजिशालायाम्। शाखामृगो वानरः। अत्र उपमालङ्कारः। कूराख्यौदनविशेषान् घृतं सिक्तं दध्, तैलं तैलमिश्रं पुनाम्, पिण्डमन्नग्रासं। प्रतिग्राह्यते भोज्यते। मात्रपुरुषैर्मात्रकजनैर्हस्तिपकैरित्यर्थः।

(द) विदू इति। कुलपुत्रजनानामागतानां सत्कुलीनयुवकानाम्, उपवेशन-निमित्तं विरचितानि निर्म्मितानि। अर्द्धवाचितम् अर्द्धपठितम्। एतत्तु पुस्तकम्

বেশ রচনা করিতেছে। এই আর একটা বানরকে চোরের ন্যায় অশ্ব-শালায় বন্ধন করিয়া রাখা হইয়াছে। এইদিকে আবার মাহুতেরা হাতীকে কূরনিঃসৃত-তৈল-যুক্ত অন্ন ভক্ষণ করাইতেছে। তুমি পথটা বলিয়া দাও।

(থ) দাসী। আর্য্য আসুন আসুন, এই তৃতীয় প্রকোষ্ঠে প্রবেশ করুন।

(দ) বিদূষক। (প্রবেশপূর্ব্বক দর্শন করিয়া) হীহী আশ্চর্য্য ত।

मणिमअ-सारिआ-सहिदो पासअपीठो। इमे अ अवरे मअण-सन्धि-विग्गह-चदुरा विविह-वण्णिआ-विलित्त-चित्त-फलअग्ग-हत्था इदो तदो परिब्भमन्ति [१] गणिआ वुड्ढविडा अ। आदिसदु भोदी। [द]

चेटी। एदु एदु अज्जो। इमं चउट्ठं पओट्ठं पविसदु अज्जो। (ध)

शिल्पि विरचितानि आसनानि। अर्द्धवाचितं पाशकपीठे तिष्ठति पुस्तकम्। एतच्च मणिमय सारिका सहितं पाशकपीठम्। इमे च अपरे मदन सन्धि विग्रह चतुरा विविध वर्णिका विलिप्त चित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाश्च। आदिशतु भवती।

(ध) एतु एतु आर्य्य। इमं चतुर्थं प्रकोष्ठं प्रविशतु आर्य्य।

अर्द्धविभागमुभयतः प्रसारितं इदं निरूपितमिति बोध्यम्। पुस्तकं कामकलादिशास्त्रीय शिल्पादिबोधकम्। पाशकपीठे द्यूतक्रीडनवट्टिकायाम्। मणिमयसारिकाभिः विनिर्मित-गुटिकाभिः सहितम्। मदने मदनस्य व्यापारविषये च सन्धिर्नायकनायिकयोः परस्पर-मेलनसम्पादनम् विग्रहस्तयोरेव परस्परकलहोत्पादनम् तयोश्चतुरा दक्षा, तथा विविधाभिर्वर्णिकाभिर्वर्णैः विलिप्तानि चित्रितानि चित्रफलकानि कामव्यापारविषयका-लिङ्गनाद्युपदर्शं इत्यादि यासां येषाञ्च तानि च।

এই তৃতীয় প্রকোষ্ঠেও, সদংশজাত লোকদিগের বসিবার জন্য, এই আসন সকল সজ্জিত রহিয়াছে। অর্দ্ধপঠিত একখানি পুস্তক, পাশার খাটের উপর রহিয়াছে। মণিময় গুটীর সহিত এই একখানি পাশার খাট। কাম-বিষয়ক সন্ধি বিগ্রহ ঘটাইতে নিপুণ এই আর কতকগুলি বেশ্যা ও বৃদ্ধ নাগরিক লোক, নানাবর্ণে চিত্রিত চিত্রপট হস্তাগ্রে লইয়া, ইতস্ততঃ ভ্রমণ করিতেছে। আপনি পথ বলিয়া দাও।

(१) परिब्भमदि।

चारु । आकर्ण्य । वयस्य । ज्ञायतां किमेतदिति ।

विदू । जं भवं आणवेदि । वसन्तसेनामुपगम्य सादरम् । सोत्थि भोदीए । (ख)

वसन्त । अज्ज ! वन्दामि । साअदं अज्जस्स ? । विटं प्रति । भाव ! एसा छत्तधारिआ भावस्स ज्जेव भोदु । (ग)

विट. । स्वगतम् । अनेनोपायेन निपुणं प्रेषितोऽस्मि । प्रकाशम् । एवं भवतु । भवति ! वसन्तसेने ! (घ)

साटोप-कूट-कपटानृतजन्मभूमेः
शाठ्यात्मकस्य रति-केलिकृतालयस्य ।

(ख) यद्भवानाज्ञापयति । स्वस्ति भवत्यै ।

(ग) आर्य्य ! वन्दे । स्वागतमार्य्यस्य ? । भाव ! एषा छत्रधारिका भावस्यैव भवतु ।

---

(ग) वसन्त इति । छत्रधारिका आत्मनो दासी भावस्यैव तव विटस्यैव भवतु परिच्छदधारिणीति शेष ।

(घ) विट इति । उपायेन इस प्रस्थानानुमतिकौशलेन । प्रेषितोऽस्मि स्वगृहं प्रतीति शेष । एनम् इय ममैव छत्रधारिका ।

साटोपेति । आटोपेन गर्व्वेण सह विद्यमानानीति साटोपानि यानि कूट कपटा

---

চারুদত্ত। (শ্রবণ করিয়া) সখে! জান দেখি এ ব্যাপারটা কি।

(খ) বিদূষক। আপনি যাহা আদেশ করেন। (বসন্তসেনার নিকট যাইয়া আদরের সহিত) আপনার মঙ্গল হউক।

(গ) বসন্তসেনা। আর্য্য! প্রণাম করি। আপনার শুভাগমন ত? (বিটের প্রতি) পণ্ডিত! এ, আপনারই ছত্রধারিণী হউক।

(ঘ) বিট। (স্বগত) এইভাবে কৌশলে প্রেরিত হইলাম। (প্রকাশে) ইহাই হউক। বসন্তসেনা!

वेश्यापणस्य सुरतोत्सवसंग्रहस्य
दाक्षिण्य-पण्य-सुख-निष्क्रय-सिद्धिरस्तु ॥२६॥

इति निष्क्रान्तो विटः ।

वसन्त । अज्जमित्तेअ ! कहिं तुम्हाणं जूदिअरो ? । (ड)

(ड) आर्यमैत्रेय ! कुत्रास्ति युष्माकं द्यूतकरः ? ।

---

धृतानि प्रतारणा-छद्म-मिथ्याचरणानि तेषां जन्मभूमिकल्पनिस्थानरूपस्य, तेषां वेश्याया-मेव बाहुल्येनोत्पत्तेरिति भावः ; शाठ्यं धूर्ततैव आत्मा सारभूततया जीवनरूपं यस्य तस्य, रतिकेलिभिरनुरागलीलाभिः कृत आलय आश्रयो यस्य तस्य, तथा सुरतोत्सवो रमणामोद एव संग्रहः सञ्चयो लाभो यस्मिन् तस्य, वेश्या एव आपणो विनिमयस्थान-स्वाद्विपणिस्तस्य तद्रूपस्थेत्यर्थः, दाक्षिण्यमौदार्यमेव पण्यं विक्रेयद्रव्यं तस्य सुखेन निष्क्रयसिद्धिः प्रतिशोधनिष्पत्तिरस्तु, चारुदत्तेन याद्दृशमौदार्यं दातव्यम्, त्वयापि तत्प्रतिशोधभावेन ताद्दृशमेवौदार्यं देयमित्यर्थः । अस्य लाभस्य सुरतोत्सव एवेति प्राक् प्रदर्शितमिति भावः ।

अत्र वसन्ततसेनाविषये शाठ्ये रूपकमलङ्कारः, प्रथमे पादे एकस्य टकारस्य असकृत् साम्यात् वृत्त्यनुप्रासः, चतुर्थे च 'स्त' इति व्यञ्जनसङ्घस्य अनेकधा सकृत् साम्यात् छेकानुप्रास इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

वसन्ततिलका वृत्तम् ॥२६॥

(ड) वसन्त इति । द्यूतकरश्चारुदत्तः । चारुदत्तेनैव अलिखितसुवर्णभाण्डस्य दानेन हारितत्वाभिधानात् कौतुकाय ईदृशोक्तिरिति बोध्यम् ।

---

গর্বের সহিত প্রতারণা, ছল ও মিথ্যা আচরণের যাহা জন্মভূমি, শঠতা যাহার জীবন, রতিলীলা যাহাকে আশ্রয় করিয়া থাকে এবং রমণামোদ যেখানে লাভ, সেই বেশ্যারূপ দোকানখানির ঔদার্যরূপ বিক্রেয় দ্রব্যের সুখে বিনিময় সিদ্ধি হউক ॥৩৬॥

( এই বলিয়া বিট চলিয়া গেল )

विदू। स्वगतम्। होही भो! जूदिअरो त्ति भणन्तीए अलङ्किदो पिअवअस्सो। प्रकाशम्। भोदि! एसो क्खु सुक्ख-रुक्ख-वाड़िआए। (च)

वसन्त। अज्ज! का तुम्हाणं सुक्ख-रुक्ख-वाड़िआ वुच्चदि?। (छ)

विदू। भोदि! जहिं ण खाईअदि ण पीईअदि। (ज)

वसन्तसेना स्मितं करोति।

विदू। ता पविसदु भोदी। (झ)

(च) हीही भोः! द्यूतकर इति भणन्त्या अलङ्कृतः प्रियवयस्यः। भवति! एष खलु शुष्क-वृक्ष-वाटिकायाम्।

(छ) आर्य! का युष्माकं शुष्क-वृक्ष-वाटिका उच्यते?।

(ज) भवति! यस्मिन् न खाद्यते न पीयते। (झ) तत् प्रविशतु भवती।

---

(च) विदू इति। अलङ्कृत, दारिद्र्यापवादमपनीय धनित्वख्यापनात् धनाभावे द्यूत-कारत्वासम्भवादित्याशय। शुष्कवृक्षवाटिकाया जीर्ण-विनष्ट-तरुमयोद्याने।

(छ) वसन्त इति। का कीदृशी अन्या।

(ज) विदू इति। एतेन यौगिकस्यापि शुष्कवृक्षवाटिकाशब्दस्य पानभोजनासम्भव-व्याख्या स्वकृतसङ्केतेन प्रदर्शितेति बोध्यम्। अतएव कौतुकात् वसन्तसेना स्मितं करोति।

---

(ঙ) বসন্তসেনা। আর্য্য মৈত্রেয়! আপনাদের দ্যূতকর কোথায়?।

(চ) বিদূষক। (স্বগত) ভাল ভাল! বসন্তসেনা প্রিয়বয়স্যকে দ্যূতকর বলিয়া অলঙ্কৃত করিয়াছেন। (প্রকাশ্যে) বসন্তসেনা! ইনি শুষ্কবৃক্ষবাটিকায় রহিয়াছেন।

(ছ) বসন্তসেনা। আর্য্য! আপনাদের শুষ্কবৃক্ষবাটিকা বলে কোন্‌টাকে?

(জ) বিদূষক। বসন্তসেনা! যেখানে লোকে খায় না, পান করে না।

चेटी। अवसरो ज्जेव पारइस्सदि। (ड)

विदू। पविसदु भोदी। (ढ)

वसन्त। प्रविश्योपसृत्य च पुष्पैस्ताडयन्ती। अइ जूदिअर? अवि-सुहो दे पदोसो?। (ण)

चारु। अवलोक्य। अये वसन्तसेना प्राप्ता। सहर्षमुत्थाय। अयि प्रिये!

सदा प्रदोषो मम याति जाग्रतः
सदा च मे निश्वसतो गता निशा।
त्वया समेतस्य विशाललोचने!
ममाद्य शोकान्तकरः प्रदोषकः ॥३७॥

(ड) अवसर एव पारयिष्यति।          (ढ) प्रविशतु भवती।

(ण) अयि द्यूतकर! अपि सुखस्ते प्रदोषः?।

---

(ड) चेटीति। अवसरस्त्वादृशसन्निधानसमय एव पारयिष्यति उक्तविधं भणितुं त्वां समर्थां करिष्यति, तादृशावसरस्य सल्लीलालापजनने सत्त्वरमेव शक्तिदर्शनादिति भावः।

(ण) वसन्तेति। पुष्पैस्ताडयन्ती चारुदत्तदेहोपरि पुष्पाणि निक्षिपन्तीत्यर्थः।

सदेति। सदा प्रत्यहम्, जाग्रत एव मम प्रदोषो रात्रिर्याति। अतीतसामीप्ये वर्त्तमाना। त्वद्विरहव्यथाकुलत्वादिति भावः, सदा च प्रत्यहम्, निश्वसत एव निशा गता। त्वद्वियोगेन शोकोच्छ्वासादित्याशयः। किन्तु हे विशाललोचने! अद्य त्वया समेतस्य सम्मिलितस्य मम, प्रदोषकः रात्रिः, शोकान्तकरः सन्तापनाशकः इति शेषः, चिरप्रार्थितत्वत्-सम्मेलनस्यैव लाभादिति भावः।

---

(ড) দাসী। সময়ই আপনাকে সমর্থ করিবে।

(ঢ) বিদূষক। আপনি প্রবেশ করুন।

(ণ) বসন্তসেনা। (প্রবেশপূর্ব্বক নিকটে যাইয়া, পুষ্প দ্বারা তাড়ন করতঃ) দ্যূতকর! প্রদোষকাল আপনার সুখ জন্মাইয়াছে ত?।

तत् स्वागतं भवत्यै ?। इदमासनम्, अत्रोपविश्यताम् । (त)

विदू । इदं आसणं, उववसदु भोदी । (थ)

वसन्तसेना आसीना । ततः सर्वे उपविशन्ति ।

चारु । वयस्य ! पश्य पश्य—

(थ) इदमासनम्, उपविशतु भवती ।

---

अत्र शोकान्तकरत्व प्रति त्वया समेतस्येतिपदस्यार्थो हेतुरिति पदार्थहेतुक काव्य-लिङ्गमलङ्कार । तथा मदेतिपदस्य द्विरभिधानात् कथितपदत्वादोष, प्रदोषशब्दस्य रजनीमुखवाचकतया रात्रिमात्रस्यावाचकत्वादवाचकत्वदोष, 'आयत निश्वसत' इत्युभयो परमेव नियमार्थक एवशब्दो वक्तव्य किन्तु नोक्त इति नियमे अनियमाख्यदोषश्च । तेन च पूर्वार्द्धमेव पठनीयम्—"विनिद्रतया च ममेयं ययाद्य प्रत्यहमेव यामिनीम् ।" च प्रसरविल वृत्तम् ॥३७॥

(त) तदिति । स्वागत कुशलेनागत किमित्यर्थस्तया भवत्यै इत्यत्र "आशि-ष्यर्थ कुशलमद्रायुष्यार्थे" इति चतुर्थी । केचित्तु तादर्थ्य इति वदन्ति ।

---

(त) চারুদত্ত। (দেখিয়া) ওহে ! বসন্তসেনা উপস্থিত হইয়াছেন। (আনন্দের সহিত উঠিয়া) প্রিয়ে !

প্রত্যহ জাগরিত অবস্থায় আমার রাত্রি অতীত হইয়াছে এবং প্রতিদিন নিশ্বাস ত্যাগ করিতে করিতে আমার রাত্রি চলিয়া গিয়াছে। কিন্তু আজ তোমার সহিত সম্মিলিত হইয়াছি, সুতরাং হে বিশাল-নেত্রে ! সেই প্রদোষ আমার আজ শোক-নিবৃত্তিকর হইয়াছে ॥৩৭॥

(ত) অতএব তোমার শুভাগমন ত ?। এই আসন, ইহাতে উপবেশন কর।

(থ) বিদূষক। এই আসন, আপনি উপবেশন করুন।

( বসন্তসেনা বসিল, তাঁর, পর সকলে বসিল )

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन।
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः॥३८॥

तद्वयस्य! क्लिन्ने वाससी वसन्तसेनायाः, अन्ये प्रधानवाससी समुपनीयेतामिति। (ट)

विदू। जं भवं आणवेदि। (ध)

---

वर्षोदकमिति। वर्षोदकं वृष्टिजलबिन्दुसमूहम्, उद्गिरता निपातयता श्रवणान्तविलम्बिना कर्णप्रान्तावलम्बिना, कदम्बेन शोभार्थं धृतकदम्बपुष्पेण, वसन्तसेनाया एकः स्तनः, यौवराज्यस्थो नृपसुतो राजपुत्र इव अभिषिक्तः स्नपितः, तीर्थोदकैरिव जलबिन्दुभिरिति भावः।

अत्र द्वितीयपादे छेकानुप्रासः, समुदाये तु श्रौतोपमा इत्यनयोः परस्परनिरपेक्षतया संसृष्टिः। उपमालङ्कारेण च स्तनस्य नृपसुतवत् परमादरणीयत्वं स्पृहणीयत्वं चाव धानतया रमणीयत्वं प्रभावत्वञ्च व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः

तथा द्वितीयपादे माधुर्य्यगुणः, अन्यत्र तु प्रसादगुणः, उक्तविधौ चालङ्कारविशेषयोगात् भूषणं नाम नाट्यलक्षणम्। यथा साहित्यदर्पणे—

"लक्षणानि। गुणैः सालङ्कारैर्योगस्तु भूषणम्।"

लक्षणानां गुणरूपतया "गुणैः लिङ्ग सन्ध्या कालपानभावि" इति न्यायेन गुणैरिति बहुवचनस्याविवक्षितत्वादेव लक्षणसङ्गतिः।

आर्या जातिः॥३८॥

(ट) तदिति। क्लिन्ने वृष्टिजलैरार्द्रीभूते। प्रधानवाससी उत्तमवस्त्रद्वयम्।

---

चारुदत्त। वयস্য! দেখ দেখ—

কর্ণপ্রান্তলম্বী কদম্বপুষ্প, বৃষ্টিজলবিন্দু উদ্‌গিরণ করতঃ, যৌবরাজ্যস্থ রাজপুত্রের ন্যায় একটী স্তনকে অভিষিক্ত করিয়াছে॥৩৮॥

(ট) অতএব সখে। বসন্তসেনার কাপড় দুইখানি ভিজিয়া গিয়াছে, আর দুইখানি ভাল কাপড় লইয়া আইস।

चेटी। अज्जमित्तेअ! चिट्ठ तुमं, अहं ज्जेव अज्जअं सुस्सूसइस्सं। तथा करोति। (न)

विदू। अपवारितकेन। भो वअस्स! पुच्छामि दाव तत्थभोदिं किं पि। (प)

चारु। एवं क्रियताम्। (फ)

विदू। प्रकाशम्। अध किं णिमित्तं उण ईदिसे पणट्ठचन्दालोए दुद्दिणअन्धआरे आअदा भोदी ?। (ब)

(ध) यद्भवानाज्ञापयति।

(न) आर्य्यमैत्रेय! तिष्ठ त्वम् अहमेवार्य्यां शुश्रूषयिष्यामि।

(प) भो वयस्य! पृच्छामि तावत्तत्रभवतीं किमपि।

(ब) अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्द्दिनान्धकारे आगता भवती ?।

---

(न) चेटीति। तथा करोति गात्रप्रोञ्छनेन आनीतपेटिकादिभ्यो वस्त्रद्वयमानीय तत्परिधापनादिना च शुश्रूषयतीत्यर्थः।

(प) विदू इति। अपवारितकेन अपवारितप्रकारेण। संज्ञायां कप्रत्ययः।

(फ) चारु इति। एव स्वाभिमत प्रश्न। कौतुकलाभाय अनुमेयम्।

(ब) विदू इति। प्रनष्टो मेघ वरणेन तिरोहितश्चन्द्रालोको यस्मिन् तस्मिन्।

---

(ধ) বিদূষক। আপনি যাহা আদেশ করেন।

(ন) দাসী। আর্য্যমৈত্রেয়। আপনি থাকুন, আমিই আর্য্যার পরিচর্য্যা করিব। (তাহাই করিতে লাগিল)

(প) বিদূষক। (চারুদত্তের প্রতি চুপি চুপি) বয়স্য। আমি বসন্তসেনাকে কিছু জিজ্ঞাসা করি?।

(ফ) চারুদত্ত। এইরূপ কর।

(ব) বিদূষক। (প্রকাশ্যে) চন্দ্রালোকবিহীন এইরূপ দুর্দ্দিনের অন্ধকারে আপনি কি নিমিত্ত আসিয়াছেন?।

चेटी । अज्जए ! उजुओ वम्हणो । (भ)

वसन्त । णं णिउणोत्ति भणाहि । (म)

चेटी । एसा क्खु अज्जआ एव्वं पुच्छिदुं आअदा, कित्तिअं ताए रअणावलीए मुल्लं त्ति । (य)

विदू । जनान्तिकम् । भो ! भणितं मए, जधा अप्पमुल्ला रअणावली, वहुमुल्लं सुवस्सभण्डअं, ण परितुट्ठा, अवरं मग्गिदुं आअदा । (र)

चेटी । मा क्खु अज्जआए अत्तण केरकेत्ति भणिअ जूदे

(भ) आर्ये । ऋजुकी ब्राह्मण । (म) ननु निपुण इति भण ।

(य) एषा खलु आर्या एव प्रष्टुमागता,—'कियत्तस्या रत्नावल्या मूल्यम्' इति ।

(र) भो । भणितं मया—यथा अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डकम्, न परितुष्टा, अपरं मार्गयितुमागता ।

(भ) चेटीति । ऋजुक सरलबुद्धि । मदगावकादेवागतेति सुवीधविषयमप्युक्ता आगमनकारणस्य पृष्टत्वादिति भाव ।

(म) वसन्त इति । निपुणश्चतुर कूटबुद्धिरिति यावत्, अयं ब्राह्मण इति पूर्वेणान्वय, मदागमनप्रयोजन मन्यु क्तिनैव प्रकाशयितुमभिप्रेतत्वादिति भाव ।

(ভ) দাসী । আর্য্যে ! ব্রাহ্মণ সরল মানুষ ।

(ম) বসন্তসেনা । ওহে ! 'চতুর' এই কথা বল ।

(য) দাসী । এই আর্য্যা, এইরূপ জিজ্ঞাসা করিতে আসিয়াছেন যে, 'সেই রত্নমালার মূল্য কত ।'

(র) বিদূষক । ( চারুদত্তের প্রতি চুপি চুপি ) বয়স্য ! আমি ত বলিয়াছি যে, অল্পমূল্য রত্নমালা, আর বহুমূল্য স্বর্ণালঙ্কার, সুতরাং সন্তুষ্ট না হইয়া আরও চাহিতে আসিয়াছে ।

हारिदा, सोअ सहिओ राअ-वात्थहारी ण जाणीअदि कहिं गदो त्ति। (ल)

विदू। भोदि! मन्तिदं ज्जेव मन्तीअदि। (व)

चेटी। जाव सो अण्णेसीअदि, ताव एदं ज्जेव गेण्ह सुवण्णभण्डअं। इति दर्शयति। (श)

विदूषको विचारयति। (ष)

(ल) सा खलु आर्य्यया अस्मीयेति भणित्वा द्यूते हारिता। स च सभिको राज-वार्त्ताहारी न ज्ञायते कुत्र गत इति।

(व) भवति। मन्त्रितमेव मन्त्र्यते।

(श) यावत् स अन्विष्यते, तावदिदमेव गृहाण सुवर्णभाण्डकम्।

---

(ल) चेटीति। पूर्व विदूषकेण सुवर्णभाण्डविघटनवृत्तान्तो यथा निवेदित, चेट्यपि तथैव रत्नावल्या विघटनवृत्तान्त कौतुकाय निवेदयति चेत्यादि।

(व) विदू इति। मन्त्रितमेव मन्त्र्यते, मया तत्सुवर्णभाण्डहारण यथा कथितम त्वयापि रत्नावलीहारण तथैव कथ्यते इत्यर्थं। इदन्तु चेटीवाक्यासमाप्तावेवोक्तम्।

(श) चेटीति। वक्तव्यशेष समापयति यावदिति। स सभिक, अन्विष्यते तस्मा एव रत्नावल्यास्तन्मूल्यस्य वा युष्माकं प्रत्यर्पणार्थं मत्स्वामिभिर्मार्ग्यते। गृहाण स्वचित्ताश्वासनार्थमिति भाव। दर्शयति सुवर्णभाण्डमिति शेष। कौतुकार्थोक्तिरियम्।

(ল) দাসী। আর্য্যা, আপনার বলিয়া সেই রত্নমালা পাশাখেলায় হারিয়াছেন, অথচ সেই সভাপতি রাজার দূত বলিয়া কোথায় গিয়াছেন, তাহা জানিতে পারা যায় নাই।

(ব) বিদূষক। ওহে! আমি যাহা বলিয়াছিলাম, তাহাই বলিতেছ।

(শ) দাসী। যতক্ষণ সেই সভাপতির অন্বেষণ করি, ততক্ষণ এই স্বর্ণালঙ্কার গ্রহণ করুন। ( এই বলিয়া দেখাইল )

(ষ) বিদূষক বিচার করিতে লাগিল।

चेटी। अदिमेत्तं अज्जो णिज्झाअदि, ता किं दिट्ठ-पुरुव्वो दे ?। (स)

विदू। भोदि! सिप्पकुसलदाए ओवन्धेदि दिट्ठिं। (ह)

चेटी। वञ्चिदोम्हि दिट्ठीए। तं ज्जेव एदं सुवस-भण्डअं। (च)

विदू। सहर्षम्। भो वअस्स! तं ज्जेव एदं सुवस-भण्डअं, जं अम्हाणं गेहे चोरेहिं अवहिदं। (क)

(स) अतिमात्रमार्य्यो निध्यायति, तत् किं दृष्टपूर्वं ते ?।

(ह) भवति। शिल्पकुशलतया आवध्नाति दृष्टिम्।

(च) आर्य्य। वञ्चितोऽस्मि दृष्ट्या। तदेवैतत् सुवर्णभाण्डकम्।

(क) भो वयस्य। तदेवैतत् सुवर्णभाण्डकम्, यदस्माकं गेहे चौरैरपहृतम्।

(य) विदू इति। विचारयति पूर्वनिक्षेपीकृत सुवर्णभाण्डमिदं न वेति दृष्टि-विशेषेण विविनक्ति।

(स) चेटीति। निध्यायति अवलोकयति। इयमपि कौतुकीति।

(ह) विदू इति। शिल्पकुशलतया निर्म्माणनैपुण्येन, मम दृष्टिम्, आवध्नाति आकृष्टीकरोति, अयमलङ्कार इति शेष.। सौन्दर्य्यातिरेकादेवेदमतिमात्रं पश्यामि न पुनरस्मदीयं न वेति विवेचनार्थमिति भाव।

(স) দাসী। আপনি যে অত্যন্ত দেখিতেছেন, তবে কি আপনার ইহা পূর্ব্বে দেখা ছিল ?।

(হ) বিদূষক। ওহে! নির্ম্মাণনৈপুণ্যবশতঃ আমার দৃষ্টি আবদ্ধ করিতেছে।

(চ) দাসী। দৃষ্টি তোমাকে বঞ্চনা করিতেছে। সেই স্বর্ণালঙ্কারই এই।

(ক) বিদূষক। (আনন্দের সহিত) সখে। সেই স্বর্ণালঙ্কারই এই, যাহা আমাদের বাড়ী হইতে চোরে নিয়াছিল

चारु । वयस्य !

योऽस्माभिश्चिन्तितो व्याजः कर्त्तुं न्यासप्रतिक्रियाम् ।
स एव प्रस्तुतोऽस्माकं किन्तु सत्यं विडम्बना ॥३९॥

विदू । भो वअस्स ! सच्चं सवामि बम्हण्णेण । (ख)

चारु । प्रियं नः प्रियम् । (ग)

विदू । जनान्तिकम् । भो ! पुच्छामि णं कुदो एदं समासादिदं त्ति ? । (घ)

(ख) भो वयस्य ! सत्यं शपे ब्राह्मण्येन ।

य इति । न्यासस्य वसन्तसेनया पूर्वं निक्षिप्तस्य चौरैरपहृतस्य तस्य सुवर्णभाण्डस्य प्रतिक्रिया प्रतिशोधः कर्त्तुम्, अस्माभिर्यो व्याजश्छलम्, चिन्तितश्चिन्तयित्वा आविष्कृत आसां समीपे प्रकाशित इत्यर्थः, अस्माकं समीपेऽपि, स एव तादृश एव व्याजः, प्रस्तुत आभिः प्रक्रान्तः प्रकाशितः । तथा च यथा वयं तस्य सुवर्णभाण्डस्य दूतहारणरूपं छलं प्रकटितवन्तः, इमा अपि तथैव तस्या रत्नावल्या दूतहारणरूपं छलं प्रकाशितवत्य इति सरलार्थः । किन्तु विडम्बना इव प्रतारणा इति सत्यम् । तथा च नेदं तत् सुवर्णभाण्डम्, किन्तु अस्माकमाश्वासनाय तत्तुल्यमेव अलङ्कारान्तरं प्रदर्शितमिति भावः ॥३९॥

(ख) विदू इति । ब्राह्मण्येन ब्राह्मणत्वेन सत्यं शपे 'तदेवेदं सुवर्णभाण्डम्' इति ध्रुवं शपथं करोमि ।

(ग) चारु इति । नः अस्माकम्, प्रियं तस्यैव पुनर्दर्शनमिति शेषः ।

চারুদত্ত। সখে! গচ্ছিত স্বর্ণালঙ্কারের প্রতিশোধ করিবার জন্য, আমরা যে ছল আবিষ্কার করিয়াছিলাম, ইহারাও আমাদের নিকট সেই ছলই আরম্ভ করিয়াছে। কিন্তু বাস্তবিকপক্ষে ইহা বিড়ম্বনা ॥৩৯॥

(খ) বিদূষক। বয়স্য! আমি ব্রাহ্মণত্ব দ্বারা সত্য শপথ করিতেছি যে, সেই স্বর্ণালঙ্কারই এই।

(গ) চারুদত্ত প্রিয়, আমাদের প্রিয়ই বটে।

चारु। को दोषः ?। (ङ)

विदू। चेट्याः कर्णे। एवं विअ। (च)

चेटी। विदूषकस्य कर्णे। एवं विअ। (छ)

चारु। किमिदं कथ्यते ?। किं वयं बाह्याः ?। (ज)

विदू। चारुदत्तस्य कर्णे एवं विअ। (झ)

चारु। भद्रे। सत्यं तदेवेदं सुवर्णभाण्डम् ?। (ञ)

---

(घ) भो। पृच्छामि ननु कुत इदं समासादितमिति।

(च) एवमिव। (छ) एवमिव। (झ) एवमिव।

---

(ङ) चारु इति। को दोष ? तादृशमस्ये इति शेष।

(च) विदू इति। एवमिव ? केनचित् गुप्तप्रयोजिना चारुदत्तगृहादपहृत्य पुनर्न्यस्य दत्त किमित्यर्थ।

(छ) चेटीति। स्वीकरोति एवमिवेति।

(ज) चारु इति। इदं गुप्तम्। बाह्या बहिर्लोका, यत् श्रोतुमपि न शक्नुम इति भाव।

(झ) विदू इति। एवमिवेति प्राक्प्रदर्शितमेव गुप्तं ब्रवीतीति बोध्यम्।

(ञ) चारु इति। अत्र काक्वा प्रश्नो व्यज्यते।

---

(ঘ) বিদূষক। (চারুদত্তের প্রতি চুপি চুপি) বয়স্য। আমি জিজ্ঞাসা করি যে, 'ইহা কোথা হইতে পাইলে।'

(ঙ) চারুদত্ত। দোষ কি ?।

(চ) বিদূষক। (দাসীর কাণে কাণে) এই রকম কি ?।

(ছ) দাসী। (বিদূষকের কাণে কাণে) এই রকমই।

(জ) চারুদত্ত। তোমরা কি বলিতেছ ?। আমরা কি বাহিরের লোক ?।

(ঝ) বিদূষক। (চারুদত্তের কাণে কাণে) এই রকম।

(ঞ) চারুদত্ত। ভদ্রে ! সত্যই কি সেই স্বর্ণালঙ্কার এই ?।

चेटी। अज्ज! अधइं। (ट)

चारु। भद्रे! न कदाचित् प्रियनिवेदनं निष्फलीकृतं मया। तद्गृह्यतां पारितोषिकमिदमङ्गुलीयकम्। इत्यनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति। (ठ)

वसन्त। आत्मगतम्। अदो ज्जेव कामीअसि। (ड)

चारु। जनान्तिकम्। भोः! कष्टम्। (ढ)

धनैर्वियुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत्।
यस्य प्रतीकारनिरर्थकत्वात् कोपप्रसादा विफलीभवन्ति ॥४०॥

(ट) आर्य्य! अथकिम्। (ड) अतएव काम्यसे।

(ट) चेटीति। अथकिं तदेवेदमित्यर्थः।

(ठ) चारु इति। निर्धनस्य तस्यैव सुवर्णभाण्डस्य पुनः प्राप्त्या आत्मकलङ्क-क्षयात् निवृत्त इत्यस्य प्रीतिरिति बोध्यम्। नाटयति अभिनयति।

(ड) वसन्त इति। अतएव सर्वत्र न्याय्यकारित्वादेव। काम्यसे रमणायाभि-लष्यसे। एतेनास्या अपि गुणानुरागो व्यज्यते।

(ढ) चारु इति। जनान्तिकं केवलविदूषकान्तिकं एवेत्यर्थः। [illegible]।

धनैरिति। लोके जगति, धनैर्वियुक्तस्य विच्छिन्नस्य निर्धनस्य नरस्य आदित एव प्रथमत एव जन्मत एवेत्यर्थः, किं तावत् जीवितेन जीवनेन फलमिति शेषः, किमपि नेत्यर्थः। तत्र हेतुमाह—यस्य नरस्य प्रतीकारे कोपप्रसादयोरेव प्रतिक्रियायां कृत

(ট) দাসী। আর্য্য! হাঁ।

(ঠ) চারুদত্ত। ভদ্রে! আমি কখনও প্রিয় নিবেদন নিষ্ফল করি নাই। অতএব পারিতোষিক এই অঙ্গুরীয়কটী গ্রহণ কর। (ইহা বলিয়া, অঙ্গুরীয়কশূন্য হস্ত দর্শন করিয়া লজ্জা অভিনয় করিলেন)।

(ড) বসন্তসেনা। (স্বগত) এই জন্যই আপনাকে কামনা করি।

(ঢ) চারুদত্ত। (বিদূষকের প্রতি চুপি চুপি) হায়! কি কষ্ট।

अपि च । पक्षविकलश्च पक्षी, शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥४१॥

अपि च । शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः ।
यद्दृष्टपूर्व्व-जन-सङ्गम-विस्मृताना-
मेवं भवन्ति विफलाः परितोषकालाः ॥४२॥

---

व्यापारं इत्यर्थः निर्धनत्वादाश्रमीर्मिमित्वादशक्तत्वादित्यर्थः, कोपप्रसादौ क्रोध सन्तोषौ, विफलीभवतः । तथा च धनाभावेन अपकारिणि प्रत्यपकारासामर्थ्यात् उपकारिणि प्रत्युपकारासामर्थ्याच्च यस्य क्रोध सन्तोषय विफलीभवति, तस्य जन्मनः परमेव मरणं सुचिरमिति सरलार्थः । अतएव अस्मै पारितोषिकदानासम्भवेन सन्तोषस्य वैफल्यात् ममापि जीवनं निष्फलमेवेति भावः ।

अतएवात्र अप्रस्तुतनिधनसामान्यात् निर्धनविशेषचारुदत्तप्रतीतेरप्रस्तुतप्रशंसा, पूर्वार्द्धं प्रति परार्द्धस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च अनयोरङ्गाङ्गिभावेन सङ्करः ।

वसन्ततिलका वृत्तम् ॥४०॥

पक्षेति । पक्षविकलः पतत्रविहीनः पक्षी च, शुष्कस्तरुः, जलहीनं सरः सरोवरः, उद्धृतदंष्ट्रः उत्पाटितविषदन्तः सर्पश्च, दरिद्रो जनश्च, एतत् सर्वं लोके जगति तुल्यं समानम्, तरूणाम् छायादानस्य जलदानस्य दंशनस्य अभीष्टकार्यकारणस्य च असम्भवादिति भावः ।

अत्रापि पूर्ववदप्रस्तुतप्रशंसा आर्थी मालोपमा चानयोरपि पूर्ववत् सङ्करः ।

आर्या जातिः ॥४१॥

---

জগতে নির্ধন লোকের জন্ম হইতেই জীবনের ফল কি? উপযুক্ত কার্য্য করিতে অসমর্থ বলিয়া, যাহার ক্রোধ ও প্রসন্নতা নিষ্ফল হইয়া যায় ॥৪০॥

আরও, পক্ষবিহীন পক্ষী, শুষ্ক বৃক্ষ, জলশূন্য সরোবর, উদ্ধৃতদংষ্ট্র সর্প এবং নির্ধন মানুষ, জগতে এই সকলই সমান ॥৪১॥

विदू। भो। अलं अदिमेत्तं सन्तप्पिदेण। प्रकाशं सपरिहासम्। भोदि। समप्पीअदु मम केरिआ ण्हाण-साडिआ। (घ)

वसन्त। अज्जचारुदत्त। जुत्तं णेदं इमाए रअणावलीए इमं जणं तुलइदुं। (ङ)

---

(घ) भो। अलमतिमात्र सन्तापितेन। भवति। समर्प्यतां मम स्नानशाटिका।

---

शून्यैरिति। दरिद्राः पुरुषाः, शून्यैर्जनरहितैर्गृहैः, तोयरहितैः कूपैः, शीर्णैः शुष्कैस्तरुभिश्च, खलु निश्चितम् समाः समानाः। यद्यस्मात् दृष्टपूर्वस्य सञ्जातसौहार्द्दस्य अन्यस्य जनस्य सङ्गमेन सम्मिलनेन विस्मृताः विस्मृतात्मदैन्याः तेषां दरिद्रपुरुषाणामिति तात्पर्य्यम्, परितोषकालाः सन्तोषप्रयुक्तदानादिकरणसमयाः, एवमनेन प्रकारेण विफला भवन्ति। तथा च दृष्टपूर्वया वसन्तसेनया सम्मेलनानन्देन मया स्वकीयदैन्यं सर्वथैव विस्मृतम् तेन च अङ्गुरीयकदाने प्रवृत्तस्य मे तदङ्गुरीयकाभावादयं परितोषकालो विफल एव भूत इति भावः।

अतएवात्रापि पूर्ववदप्रस्तुतप्रशंसामालोपमयोः सङ्करः।

वसन्ततिलका वृत्तम् ॥४२॥

(घ) विदू इति। सन्तापितेन आत्मनैव दारिद्र्यदुःखं विभाव्य सन्तप्तीकृतेन ममेत्यर्थः। स्नानशाटिका स्नानकाले परिधेयवस्त्रम्। अत्र स्नानशाटिकासमर्पणोपन्यासेन पूर्वदत्तरत्नावलीप्रत्यर्पणं च सूचितम्। आत्मनः सुवर्णभाण्डप्रत्यर्पणे तद्रत्नावलीप्रत्यर्पणस्य सर्वथैवौचित्यादिति भावः।

---

আরও, নির্ধন মানব, শূন্য গৃহ, জলহীন কূপ ও জীর্ণ বৃক্ষের সমান, যেহেতু পূর্ব্বপরিচিত (বন্ধু) জনের সম্মেলনবশতঃ আত্মবিস্মৃত নির্ধনের সন্তোষের সময়গুলি এই ভাবেই বিফল হইয়া যায় ॥৪২॥

(ঘ) বিদূষক। সখে। বেশী সন্তাপ করিবার প্রয়োজন নাই। (প্রকাশ্যে পরিহাসের সহিত) বসন্তসেনা। আমার স্নানের শাড়ী-খানি দিন।

चारु। सविलक्षस्मितम्। वसन्तसेने। पश्य पश्य— (थ)

कः श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति।
शङ्कनीया हि लोकेऽस्मिन् निष्प्रतापा दरिद्रता ॥४३॥

विदू। हञ्जे। किं भोदीए इध ज्जेव सुविदव्वं ?। (द)

(त) आर्य्यचारुदत्त। युक्तं नेदम् अनया रत्नावल्या इमं जनं तूलयितुम्।

(द) हञ्जे। किं भवत्या इहैव स्वप्तव्यम्?।

(त) वसन्त इति। रत्नावल्या सुवर्णभाण्डस्थाने दत्तयेयम्। इमं जनं मामिति तात्पर्य्यम् तूलयितुं तूलकवत् लघुकर्त्तुम्। तथा च तस्य विघटितस्य सुवर्णभाण्डस्य स्थाने यदि ततोऽल्पमूल्यं यत्किञ्चिदपि द्रव्यं न दीयते तदा यदि वसन्तसेना राजद्वारे तदर्थमभियोगं कुर्य्यात् लोकसमाजे वा निन्देदिति मत्वैव सा रत्नावली दत्ता, तादृश-मृद्भावनयैव च मां भवान् तूलकवत् लघुमेव कृतवान्। वस्तुतो नाहं तत्सुवर्णभाण्डार्थं किञ्चिदप्यकरिष्यमिति भावः। एतेन वसन्तसेनाया अपि महदौदार्य्यं व्यज्यते।

(थ) चारु इति। विलक्षस्मिताभ्यां लज्जामन्दहासाभ्यां सहेति सविलक्षस्मितम्।

क इति। व्याख्यातपूर्वमिदं पद्यम् ॥४३॥

(द) विदू इति। हञ्जे इति भृत्योभावेन वसन्तसेनाया एव सम्बोधनम्। इहैव गृहे स्वप्तव्यं रात्रौ शयितव्यम्। तथा चेत्तदा तदर्थमायोजनं करोमीति भावः।

(ত) বসন্তসেনা। আর্য্য চারুদত্ত। এই রত্নমালাদ্বারা এই ব্যক্তিকে তূলার ন্যায় করা আপনার সঙ্গত হয় নাই।

(থ) চারুদত্ত। (লজ্জা ও অল্পহাস্যের সহিত) বসন্তসেনা। দেখ দেখ—

যথার্থ বিষয় কে বিশ্বাস করিবে? সকলেই আমাকে তূলার ন্যায় লঘু মনে করিবে। কারণ, এই জগতে প্রভাববিহীন দরিদ্রতাকে সকলেই আশঙ্কা করে ॥৪৩॥

(দ) বিদূষক। বসন্তসেনা। তুমি কি এইখানেই শয়ন করিবে?।

चेटी । विहस्य । अज्जमित्तेअ ! अदिमेत्तं दाणिं उज्जुअं अत्ताणअं दंसेसि । (ध)

विदू । भो वअस्स ! एसो क्खु ओसारन्तो विअ सुहोवविट्ठं जणं पुणोवि वित्थारिवारिधाराहिं पविट्ठो पज्जणो । (न)

चारु । सम्यगाह भवान् ।

अमूर्हि भित्त्वा जलदान्तराणि पङ्कान्तराणीव मृणालसूच्यः ।
पतन्ति चन्द्रव्यसनाद्विमुक्ता दिवोऽम्बुधारा इव वारिधाराः ॥४४॥

(ध) आर्य्यमैत्रेय । अतिमात्रमिदानीम् ऋजुमात्मानं दर्शयसि ।

(न) भो वयस्य ! एष खलु अपसारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारिवारि धाराभिः प्रविष्टः पर्जन्यः ।

(ध) चेटीति । रामाविव प्रथमार्य्यमैत्रेयमागता इति बुद्धापि तदयं प्रश्न करणादिति भावः ।

(न) विदू इति । एष पर्जन्यो मेघ, विस्तारिवारिधाराभिर्विशालवृष्टिभि, सुखोपविष्टं जनम्, अपसारयन्निव गृहाभ्यन्तरादौ प्रेरयन्निव प्रविष्टः अस्यां इत्यवाटिकायामुपस्थितः ।

अमूरिति । हि तथाहि, अमूर्वारिधाराः, मृणालस्य सूच्य सूक्ष्माग्रभागाः, पङ्कान्तराणीव समन्तात् कर्द्दमाभ्यन्तराणीव, जलदान्तराणि मेघाभ्यन्तरदेशान्, भित्त्वा विदार्य्य, चन्द्रस्य इन्दोः अत्युग्र व्यसनात् मेघावरणरूपविपत्तेः मरणरूपविपत्तेश्च हेतोः, विमुक्ता आकाश्या-

(ধ) দাসী । (হাস্য করিয়া) আর্য্যমৈত্রেয় ! তুমি যে এখন আপনাকে বড়ই সরল বলিয়া দেখাইতেছ ।

(ন) বিদূষক । সখে ! এই মেঘ বিস্তৃত বৃষ্টিধারা দ্বারা সুখোপবিষ্ট লোকদিগকে যেন সরাইতে থাকিয়া, আবারও আকাশে প্রবেশ করিয়াছে ।

চারুদত্ত । তুমি ঠিক্ বলিয়াছ ।

अपि च । धाराभिरार्यजनचित्तसुनिर्म्मलाभिः
चण्डाभिरर्जुन-शर-प्रतिकर्कशाभिः ।
मेघाः स्रवन्ति बलदेव-पट-प्रकाशाः
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः ॥४५॥

---

नयनात् च्युता, दिव आकाशस्य भार्यायाः, अश्रुधारा पतिव्यसनजनिता नयनधारा इव पतन्ति ।

अत्र पूर्वार्द्धे श्रौती उपमा, परार्द्धे तु चन्द्रदिवोर्लिङ्गसाम्येन नायकनायिकाव्यवहार-समारोपात् समासोक्तिरुत्प्रेक्षा च इत्येतेषामङ्गाङ्गितया सङ्करः ।

उपजातिर्वृत्तम् ॥४४॥

धाराभिरिति । बलदेवस्य नीलाम्बरस्य बलरामस्य यः पटो नीलवसनं तद्वत् प्रकाशो दीप्तिर्येषां ते तादृशा मेघाः, आर्यजनस्य साधुलोकस्य चित्तवत् सुनिर्म्मलाभिः, तथा अर्जुन-शरवत् प्रतिकर्कशाभिरत्यन्तकठिनाभिः, अतएव चण्डाभिर्भयानकाभिः धाराभिः, शक्रस्य दिवस्पतेरिन्द्रस्य, मौक्तिकनिधानं मुक्तानिधिं निधिस्थं मुक्तारत्नमित्यर्थः, उद्गिरन्तो निःसारयन्त इव, स्रवन्ति गलन्ति ।

अत्र लुप्तोपमासत्त्वेऽपि क्रियोत्प्रेक्षा अङ्गीक्रियते । तथा तृतीयपादे वाक्यसमाप्तावपि तद्गतस्य मेघा इत्यस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्ततादोषः, स च तृतीयचतुर्थपादयोः पौर्वापर्यविपर्यासेन समाधेयः ।

वसन्ततिलका वृत्तम् ॥४५॥

---

কারণ, মৃণালের অগ্রভাগ যেমন পঙ্ক কর্দ্দম বিদারণ করে, সেইরূপ এই বৃষ্টিধারা, অভ্র মেঘ বিদারণ করিয়া, চন্দ্রের বিপত্তিনিবন্ধন আকাশ-কর্তৃক বিমুক্ত অশ্রুধারার ন্যায় পতিত হইতেছে ॥৪৪॥

আরও, বলদেবের বস্ত্রের ন্যায় নীলবর্ণ মেঘ সকল, সাধুলোকের চিত্তের ন্যায় নির্ম্মল এবং অর্জ্জুন-বাণের ন্যায় কঠিন ও ভয়ঙ্কর ধারা দ্বারা ইন্দ্রের ভাণ্ডার হইতে মুক্তারাশি যেন উদ্গিরণ করতঃ পতিত হইতেছে ॥৪৫॥

प्रिये ! पश्य पश्य—

एतैः पिष्ट-तमाल-वर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः।
एषाऽम्भोद-समागम-प्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत् समालिङ्गति ॥४६॥

एतैरिति। अम्भोदसमागमे मेघेन सुखदायिना नायकेन च सह सम्मेलने प्रणयिनी अभिलाषिणी, स्वच्छन्दं यथेच्छम्, अभ्यागता उपस्थिता, रक्ता लोहितवर्णा अनुरक्ता च, एषा विद्युत् प्रियतमा स्त्री कान्तं दयितमिव, पिष्टं शिलादौ मर्द्दितं यत् तमालं तमालपत्रं तदेव वर्णकौ रञ्जनद्रव्यं तन्निभैः तत्तुल्यैः कृष्णवर्णैः, अम्भोधरैर्मेघैः, आलिप्तं व्याप्तमनुलिप्तञ्च तथा संसक्तैः पिण्डीभूतैरित्यर्थः, सुरभिभिर्घ्राणतर्पकैः, शीतैः शीतलैः, प्रदोषानिलैः सायंकालीनवायुभिः, उपवीजितं सञ्चितम्, अम्बरमाकाशम्, समालिङ्गति स्वसंयुक्तं करोति आश्लिष्यति च।

अत्र लिङ्गसाम्येन विद्युति स्वैचारिण्या नायिकाया अम्भोदे सुखदायिनो नायकस्य अम्बरे अनुरागभाजो नायकस्य च व्यवहारसमारोपात् समासोक्तिः, प्रथमपादगतया लुप्तोपमया चतुर्थपादगतया श्रौतोपमया च गुणभावेनाङ्गभूतया सङ्कीर्य्यते। तेन च "वसन्तसेने! त्वमपि मामेवं समालिङ्ग" इति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

अतएव च प्रार्थना नाम गर्भसन्ध्यङ्गम्। तथा च साहित्यदर्पणे—
"रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्।"
शार्दूलविक्रीडितं वृत्तम् ॥४६॥

প্রিয়ে! দেখ দেখ—

মর্দ্দিত তমালপত্রের ন্যায় নীলবর্ণ এই মেঘ সমূহ, আকাশকে ব্যাপ্ত করিয়াছে এবং পিণ্ডীভূত, সুগন্ধি ও শীতল প্রদোষবায়ু, আকাশকে ব্যজন করিতেছে, আবার অনুরক্ত প্রিয়তমা যেমন প্রিয়তমকে আলিঙ্গন করে, সেইরূপ মেঘসম্মেলনাভিলাষিণী, ইচ্ছানুসারে উপস্থিত ও রক্তবর্ণ এই বিদ্যুৎ, আকাশকে আলিঙ্গন করিতেছে ॥৪৬॥

वसन्तसेना शृङ्गारभावं नाटयन्ती चारुदत्तमालिङ्गति।

चारु। स्पर्शं नाटयन् प्रत्यालिङ्ग्य।

**भो मेघ! गम्भीरतरं नद त्वं तव प्रसादात् स्मरपीड़ितं मे।**
**संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥४७॥**

**विदू। दासीए पुत्त! दुद्दिण! अणज्जो दाणिं सि तुमं, जं अत्तभोदिं विज्जुआए भाअवेसि। (प)**

(प) दास्याः पुत्र! दुर्दिन! अनार्य इदानीमसि त्वम्, यदत्रभवतीं विद्युता भाययसि।

---

भो इति। भो मेघ! त्वं गम्भीरतरं नद ध्वन। कुत इत्याह—तव प्रसादात् गर्जितानुग्रहात्, स्मरपीडितं कामार्तम्, मे मम गात्रम्, संस्पर्शेन वसन्तसेनाया आलिङ्गनेन रोमाञ्चितञ्च तत् जातो रागः सुरतानुरागो यस्मिन् तथेति तत्तथोक्तं सत्, कदम्बपुष्पत्वं कदम्बपुष्पवत् परिस्फीततम्, उपैति प्राप्नोति दयितान्तिके कण्टकगात्रभावलाभ आमोदार्थं वेति भावः।

अत्र कदम्बपुष्पत्वं कदम्बपुष्पतुल्यत्वमिति गात्रस्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः। उपजातिर्वृत्तम् ॥४७॥

(प) विदू इति। अनार्य असाधु। अत्रभवतीं माननीयां वसन्तसेनाम्।

अत्र तोटकं नाम गर्भसन्ध्यङ्गम्—"तोटकं पुनः। संरब्धवाक्" इति लक्षणात्।

---

বসন্তসেনা শৃঙ্গারের অবস্থা অভিনয় করতঃ চারুদত্তকে আলিঙ্গন করিল।

চারুদত্ত। (স্পর্শসুখ অভিনয় করতঃ প্রত্যালিঙ্গন করিয়া)

হে মেঘ! তুমি অতিগম্ভীরভাবে গর্জন কর, তোমার অনুগ্রহে কামার্ত্ত এবং প্রিয়াস্পর্শে রোমাঞ্চিত ও জাতানুরাগ আমার গাত্র, কদম্বপুষ্পত্ব প্রাপ্ত হইয়াছে ॥৪৭॥

(প) বিদূষক। দাসীর পো! দুর্দিন! এখন তুই বড়ই অসৎ হইয়াছিস্, যে হেতু, তুই বিদ্যুৎ দ্বারা বসন্তসেনাকে ভীত করিতেছিস্।

चारु। वयस्य! नार्हस्युपालब्धुम्।

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु।
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः ॥४८॥

अपि च। वयस्य!

धन्यानि तेषां खलु जीवितानि ये कामिनीनां गृहमागतानाम्।
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति ॥४९॥

---

वर्षेति। वर्षशतं यावत्, अविरता धारा वृष्टिधारा यस्मिन् तत्तादृशं दुर्दिनमस्तु शतह्रदा विद्युत् स्फुरतु उन्मिषतु च। यद्यस्मादहम्, अस्मद्विधानां दरिद्रजनानां दुर्लभया धनप्राप्यत्वेन दुष्प्रापया, प्रियया वसन्तसेनया, परिष्वक्त आलिङ्गितः। एतेन वेश्यासु वसन्तसेनायाः परमोत्कर्षः सूचितः।

अतएवात्र उदाहरणं नाम गर्भसन्धेरङ्गम्। यथा साहित्यदर्पणे—

"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते।"

आर्या जातिः ॥४८॥

धन्यानीति। ये जनाः, गृहमागतानां स्वयमेव स्वगृहे उपस्थितानाम्, कामिनीनां कामुकीनां स्त्रीणाम्, मेघोदकशीतलानि आर्द्राणि गात्राणि अङ्गानि गात्रेषु स्वाङ्गेषु, परिष्वजन्ति आलिङ्गन्ति, तेषां खलु जनानाम्, जीवितानि धन्यानि। सुतरां स्वयमेवास्मद्गृहमागताया वसन्तसेनाया ईदृशालिङ्गनलाभान्ममापि जीवितं धन्यमेवेति भावः।

अतएवात्र अप्रस्तुतजनसामान्यात् चारुदत्तरूपजनविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः।

इन्द्रवज्रा वृत्तम् ॥४९॥

---

চারুদত্ত। সখে! তুমি উহাকে তিরস্কার করিতে পার না।

শত বৎসর যাবৎ অবিরত ধারায় দুর্দ্দিন হউক এবং বিদ্যুৎস্ফুরিত হইতে থাক। যে হেতু, আমাদের মত লোকের পক্ষে দুর্লভ প্রিয়তমা আমাকে আলিঙ্গন করিয়াছেন ॥৪৮॥

আরও, সখে! তাহাদের জীবনই ধন্য, যাহারা গৃহে স্বয়ং আগত

प्रिये ! वसन्तसेने !

स्तम्भेषु प्रचलित-वेदि-सञ्चयान्तं
शीर्णत्वात् कथमपि धार्य्यते वितानम् ।
एषा च स्फुटित-सुधा-द्रवानुलेपात्
संक्लिन्ना सलिल-भरेण चित्रभित्तिः ॥५०॥

ऊर्द्ध्वमवलोक्य । अये ! इन्द्रधनुः । प्रिये ! पश्य पश्य—

स्तम्भेष्विति । प्रचलितौ वायुवेगेन कम्पितौ वेदिसञ्चयौ उपरिबद्धभूमिसमूहनिकटे अन्तः प्रान्तभागौ यस्य तत्तादृशम्, वितानं चन्द्रातपं, शीर्णत्वात् स्तम्भानामेव पुरातनतया शीर्णत्वात् हेतोः, कथमपि नितान्तकष्टेन, स्तम्भेषु धार्य्यते बन्धनेन रक्ष्यते। एतेन वितानस्य नितान्तचञ्चलनात् जीर्णस्तम्भानामेव महती पतनाशङ्का व्यज्यते। एषा च चित्रा नानास्थाने सङ्कलितभग्नतया विचित्ररूपा भित्तिः स्फुटितसुधाद्रवानुलेपात् सुधानुलेपस्य-वर्णस्य चूर्णलेपस्य स्फुटितत्वादित्यर्थः, सलिलभरेण स्फुटितचूर्णलेपरन्ध्रेण प्रविष्टेन वृष्टिजलप्रवाहेण संक्लिन्ना अत्यन्तमेव क्लिन्ना। अतएवास्या अपि जीर्णभित्तेर्नितरामेव पतनाशङ्केति भावः।

प्रहर्षिणी वृत्तम् ॥५०॥

কামিনীদিগের বৃষ্টিজলে শীতল ও আর্দ্র গাত্র, গাত্রে রাখিয়া আলিঙ্গন করিতে পারে ॥৪৯॥

প্রিয়ে। বসন্তসেনে। উপরের বেদির নিকটে চন্দ্রাতপের প্রান্তভাগ, বায়ুবেগে অত্যন্ত কম্পিত হইতেছে, সুতরাং জীর্ণস্তম্ভে উহার বন্ধন, ঐ চন্দ্রাতপকে কোন প্রকারে ধরিয়া রাখিয়াছে। এদিকে চূর্ণের লেপ ভাঙ্গিয়া পড়ায় এই বিচিত্র দেওয়াল, জলের প্রবাহে আর্দ্র হইয়া গিয়াছে ॥৫০॥

(উপরের দিকে চাহিয়া) ওহে। ইন্দ্রধনু উঠিয়াছে। প্রিয়ে। দেখ দেখ—

विद्युज्जिह्वेनेदं महेन्द्रचापोच्छ्रितायतभुजेन।
जलधर-विवृद्ध-हनुना विजृम्भितमिवान्तरीक्षेण ॥५१॥

तदेहि, अभ्यन्तरमेव प्रविशावः। इत्युत्थाय परिक्रामति। (फ)

तालीषु तारं विटपेषु मन्द्रं
शिलासु रूक्षं सलिलेषु चण्डम्।
सङ्गीतवीणा इव ताड्यमाना-
स्तालानुसारेण पतन्ति धाराः ॥५२॥

---

विद्युदिति। विद्युदेव जिह्वा लम्बमानत्वात् लोहितवर्णत्वाच्च रसना यस्य तेन, महेन्द्रचापम् इन्द्रधनुरेव उच्छ्रितौ उत्तोलितौ आयतौ दीर्घौ भुजौ परस्परसम्बद्धबाहुद्वयं यस्य तेन, तथा जलधरो मेघ एव विवृद्धा लम्बिता हनुर्मुखं यस्य तेन, अन्तरीक्षेण आकाशेन सिंहदेहेनेत्यर्थः, विजृम्भितमिव जृम्भाकृतेव लम्बितजिह्वादितत्साधर्म्यादर्शनादिति भावः। एतेन प्रचण्डगर्जनवज्रपतनयोः सम्भावनापि व्यज्यते।

अत्र विद्युदादौ जिह्वात्वाद्यारोपे शाब्दे, अम्बरेऽपि सिंहत्वारोपस्तु आर्थ इत्येकदेश-विवर्तिरूपक क्रियोत्प्रेक्षया सङ्कीर्यते।

आर्या जातिः ॥५१॥

(फ) तदिति। तत् तस्मात् उपस्थितविघ्नत्वात् प्रचण्डगर्जन वज्रपतनयोः सम्भवाच्च हेतोरित्यर्थः।

तालीष्विति। तालानुसारेण गीततालानुसरणेन, ताड्यमाना वाद्यमाना, सङ्गीत-वीणा सङ्गीतप्रसक्तवीणा इव धारा वृष्टिपरम्परा तालीषु तालवनेषु तारमुच्चशब्दं यथा

---

আকাশ যেন হাই তুলিতেছে ; কারণ, বিদ্যুৎ ইহার জিহ্বা, ইন্দ্রধনু ইহার উত্তোলিত দীর্ঘবাহু এবং মেঘ ইহার প্রসারিত হনু ॥৫১॥

(ফ) অতএব আইস, আমরা ভিতরে যাই। (এই বলিয়া উঠিয়া পাদক্ষেপ করিতে লাগিলেন)

इति निष्क्रान्ताः सर्वे ।

## दुर्दिनो नाम पञ्चमोऽङ्कः ॥०॥

स्यात्तथा, विटपेषु तरुशाखासु, मन्द्र_गम्भीरं यथा स्यात्तथा, शिलासु प्रस्तरेषु, रूक्ष कर्कशस्वरं यथा स्यात्तथा, एवं सलिलेषु तडागादिजलेषु, चण्डं तीव्रस्वं यथा स्यात्तथा, पतन्ति, युगपदेवेति भावः ।

अत्र एकस्या एव वृष्टिधाराया युगपदेव तालीवनाद्यनेकगोचरत्वात् विशेषो नामालङ्कारः गीतोपमया सङ्कीर्यते ।

इन्द्रवंशोपेन्द्रवंशयोर्मिलनादुपजातिर्वृत्तम् ॥५२॥

इति महामहोपाध्याय श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यविरचितायां मृच्छकटिक-

टीकायां वसन्तकुसुमाञ्जलिसमाख्यायां पञ्चमाङ्कविवरणं समाप्तम् ॥०॥

---

তালে তালে বাদ্যমান সঙ্গীতবীণার ন্যায় বৃষ্টির ধারা—তালবনে উচ্চশব্দে, বৃক্ষের শাখায় গম্ভীরশব্দে, প্রস্তরের উপর কর্কশশব্দে এবং জলে তীব্রশব্দে পতিত হইতেছে ॥৫২॥

(ইহার পরে সকলে চলিয়া গেল)

দুর্দিননামক পঞ্চম অঙ্ক সমাপ্ত ॥০॥

---

# षष्ठोऽङ्कः ।

—:०:—

ततः प्रविशति चेटी । †

चेटी । कधं अज्ज वि अज्जआ ण विबुज्झदि । भोदु, पविसिअ पड़िवोधइस्सं । इति नाट्येन परिक्रामति । (क)

ततः प्रविशति आच्छादितशरीरा प्रसुप्ता वसन्तसेना ।

चेटी । निरूप्य । उत्थेदु उत्थेदु अज्जआ । पभादं संवुत्तं । (ख)

वसन्त । प्रतिबुध्य । कधं रत्ति ज्जेव पभादं संवुत्तं ? । (ग)

---

(क) कथमद्यापि आर्य्या न विबुध्यते । भवतु, प्रविश्य प्रतिबोधयिष्यामि ।

(ख) उत्तिष्ठतु उत्तिष्ठतु आर्य्या । प्रभातं सहत्तम् ।

(ग) कथं रात्रिरेव प्रभातं संवृत्तम् ? ।

---

† ततः इति । चेटी चारुदत्तस्यैव काचिद्दासी ।

(ग) वसन्त इति । एतेन सुरतोत्थीदैन रात्रिमतिवाह्य प्रभातप्रायसमये निद्रा सूचिता ।

---

তদনন্তর দাসীর প্রবেশ ।

(ক) দাসী । আর্য্যা বসন্তসেনা এখনও জাগিতেছেন না কেন । হউক, প্রবেশ করিয়া উঁহাকে জাগাই । (এই বলিয়া অভিনয়ের প্রকারে পাদক্ষেপ করিতে লাগিল ।)

তদনন্তর আবৃতশরীরে নিদ্রিত অবস্থায় বসন্তসেনার প্রবেশ ।

(খ) দাসী । (দেখিয়া) আর্য্যা উঠুন উঠুন, প্রভাত হইয়াছে ।

चेटी। अम्हाणं एसो पभादो, अज्जआए उण रत्ति ज्जेव। (घ)

वसन्त। हञ्जे! कहिं उण तुम्हाणं जूदियरो?। (ङ)

चेटी। अज्जए। वड्ढमाणअं समादिसिअ पुप्फकरण्डअं जिण्णुज्जाणं गदो अज्जचारुदत्तो। (च)

वसन्त। किं समादिसिअ?। (छ)

चेटी। जोएहि रत्तीए पवहणं। वसन्तसेणा गच्छदु त्ति। (ज)

(घ) अस्माकमेतत् प्रभातम्, आर्य्याया पुन रात्रिरेव।

(ङ) हञ्जे। कुत्र पुनर्युष्माकं द्यूतकारः?।

(च) आर्य्ये! वर्द्धमानकं समादिश्य पुष्पकरण्डकं जीर्णोद्यानं गत आर्य्यचारुदत्तः। (छ) किं समादिश्य?।

(घ) चेटीति। आर्य्यायास्तु, पुन रात्रिरेव, उदासीन प निद्रितत्वादिति भावः।

(ङ) वसन्त इति। द्यूतकारश्चारुदत्तः।

(च) चेटीति। वर्द्धमानक तदाख्य भृत्यम्। पुष्पाणां करण्डक माल्यविधय इति पुष्पकरण्डकं नाम जीर्णोद्यानं पुरातनोपवनम्।

(গ) বসন্তসেনা। (জাগিয়া) রাত্রিই প্রভাত হইল কি করিয়া?।

(ঘ) দাসী। আমাদের নিকট এটা প্রভাত, কিন্তু আপনাদের নিকট রাত্রিই।

(ঙ) বসন্তসেনা। ওলো! তোমাদের দ্যূতকর কোথায়?।

(চ) দাসী। আর্য্যে! আর্য্য চারুদত্ত, বর্দ্ধমানকে আদেশ করিয়া পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে গিয়াছেন।

(ছ) বসন্তসেনা। কি আদেশ করিয়া?

वसन्त । हञ्जे ! कहिं मए गन्तव्वं ? । (झ)

चेटी । अज्जए ! जहिं चारुदत्तो । (ञ)

वसन्त । चेटीं परिष्वज्य । सुट्ठु ण णिज्झादो रत्तीए, ता अज्ज पच्चक्खं पेक्खिस्सं । हञ्जे ! किं पविट्ठा अहं इह अब्भन्तरचदुस्सालअं ? । (ट)

चेटी । ण केवलं अब्भन्तरचदुस्सालअं, सव्वजणस्स वि हिअअं पविट्ठा । (ठ)

(ज) योजय रात्रौ प्रवहणम् । वसन्तसेना गच्छतु इति ।

(झ) हञ्जे ! कस्मिन् मया गन्तव्यम् ? । (ञ) आर्ये ! यस्मिन् चारुदत्त ।

(ट) हञ्जे ! सुष्ठु न निध्यातो रात्रौ, तदद्य प्रत्यक्ष प्रेक्षिष्ये । हञ्जे ! किं प्रविष्टा अहमिह अभ्यन्तरचतुःशालकम् ? ।

(ठ) न केवलमभ्यन्तरचतुःशालकम्, सर्वजनस्यापि हृदयं प्रविष्टा ।

---

(ज) चेटीति । रात्रौ आगमिष्यामिति शेष । प्रवहणं योयानम् । गच्छत्विति सम्भावनाया लोट् ।

(ट) वसन्त इति । सुष्ठु सम्यक्, न निध्यातो न दृष्ट, आमोदविह्वलत्वादिति भाव । अद्य दिवस एवेत्यर्थ । प्रेक्षिष्ये चारुदत्तमिति शेष ।

(ठ) चेटीति । हृदयं प्रविष्टा स्नेहपात्रीभूतेत्यर्थ सर्वेषामेव सद्व्यवहारादित्याशय ।

---

(জ) দাসী। "রাত্রিতেই গাড়ী জুড়িয়া রাখ, বসন্তসেনা যাইবেন।"

(ঝ) বসন্তসেনা। ওগো! আমার কোথায় যাইতে হইবে ?।

(ঞ) দাসী। আর্য্যে! যেখানে চারুদত্ত (গিয়াছেন)।

(ট) বসন্তসেনা। (দাসীকে আলিঙ্গন করিয়া) আমি রাত্রিতে ভাল করিয়া দেখিতে পারি নাই, তা, আজ প্রত্যক্ষে দেখিব। ওগো! আমি কি ভিতরের চতুঃশালায় প্রবেশ করিয়াছি ?।

वसन्त। अवि सन्तप्पदि चारुदत्तस्स परिअणो ?। (ड)

चेटी। सन्तप्पिस्सदि। (ढ)

वसन्त। कदा ?। (ण)

चेटी। जदा अज्जआ गमिस्सदि। (त)

वसन्त। तदो मए पढमं सन्तप्पिदव्वं। सानुनयम्। हञ्जे! गेण्ह एदं रअणावलिं, मम वहिणिआए अज्जाधूदाए गदुअ समप्पेहि। भणिदव्वं च—"अहं सिरिचारुदत्तस्स गुण-

(ड) अपि सन्तप्यते चारुदत्तस्य परिजन ?।

(ढ) सन्तप्स्यति। (ण) कदा ?। (त) यदा आर्या गमिष्यति।

(थ) ततो मया प्रथम सन्तप्तव्यम्। हञ्जे। गृहाण एतां रत्नावलीम् मम

(ड) वसन्त इति। परिजन परिवार स्त्री धूतेति यावत्। सततमसमागमादिति भाव।

(त) चेटीति। यदा गमिष्यति, तदा चारुदत्तस्य परिजन सन्तप्स्यतीत्यर्थं", भवत्या दर्शनादित्याशय। एतेन धूतावसन्तसेनयो परस्परसद्भावव्यवहारजनितसौहार्दं धूताया रसपातित्रात्यय व्यज्यते।

(थ) वसन्त इति। ततस्तदा। मया प्रथम सन्तप्स्यमिति। धूताया गुणेन तथा

(ঠ) দাসী। কেবল ভিতরের চতুঃশালায় নহে, আপনি সকল লোকের হৃদয়েও প্রবেশ করিয়াছেন।

(ড) বসন্তসেনা। চারুদত্তের স্ত্রী কি দুঃখিত হইয়াছেন ?।

(ঢ) দাসী। দুঃখিত হইবেন।

(ণ) বসন্তসেনা। কখন ?।

(ত) দাসী। যখন আপনি যাইবেন।

(থ) বসন্তসেনা। তখন আমারই প্রথম দুঃখিত হইতে হইবে। (অনুনয়ের সহিত) ওহে! এই রত্নমালা গ্রহণ কর, আমার ভগিনী আর্যা

वसन्त। हञ्जे! कहिं मए गन्तव्वं?। (झ)

चेटी। अज्जए! जहिं चारुदत्तो। (ञ)

वसन्त। (चेटीं परिष्वज्य।) सुट्ठु ण णिज्झादो रत्तिं अज्ज पच्चक्खं पेक्खिस्सं। हञ्जे! किं पविट्ठा अब्भन्तरचदुस्सालअं?। (ट)

चेटी। ण केवलं अब्भन्तरचदुस्सालअं, सव्वजणस्स हिअअं पविट्ठा। (ठ)

(ज) योजय रात्रौ प्रवहणम्। वसन्तसेना गच्छतु इति।

(झ) हञ्जे! कुत्र मया गन्तव्यम्?। (ञ) आर्य्ये! यस्मिन् चारुदत्तः।

(ट) हञ्जे! सुष्ठु न निध्यातो रात्रौ, तदद्य प्रत्यक्षं प्रेक्षिष्ये। हञ्जे! किं प्रविष्टा अहमिह अभ्यन्तरचतुःशालकम्?।

(ठ) न केवलमभ्यन्तरचतुःशालकम्, सर्वजनस्यापि हृदयं प्रविष्टा।

---

(ज) चेटीति। रात्रौ आगमिष्यामिति शेषः। प्रवहणं गोयानम्। गच्छत्विति सम्भावनायां लोट्।

(ट) वसन्त इति। सुष्ठु सम्यक्, न निध्यातो न दृष्टः; आमोदविह्वलत्वादिति भावः। अद्य दिवस एवेत्यर्थः। प्रेक्षिष्ये चारुदत्तमिति शेषः।

(ठ) चेटीति। हृदयं प्रविष्टा स्नेहपात्रीभूतेत्यर्थः, सर्वत्रैव सद्व्यवहारादित्याशयः।

---

(ज) দাসী। "রাত্রিতেই গাড়ী জুড়িয়া রাখ, বসন্তসেনা যাইবেন।"

(ঝ) বসন্তসেনা। ওলো। আমার কোথায় যাইতে হইবে?।

(ঞ) দাসী। আর্য্যে। যেখানে চারুদত্ত (গিয়াছেন)।

(ট) বসন্তসেনা। (দাসীকে আলিঙ্গন করিয়া) আমি রাত্রিতে ভাল করিয়া দেখিতে পারি নাই, তা, আজ প্রত্যক্ষে দেখিব। ওলো! আমি কি ভিতরের চতুঃশালায় প্রবেশ করিয়াছি?।

वसन्त। अवि सन्तप्पदि चारुदत्तस्स परिअणो ?। (ड)

चेटी। सन्तप्पिस्सदि। (ढ)

वसन्त। कदा ?। (ण)

चेटी। जदा अज्जआ गमिस्सदि। (त)

वसन्त। तदो मए पढमं सन्तप्पिदव्वं। सानुनयम्। हञ्जे। गेण्ह एदं रअणावलिं, मम वहिणिआए अज्जाधूदाए गदुअ समप्पेहि। भणिदव्वं च—"अहं सिरिचारुदत्तस्स गुण-

(ड) अपि सन्तप्यते चारुदत्तस्य परिजनः ?।

(ढ) सन्तप्स्यति। (ण) कदा ?। (त) यदा आर्या गमिष्यति।

(थ) ततो मया प्रथमं सन्तप्तव्यम्। चेटि। गृहाण एतां रत्नावलीम्, मम

(ड) वसन्त इति। परिजनः परिवारः स्त्री धूतेति यावत्। सततमनागमादिति भावः।

(त) चेटीति। यदा गमिष्यति, तदा चारुदत्तस्य परिजनः सन्तप्स्यतीत्यर्थः, भवत्या अदर्शनादित्याशयः। एतेन धूतावसन्तसेनयोः परस्परसद्भावव्यवहारज्ञातत्वोक्त्याहं धूताया परमपातिव्रत्यञ्च व्यज्यते।

(थ) वसन्त इति। ततस्तदा। मया प्रथमं सन्तप्तव्यमिति। धूताया गुणैस्तया

(ঠ) দাসী। কেবল ভিতরের চতুঃশালায় নহে, আপনি সকল লোকের হৃদয়েও প্রবেশ করিয়াছেন।

(ড) বসন্তসেনা। চারুদত্তের স্ত্রী কি দুঃখিত হইয়াছেন ?।

(ঢ) দাসী। দুঃখিত হইবেন।

(ণ) বসন্তসেনা। কখন ?।

(ত) দাসী। যখন আপনি যাইবেন।

(থ) বসন্তসেনা। তখন আমারই প্রথম দুঃখিত হইতে হইবে। (অনুনয়ের সহিত) ওহে। এই রত্নমালা গ্রহণ কর, আমার ভগিনী আর্য্যা

णिज्जिदा दासी, तदा तुम्हाणं पि; ता एसो तुह ज्जेव कण्ठाहरणं होदु रअणावली। (थ)

चेटी। अज्जए! कुविस्सदि चारुदत्तो अज्जाए दाव। (द)

वसन्त। गच्छ, ण कुविस्सदि। (ध)

चेटी। गृहीत्वा। जं आणवेदि। इति निष्क्रम्य पुनः प्रविश्य। अज्जए! भणादि अज्जा धूदा—अज्जउत्तेण तुम्हाणं पसादीकिदा,

---

भगिन्यै आर्य्यधूतायै गत्वा समर्पय; वक्तव्यञ्च—'इयं श्रीचारुदत्तस्य गुणनिर्जिता दासी, तदा युष्माकमपि; तदेषा तवैव कण्ठाभरणं भवतु रत्नावली'।.

(द) आर्य्ये! कुपिष्यति चारुदत्त आर्य्यायै तावत्।

(ध) गच्छ, न कुपिष्यति।

---

मे क्रीतप्रायत्वादिति भाव। गुणेन दयादाक्षिण्यादिना निर्जिता आयत्तीकृता, दासी तदा चारुदत्तस्य दासीत्वे, युष्माकमिति गौरवाद्बहुवचनं तवापीत्यर्थः, अहं दासीत्यन्वय, पतिपत्न्योरभिन्नत्वादिति भाव.। ततु तस्मात् तवापि दासीत्वादित्यर्थ.। तवैवेति। ईदृशोत्तमरत्नावल्या दासीकण्ठाभरणत्वानौचित्यादित्याशय।

(द) चेटीति। कुपिष्यति, दत्तस्य पुनर्ग्रहणेन कार्पण्यप्रकाशादिति भाव.।

(ध) वसन्त इति। न कुपिष्यति, मत्सुवर्णभाण्डप्राप्तौ रत्नावलीप्रत्यर्पणौचित्येन तदग्रहणस्यानौचित्यादिति भाव।

---

धूताকে যাইয়া ইহা দিবে এবং বলিবে—"আমি শ্রীচারুদত্তের গুণনির্জিত দাসী, তাহা হইলে আপনারও (দাসী), অতএব এই রত্নমালা আপনারই কণ্ঠের অলঙ্কার হউক।"

(দ) দাসী। আর্য্যে! তাহা হইলে চারুদত্ত ধূতার উপরে ক্রুদ্ধ হইবেন।

(ধ) বসন্তসেনা। যাও, ক্রুদ্ধ হইবেন না।

ण जुत्तं मम एदं गेण्हिदुं । अज्जउत्तो ज्जेव मम आहरण-विसेसो त्ति जाणादु भोदी । (न)

ततः प्रविशति दारकं गृहीत्वा रदनिका ।

रद । एहि वच्छ ! सअड़िआए कीलम्ह । (प)

दारकः । सकरुणम् । रदणिए ! किं मम एदाए मट्टिआसअ-ड़िआए, तं ज्जेव सोवण्ण-सअड़िअं देहि । (फ)

---

(न) यदाज्ञापयति । भणति आर्य्या धूता—"आर्य्यपुत्रेण युष्माकं प्रसादीकृता न युक्तं ममैतां ग्रहीतुम् । आर्य्यपुत्र एव मम आभरणविशेष इति जानातु भवती ।"

(प) एहि वत्स । शकटिकया क्रीडावः ।

(फ) रदनिके । किं मम एतया मृत्तिकाशकटिकया ; तामेव सौवर्ण-शकटिका देहि ।

---

(न) चेटीति । प्रसादीकृता प्रसन्नतया दत्तेत्यर्थः । ननु न गृह्णाति चेत् तदा तवाभरणाभाव इत्याह—आर्य्यपुत्र एवेति । एतेनापि परमपातिव्रात्यं व्यज्यते ।

(प) रद इति । शकटिकया मृच्छकटेन ।

---

(ন) দাসী। (গ্রহণ করিয়া) যাহা আদেশ করেন। (এই বলিয়া চলিয়া যাইয়া আবার প্রবেশ করিল) আর্য্যে! আর্য্যা ধূতা বলিলেন—"আর্য্যপুত্র আপনাকে সন্তোষপূর্ব্বক দিয়াছেন, সুতরাং ইহা গ্রহণ করা আমার উচিত নহে। আর্য্যপুত্রই আমার বিশেষ অলঙ্কার, ইহা আপনি জানিয়া রাখুন।"

তাহার পর একটী বালক লইয়া রদনিকার প্রবেশ।

(প) রদনিকা। বৎস! আইস, গাড়ীখানি দিয়া খেলা করি।

(ফ) বালক। (করুণস্বরে) রদনিকা! এই মাটীর গাড়ী দিয়া আমার কি হইবে? সেই সোণার গাড়ীখানি আমাকে দাও।

रद। सनिर्व्वेदं निश्वस्य। जाद! कुदो अम्हाणं सुवस-ववहारो?। तादस्स पुणो वि रिद्धीए सुवसअड़िआए कोलिस्ससि। ता जाव विणोदेमि णं, अज्जआ-वसन्तसेणाआए समोवं उवसप्पिस्सं। उपसृत्य। अज्जए! पणमामि। (ब)

वसन्त। रदणिए! साअदं दे?। कस्स उण अअं दारओ? अणलङ्किद-सरीरो वि चन्दमुहो आणन्देदि मम हिअअं। (भ)

(ब) जात। कुतोऽस्माकं सुवर्णव्यवहारः?। तातस्य पुनरपि ऋद्ध्या सुवर्णशकटिकया क्रीडिष्यसि। तद्यावद्विनोदयाम्येनम्। आर्य्यवसन्तसेनायाः समीपमुपसर्पिष्यामि। आर्य्ये! प्रणमामि।

(भ) रदनिके। स्वागतं ते?। कस्य पुनरयं दारकः? अनलङ्कृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम्।

(ब) रद इति। तातस्य चारुदत्तस्य, पुनरपि ऋद्ध्या दैवप्रसादात् भाविन्या धनसम्पदा। तद्यावदिति तु स्वयमवधुक्ति.। विनोदयामि आश्वासयामि।

(भ) वसन्त इति। दारको बालक.। चन्द्र इव मुखं यस्य सः।

(ব) রদনিকা। (আত্মাবমাননার সহিত নিশ্বাস ত্যাগ করিয়া) বৎস! আমাদের সোণার ব্যবহার হইবে কোথা হইতে?। বাবার পুনর্বার সম্পত্তি হইলে সোণার গাড়ী দিয়া খেলা করিবে। তা, ইহাকে আশ্বস্ত করি, আর্য্যা বসন্তসেনার নিকট যাই, (নিকটে যাইয়া) আর্য্যে! প্রণাম করি।

(ভ) বসন্তসেনা। রদনিকে! তোমার শুভাগমন ত?। এ বালকটী কাহার?। অনলঙ্কৃতদেহ হইলেও, চন্দ্রবদন এই বালক আমার চিত্তকে আনন্দিত করিতেছে।

रद। एसो क्खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णाम। (म)

वसन्त। बाहू प्रसार्य्य। एहि मे पुत्तअ! आलिङ्ग। उत्सङ्गे उपवेश्य। अणुकिदं अणेण पिदुणो रूवं। (य)

रद। ण केवलं रूवं सीलं पि, तक्केमि। एदिणा अज्जचारुदत्तो अत्ताणअं विणोदेदि। (र)

वसन्त। अध किं णिमित्तं एसो रोअदि?। (ल)

---

(म) एष खलु आर्य्यचारुदत्तस्य पुत्रो रोहसेनो नाम।

(य) एहि मे पुत्रक। आलिङ्ग। अनुकृतमनेन पितू रूपम्।

(र) न केवलं रूपम् शीलमपि, तर्कयामि। एतेन आर्य्यचारुदत्त आत्मानं विनोदयति। (ल) अथ किं निमित्तमेष रोदिति?।

---

(म) रद इति। रोहति देवानुग्रहादुत्पद्यते इति रोहा, रोहा सेना यस्य स इति यथाकथञ्चित् व्युत्पत्तिः।

(र) रद इति। एतेन पुत्रेण आत्मानं चित्तम्, विनोदयति दारिद्र्यादात्मनि निराशोऽपि आश्वासयति।

---

(ম) রদনিকা। এ'টী আর্য্য চারুদত্তের পুত্র, ইহার নাম—'রোহসেন'।

(য) বসন্তসেনা। (বাহুযুগল প্রসারণ করিয়া) আইস, আমার পুত্র! আলিঙ্গন কর। (এই বলিয়া কোলে বসাইয়া) এ যে পিতার রূপের অনুসরণ করিয়াছে।

(র) রদনিকা। কেবল পিতার রূপের নহে, স্বভাবেরও অনুসরণ করিয়াছে, ইহা আমি মনে করি। আর্য্য চারুদত্ত ইহা দ্বারা আপনাকে আনন্দ দেন।

रद। एदिणा पड़िवेसिअ-गहवइ-दारअ-केरिआए सुवण्ण-सअड़िआए कीलिदं, तेणअ सा णीदा, तदो उण तं मग्गन्तस्स मए इअं मट्टिआ-सअड़िआ कदुअ दिण्णा। तदो भणादि—"रदणिए! किं मम एदाए मट्टिआ-सअड़िआए, तं ज्जेव सोवण्ण-सअड़िअं देहि" त्ति। (व)

वसन्त। हड्डी हड्डी। अअं पि णाम पर-सम्पत्तीए सन्तप्पदि। भअवं! कअन्त! पोक्खर-वत्त-पड़िद-जलविन्दु-

(व) एतेन प्रतिवेशिक गृहपति दारकस्य सुवर्णशकटिकया क्रीडितम्, तेन च सा नीता, तत पुनस्तां मार्गयतो मया इयं मृत्तिका शकटिका कृत्वा दत्ता। ततो भणति—"रदनिके। किं मम एतया मृत्तिका शकटिकया, तामेव सौवर्णं शकटिकां देहि" इति।

(श) हा धिक् हा धिक्। अयमपि नाम परसम्पत्त्या सन्तप्यते। भगवन्!

(व) रद इति। एतेन बालकेन, प्रतिवेशिक प्रतिवेशी समरुपसन्निहित यो गृह पतिर्वणिक् तस्य दारकी बालकस्तस्य। तेन च प्रतिवेशिगृहपतिदारकेण सा सुवर्ण-शकटिका। मार्गयत अन्विष्यत प्रार्थयत इत्यर्थं।

(श) वसन्त इति। अयमपि भूतपूर्व्वधनिमचारुदत्तस्य पुत्रोऽपि। कृतान्त! हे विधे! पुष्करस्य पद्मस्य पत्रे पतिता ये जलबिन्दवस्तत्सदृशैरत्यन्तचञ्चलैरित्यर्थं।

(ল) বসন্তসেনা। এ, কি জন্ত রোদন করিতেছে?।

(ব) রদনিকা। এ, প্রতিবেশী কোন বণিক্ বালকের সোণার গাড়ী দিয়া খেলা করিতেছিল, সে বালক তাহা নিয়া গিয়াছে, তা'র পর তাহা খুঁজিতেছিল, তাহার পর আমি মাটী দিয়া এই গাড়ীখানি করিয়া দিয়াছি। তাই বলিতেছে—'রদনিকা! এই মাটীর গাড়ী দিয়া আমার কি হইবে? সেই সোণার গাড়ীখানি আমাকে দাও।"

(শ) বসন্তসেনা। হায়! হায়! এও, পরের সম্পদে দুঃখিত

सरिसेहिं कीलसि तुमं पुरिस-भाअधेएहिं। इति सास्रा। जाद! मा रोद, सोवण्ण-सअड़िआए कीलिस्ससि। (न)

दारकः। रदणिए! का एसा?। (प)

वसन्त। पिदुणो दे गुणणिज्जिदा दासी। (फ)

रद। जाद! अज्जआ दे जणणी भोदि। (ब)

दारकः। रदणिए! अलिअं तुमं भणासि, जइ अम्हाणं अज्जआ जणणी, ता कीस अलङ्किदा?। (भ)

---

कृतान्त! पुष्कर-पत्र-पतित-जलबिन्दु-सदृशैः क्रीडसि त्वं पुरुषभागधेयैः। जात! मा रुदिहि, सौवर्णशकटिकया क्रीडिष्यसि।

(प) रदनिके! का एषा?। (फ) पितुस्ते गुणनिर्जिता दासी।

(ब) जात! आर्य्या ते जननी भवति।

(भ) रदनिके! अलीकं त्वं भणसि, यद्यस्माकमार्य्या जननी, तत् केन अलङ्कृता?।

---

पुरुषाणां लोकानां भागधेयैर्भाग्यैः, क्रीडसि खेलसि जलगुटिकावत् कदाचिदूर्द्ध्वं यासि कदाचिदधो यासीत्यर्थः।

(ब) रद इति। जननी जननीस्थानपातिनी, पितृभोग्यत्वादिति भावः।

(भ) दारक इति। अलीकं मिथ्या। केन हेतुना। एतेनास्मज्जनन्याः सर्व्वदैवालङ्कृतत्वं व्यज्यते।

---

হইতেছে। ভগবন্! দৈব! পদ্মপত্রপতিত-জলবিন্দুর তুল্য মানুষের ভাগ্যদ্বারা তুমি খেলা কর। (অশ্রুমোচন করিতে করিতে) বৎস! রোদন করিও না, সোনার গাড়ী দিয়া তুমি খেলা করিবে।

(প) বালক। রদনিকা! ইনি কে?।

(ফ) বসন্তসেনা। তোমার পিতার গুণনির্জিত দাসী।

(ব) রদনিকা। বৎস! ইনি তোমার মাতা হন।

वसन्त। जाद! मुद्धेण मुहेण अदिकरुणं मन्तेसि। नाट्येनाभरणान्यवतार्य्य रुदती। एसा दाणिं दे जणणी संवुत्ता, ता गेण्ह एदं अलङ्कारअं, सोवण्ण-सअड़िअं घड़ावेहि। (क)

दारकः। अवेहि, ण गेण्हिस्सं, रोदसि तुमं। (ख)

वसन्त। अश्रूणि प्रमृज्य। जाद! ण रोदिस्सं। गच्छ कील। अलङ्कारैर्मृच्छकटिका (१) पूरयित्वा। जाद! कारेहि सोवण्ण-सअड़िअं। (ग)

---

(क) जात। मुग्धेन मुखेन अतिकरुणं मन्त्रयसि। एषा इदानीं ते जननी संवृत्ता। तद्गृहाणैतमलङ्कारकम्, सौवर्णशकटिकां घटय।

(ख) अपेहि, न ग्रहीष्यामि, रोदिषि त्वम्।

---

(क) वसन्त इति। मुग्धेन सुन्दरेण। अतिकरुणमतीवशोकोद्दीपकम्, मन्त्रयसि ब्रवीषि। घटय शिल्पिना निर्मापय।

(ख) दारक इति। अपेहि अपसर, न ग्रहीष्यामि एतमलङ्कारसमूहमिति शेषः। यतस्त्वं रोदिषि, एतद्दानाद् खेदिति भावः।

---

(ক) বালক। বদনিকা! তুমি মিথ্যা কথা বলিতেছ, যদি ইনি আমার মাতা হইবেন, তবে অলঙ্কৃত হইলেন কেন?।

(ক) বসন্তসেনা। বৎস! মনোহর মুখদ্বারা অতিদুঃখের কথা বলিতেছ। (অভিনয়প্রকারে অলঙ্কারসমূহ অবতারণ করিয়া রোদন করিতে করিতে) এই এখন তোমার মাতা হইলাম। তা, এই অলঙ্কার-সমূহ গ্রহণ কর, ইহা দ্বারা সোণার গাড়ী তৈয়ার করাও।

(খ) বালক। দূর হও, আমি লইব না, তুমি কাঁদিতেছ।

---

(१) मृच्छकटिकम्

इति दारकमादाय निष्क्रान्ता रदनिका । (घ)

प्रविश्य प्रवहणाधिरूढश्चेटः । लदणिए ! लदणिए ! णिवेदेहि अज्जआए वशन्तशेणाए—"ओहालिअं पक्खदुआलए शज्जं पवहणं चिट्ठति ।" (ङ)

प्रविश्य रदनिका । अज्जए ! एसो वड्ढमाणओ विण्णवेदि—"पक्खदुआरए सज्जं पवहणं" त्ति । (च)

---

(ग) जात ! न रोदिष्यामि, गच्छ, क्रीड । जात ! कारय सौवर्णशकटिकाम् ।

(ङ) रदनिके ! रदनिके ! निवेदय आर्यायै वसन्तसेनायै—"अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति ।"

(च) आर्ये ! एष वर्द्धमानको विज्ञापयति—'पक्षद्वारे सज्जं प्रवहणम्' इति ।

---

(ग) वत्सेति । मृच्छकटिका रोहसेनस्यैव क्रीडोपकरणीभूतमृत्तिकानिर्मित-लघुशकटम् ।

(घ) इतीति । दारकशान्त्वनव्याजेन उदारहृदयाया वसन्तसेनायाः एतद्ग्रहणमेव किं रदनिकाया अभिप्रेतमासीत् ? ।

(ङ) प्रविश्येति । चेट—वर्द्धमानाख्यप्रवहणवाहकस्य भृत्य । अपवारितं स्त्रीलोक-गमनोपयोगिभवेन वस्त्रावृतम् प्रवहणं यानम्, पक्षद्वारके पार्श्वद्वारे, सज्जं प्रस्तुतम् ।

---

(গ) বসন্তসেনা। (চোখের জল মুছিয়া) বৎস! কাঁদিব না। যাও খেলা কর। (অলঙ্কার দিয়া মাটীর গাড়ী পূরণ করিয়া) বৎস! সোণার গাড়ী তৈয়ার করাও।

(ঘ) (ইহার পর রদনিকা বালকটীকে লইয়া চলিয়া গেল)।

(ঙ) শকটারূঢ় ভৃত্য প্রবেশ করিয়া। রদনিকে! রদনিকে! আর্য্যা বসন্তসেনার নিকট জানাও—"পার্শ্বের দুয়ারে আবৃত অবস্থায় গাড়ী প্রস্তুত রহিয়াছে।"

वसन्त । हञ्जे ! चिट्ठदु मुहुत्तअं, जाव अहं अत्ताणअं पसाधेमि । (छ)

रद । निष्क्रम्य । वड्ढमाणआ ! चिट्ठ मुहुत्तअं, जाव अज्जआ अत्ताणअं पसाधेदि । (ज)

चेटः । हीही भो ! मए वि जाणत्थलअं विसुमलिदे, ता जाव गेण्हिअ आअच्छामि । एदे णस्सा-लज्जु-कडुआ बइल्ला । भोदु, पवहणेण ज्जेव गदागदिं करिस्सं । इति निष्क्रान्तः । (झ)

(छ) हञ्जे ! तिष्ठतु मुहूर्त्तकम्, यावदहमात्मानं प्रसाधयामि ।

(ज) वर्द्धमानक ! तिष्ठ मुहूर्त्तकम्, यावदार्य्या आत्मानं प्रसाधयति ।

(झ) हीही भोः ! मयापि यानास्तरणं विस्मृतम्, तद्यावद्गृहीत्वा आगच्छामि । एते नस्य-रज्जु-कटुका बलीवर्द्दाः । भवतु प्रवहणेनैव गतागतिं करिष्यामि ।

(छ) वसन्त इति । प्रसाधयामि आत्मशरीरमलङ्कारपरिधानेन अलङ्करोमि ।

(झ) चेट इति । यानस्य गोरथकस्य आस्तरणम् उपरिस्थापनवस्त्रम् । नस्य नासिकारन्ध्रेषु प्रवेशिता या रज्जवस्ताभिः कटुका दुःसहा नितान्तवेगवन्त इत्यर्थः, बलीवर्द्दा वृषभाः । गतागतिं करिष्यामि, तथैव वेगोपशमो भवेदिति भावः ।

(চ) রদনিকা প্রবেশ করিয়া। আর্য্যে। এই বর্দ্ধমান জানাইতেছে—'পার্শ্বের দুয়ারে গাড়ী প্রস্তুত।'

(ছ) বসন্তসেনা। ওলো! কিছু কাল বিলম্ব করুক, যতক্ষণ আমি আপনাকে অলঙ্কৃত করি।

(জ) রদনিকা। (নির্গত হইয়া) বর্দ্ধমান! একটু কাল বিলম্ব কর, যতক্ষণ আর্য্যা আপনাকে অলঙ্কৃত করেন।

(ঝ) ভৃত্য। ওহো! আমিও, গাড়ীর আস্তরণখানি ভুলিয়া আসিয়াছি। তাহা নিয়া আসি। এই গরুগুলিও, নাকে দড়ি দেওয়ায়

वसन्त। हञ्जे! उवणेहि मे पसाधणं, अत्ताणअं पसाधइस्सं। इति प्रसाधयन्ती स्थिता। (ञ)

प्रविश्य प्रवहणाधिरूढः स्थावरकश्चेटः (ट)। आणत्तोम्हि लाअशालअ-संठाणेण—"थावलआ! पवहणं गेण्हिअ पुप्फकलण्डअं जिण्णुज्जाणं तुलिदं आअच्छेहि" त्ति। भोदु, तहिं ज्जेव गच्छामि। वहध वइल्ला! वहध। परिक्रम्यावलोक्य च। कधं गामसअलेहिं लुद्धे मग्गे। किं दाणिं एत्थ कलइस्सं। साटोपम्। अले ले! ओशलध ओशलध। आकर्ण्य। किं भणाध?—"एशे

(ञ) हञ्जे! उपनय मे प्रसाधनम्, आत्मानं प्रसाधयिष्यामि।

(ट) आज्ञप्तोऽस्मि राजश्यालक संस्थानेन—"स्थावरक! प्रवहणं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छ" इति। भवतु तत्रैव गच्छामि। वहत बलीवर्दौ!

(ट) प्रविश्येति। पर्वतादिस्थावरवत् जडत्वात् स्थावरको नाम। संज्ञायां कप्रत्ययः। चेटः शकारस्य भृत्यः। राज्ञः श्यालको भोग्यवनितायाः भ्राता च संस्थानो नाम तेन। पुष्पाणां करण्डकः पात्रविशेषः इति इदमपि पुष्पकरण्डकं नाम।

পাগল হইয়া পড়িয়াছে। হউক, গাড়ী লইয়াই গমনাগমন করিব। (এই বলিয়া ভৃত্য চলিয়া গেল)।

(ঞ) বসন্তসেনা। ওলো! আমার অলঙ্কার আন, আপনাকে অলঙ্কৃত করিব। (এই বলিয়া অলঙ্কৃত করিতে থাকিল)

(ট) শকটারূঢ় স্থাবরকনামক ভৃত্য প্রবেশ করিয়া। রাজার শালা সংস্থান, আমাকে আদেশ করিয়াছেন যে— স্থাবরক! গাড়ী লইয়া পুষ্প-করণ্ডকনামক জীর্ণোদ্যানে তাড়াতাড়ি আয়"। হউক, সেইখানেই যাই। চল, গরু! চল। (গমনপূর্ব্বক দর্শন করিয়া) গ্রামের গাড়ীতে পথ যে রুদ্ধ

कश्श केलके पवहणे" त्ति । एशे लाअ-शालअ-शण्ठाण-केलके पवहणे त्ति । ता शिग्घं ओशलध । अवलोक्य । कधं एशे अवले शहिअं विअ मं पेक्खिअ शहशज्जे व जूदपलाइदे विअ जूदिअले ओहालिअ अत्ताणअं अक्खदो अवक्कन्ते । ता का उण एशे ? । अधवा किं मम एदिणा ? । तुलिदं गमिश्शं । अले ले गामिलुआ ! ओशलध ओशलध । किं भणाध—

वहतम् । कथ ग्रामशकटं बद्धो मर्गः । किमिदानीमव करिष्यामि ? अरे रे । अपसरत अपसरत । कि भणत—"एतत् कस्य प्रवहणम् ?" इति । एतत् राज श्यालक स स्थानस्य प्रवहणमिति । तत् शीघ्रमपसरत । कथम् एष अपर सभिकमिव मा प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकार अपवार्यात्मानम् अन्यत अपक्रान्त । तत क पुनरेष ? । अथवा कि मम एतेन ? । त्वरित गमिष्यामि । अरे रे

बलीवर्दौ । हे दयभो । मदत युवा गच्छतम् । साटोप सगर्व्वम् । सभिक द्यूत-सभाध्यक्षमिव । अपवार्य्य गोपयित्वा, अन्यत अन्यस्रा दिशि, अपक्रान्त अपसृत । ग्राम्या ग्रामोद्भवा यानवाहका । ग्राम्यत्वेन अभिहिता इति ध्वन्यते । चक्रस्य परिवृत्त परिवर्त्तनस्थानम । यूगी वीर, राजश्यालस्यैव अश्यलादिति भाव, चक्रपरिवृत्ति स्वयमपसृत्य तव चक्रपरिवर्त्तनस्थानम, दास्यामि इति काकु, दास्यामि किम् ? कथमपि

হইয়া গিয়াছে। এখন এখানে কি করি ?। (গর্ব্বের সহিত) ওরে। ওরে। সর্ সর্। (শুনিয়া) কি বলিতেছিস্ "এখানা কাহার গাড়ী ?" এখানা রাজার শালা সংস্থানের গাড়ী। তা, শীগ্‌গির সর্। (দেখিয়া) এই আর একটা লোক, দ্যূতসভাপতির ন্যায় আমাকে দেখিয়া, দ্যূতপলায়িত দ্যূতকরের ন্যায়, আত্মগোপন করিয়া, হঠাৎ অন্যদিকে সরিয়া পড়িল। তা, এটা কে ?। অথবা ইহাকে দিয়া আমার কি হইবে ?। শীগ্‌গির যাই। ওরে। ওরে। গ্রাম্যগণ। সর্ সর্। কি বলিতেছ—"একটু কাল

"मुहुत्तअं चिट्ठ, चक्कपलिवट्टिं देहि" त्ति । अले ले ! लाअ-शालअ-शण्ठाण-केलके हग्गे शूले चक्कपलिवट्टिं दइश्शं ? । अधवा एशे एआइ तवश्शी । ता एव्वं कलेमि, एदं पवहणं अज्जचालुदत्तश्श रुक्खवाडिआए पक्खदुआलए थावेमि । इति प्रवहणं संस्थाप्य । एशे म्हि आअदे । इति निष्क्रान्तः । (ट)

चेटी । अज्जए ! णेमिसद्दो विअ सुणीअदि, ता आअदो पवहणो । (ठ)

यास्या । अपसरत अपसरत । किं भणथ—"मुहूर्त्तकं तिष्ठ, चक्रपरिवृत्तिं देहि" इति । अरे रे ! राज-श्यालक-संस्थानस्य अहं शूरः चक्रपरिवृत्तिं दास्यामि ? । अथवा एष एकाकी तपस्वी । तदेवं करोमि, एतत् प्रवहणमार्य्यचारुदत्तस्य वृक्षवाटिकायाः पक्षद्वारके स्थापयामि । एषोऽस्मि आगतः ।

(ठ) आर्य्ये ! नेमिशब्द इव श्रूयते, तदागतं प्रवहणम् ।

नेष्यथ, एवमुक्त्वा अपसरत एतावन्मात्रमादितः भावः । एकाकी, अतएव तपस्वी दीनः, सुतरामस्यापतो गमने मम न विलम्बाधिक्यं भवदतो मम प्रवहणापसारणमनो-चितमिति भावः । एतन्मदीयम् । निष्क्रान्तः, सम्मुखवर्त्तीनि मार्गावरोधकानि शकटानि अपसारयितुमिति बोध्यम् ।

(ठ) चेटीति । नेमिशब्द इव चक्रप्रान्तशब्द इव । प्रवहणचलने तच्चक्रघूर्ण-नादिति भावः ।

थाम, চাকা ঘুরাইবার জায়গা দাও ?" । ওরে ! ওরে ! রাজার শালা সংস্থানের লোক এবং বীরপুরুষ হইয়া আমি আবার তোর চাকা ঘুরাই-বার জায়গা দিব ? । অথবা, এই ক্ষুদ্র লোকটা একাকী । অতএব এই-রূপ করি,—আমার এই গাড়ীখানাকে আর্য্য চারুদত্তের বৃক্ষবাটিকার পাশের দুয়ারে রাখি । (ইহা বলিয়া গাড়ী রাখিয়া) এই আমি আসিয়াছি । (এই বলিয়া চলিয়া গেল)

नेपथ्ये । अरे रे दोवारिआ ! अप्पमत्ता सएसु सएसु गुम्मट्ठाणेसु होध । एसो अज्ज गोवालदारओ गुत्तिअं भञ्जिअ, गुत्तिवालअं वावादिअ, वन्धणं भेदिअ, परिब्भट्ठो अवक्कमदि । ता गेण्हध गेण्हध । (ध)

प्रविश्य अपटीक्षेपेण सम्भ्रान्त एकचरणलग्ननिगडोऽवगुण्ठित आर्य्यकः परिक्रामति । (न)

(ध) अरे रे दौवारिकाः ! अप्रमत्ताः स्वकेषु स्वकेषु गुल्मस्थानेषु भवत । एषोऽद्य गोपालदारको गुप्तिं भङ्क्त्वा, गुप्तिपालकं व्यापाद्य, बन्धनं भित्त्वा, परिभ्रष्टः अपक्रामति । तद्गृह्णीत गृह्णीत ।

---

(ध) नेपथ्य इति । स्वकेषु स्वकीयेषु, गुल्मस्थानेषु रक्षणप्रदेशेषु, अप्रमत्ताः साव- धानाः । गोपालदारक आर्य्यको नाम गोपबालकः, गुप्तिं कारागारम् । गुप्तिपालकं कारागाररक्षकम् । बध्यते अनेनेति बन्धनं शृङ्खला तत्, भित्त्वा छित्त्वा, परिभ्रष्टः

गारात् विच्युतः, अपक्रामति पलायते ।

"गुल्मं सेनाघटाभिदोः, सैन्यरक्षणकृद्भिदोः ।" इति मेदिनी । "गुप्तिः कारागृहे प्रोक्ता भूगर्त्ते रक्षणे यमे ।" इति विश्वः ।

(न) प्रविश्येति । "पटीक्षेपो न कर्त्तव्य आर्त्तराजप्रवेशने" इति नियमात् आर्य्यक- स्यार्त्तत्वादपटीक्षेपेणोक्तम् । यवनिकाया अनपसारणेनेत्यर्थः । सम्भ्रान्तः चकितचित्तः

---

প্রকারে গাড়ীতে উঠিয়া, চালাইয়া স্বগত) গাড়ীখানা ভারী বলিয়া বোধ হইতেছে। অথবা, চক্র পরিবর্ত্তন করায় আমি পরিশ্রান্ত হইয়া পড়িয়াছি, তাই গাড়ীখানা ভারী বলিয়া বোধ হইতেছে। হউক, যাই। চল, গরু! চল।

(ধ) নেপথ্যে। ওরে! দৌবারিকগণ! স্ব স্ব রক্ষাস্থানে সাবধান হও। এই গোপতনয় আর্য্যক, কারাগার ভাঙ্গিয়া, কারাগার-রক্ষককে হত্যা করিয়া, শিকল ছিড়িয়া, বাহির হইয়া পলাইতেছে। তা, ধর ধর।

(ন) (একচরণে শিকল সংলগ্ন ও আবৃত দেহ অবস্থায় আর্য্যক,

चेटः। स्वगतम्। महन्ते णअलोए शम्भमे उप्पस्स, ता तुलिदं तुलिदं गमिश्शं। इति निष्क्रान्तः। (घ)

आर्य्यकः। छित्वाऽहं नरपतिबन्धनापदेश-
व्यापत्ति-व्यसन-महार्णवं महान्तम्।
पादाग्र-स्थित-निगडैक-पाश-कर्षी
प्रभ्रष्टो गज इव बन्धनाद्भ्रमामि ॥१॥

(घ) महान् नगर्य्यां सम्भ्रम उत्पन्नः, तत् त्वरितं त्वरितं गमिष्यामि।

---

एकस्मिन् चरणे लग्नो निगडशृङ्खला यस्य सः अवगुण्ठितः लोकेभ्य आत्मगोपनार्थं माऽऽस्तृतसर्वदेहः।

(घ) चेट इति। शकारस्य भृत्योऽयं स्थावरको नाम। सम्भ्रमस्त्वरा। वसन्तसेनां नीत्वा निष्क्रान्तोऽयमिति बोध्यम्।

छित्वेति। अहम्, महान्तम् नरपतेर्बन्धनं कारागारे अवरोधकरणमेव अपदेशश्छलं यस्य स चासौ व्यापत्तिः प्रहारादिविविधरूपा विपत्तिः व्यसनं इत्याकारकमहत्त्वञ्च तद्रूपो महार्णवश्चेति तम्, छित्वा तीर्त्वा बन्धनात् प्रभ्रष्टो गज इव, पादाग्रे स्थितं निगडशृङ्खलमेव एकं पाशं बन्धनरज्जुं कर्षतीति स तथोक्तः सन्, भ्रमामि विचरामि। त्वरितपदं करोमीति भावः।

अत्र पूर्वार्द्धे अपदेशपदेन प्रकृतबन्धनप्रतिषेधेन महार्णवत्वस्थापनादपह्नुतिः, व्यापत्तिव्यसनशब्दयोरर्थस्य आपाततः पुनरुक्ततया प्रतीतेः परन्तु व्याख्यातरूपेण तद्भेदात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासः, परार्द्धे श्रौतीउपमा चालङ्काराः एषाञ्च तथा परस्परनिरपेक्षतया संसृष्टिः।

"व्यसनं त्वशुभे सक्तौ" इत्यादि मेदिनी। प्रहर्षिणी वृत्तम्॥१॥

---

যবনিকা অপসারণ না করিয়া ব্যস্তভাবে প্রবেশ করিয়া বিচরণ করিতে লাগিল)

(ঘ) ভৃত্য। (স্বগত) নগরে গুরুতর হুলুস্থুল পড়িয়া গিয়াছে, অতএব তাড়াতাড়ি যাই। (এই বলিয়া চলিয়া গেল)

भोः ! अहं खलु सिद्धादेश-जनित-परित्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढागारे बन्धनेन बद्धः । तस्माच्च प्रियसुहृच्छर्विलक-प्रसादेन बन्धनात् परिभ्रष्टोऽस्मि । अश्रूणि विसृज्य । (फ)

भाग्यानि मे यदि तदा मम कोऽपराधः,
यद्वन्यनाग इव संयमितोऽस्मि तेन ।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या
गम्यो नृपो बलवता सह को विरोधः ? ॥२॥

(फ) भो इति । भो इति दैवसम्बोधने । सिद्धस्विकाख्य कश्चित् योगसिद्ध पुरुषस्तस्य आदेशेन 'आर्यको राजा भविष्यति' इत्येवं वाक्येन जनित परित्रासो भय यस्य तेन । घोषादाभीरपल्लीत । विशस्यते हिंस्यते अपराधी अस्मिन्निति विशसन वध्यस्थान तस्मिन् । 'शसु हिंसायाम्' इति शसधातोरधिकरणे ल्युट् । गूढागारे गुप्तगृहे - बध्यते अनेनेति बन्धन शृङ्खला तेन ।

"घोष आभीरपल्ली स्यात्" इत्यमर ।

भाग्यानीति । यदि मे मम भाग्यानि राजत्वप्राप्तिघटकशुभादृष्टानि सन्ति, तदा मम क अपराध ? अपि तु कोऽपि नैवेत्यर्थं, ऐहिकचेष्टाभावादिति भाव । यद्यस्मादपराधाद्धेतो, तेन राज्ञा, अस्मि अहम्, वन्यो नागो हस्तीव, संयमित कारागारे बद्ध ।

আর্য্যক। আমি, রাজার কারাগারে আবদ্ধীকরণচ্ছলে গুরুতর বিপদ ও অমঙ্গল সমুদ্র উত্তীর্ণ হইয়া, বন্ধনভ্রষ্ট হস্তীর ন্যায়, চরণাগ্রস্থ-শৃঙ্খল-রজ্জু আকর্ষণ করতঃ বিচরণ করিতেছি ॥১॥

(ফ) হায়। রাজা পালক, সিদ্ধপুরুষের আদেশজনিত ভয়ে, আমাকে গোপপল্লী হইতে আনিয়া, বধ্যস্থানে গুপ্তগৃহে শৃঙ্খলদ্বারা বদ্ধ করিয়াছিলেন, প্রিয়সুহৃৎ শর্বিলকের অনুগ্রহে সেই বন্ধন হইতে মুক্ত হইয়াছি। (চোখের জল মুছিয়া)

तत् कुत्र गच्छामि मन्दभाग्यः। विलोक्य। इदं कस्यापि साधोरनावृतपक्षद्वारं गेहम्। (च)

इदं गृहं भिन्नमदत्तदण्डो विशीर्णसन्धिश्च महाकपाटः।
ध्रुवं कुटुम्बी व्यसनाभिभूतां दशां प्रपन्नो मम तुल्यभाग्यः॥२॥

तदत्र तावत् प्रविश्य तिष्ठामि।

---

इदन्तु मम गुरुतरमन्याय्यं कृतमिति भावः। ननु भाविन्यामत्र राजत्वसिद्धौ आर्यकस्य मम बन्धनं कृतमिति कथं तदन्याय्यमित्याह—दैवी भाग्यविहिता, सिद्धिः राजत्वप्राप्तिनिष्पत्तिरपि, लङ्घयितुं केनापि वारयितुं न शक्या। अतएवचेत् त्वरं वासौ राजा आक्रम्यतामित्याह—नृपो विद्यमानो राजा, गम्यः सेवकभावेन प्राप्यः। कथमेतदित्याह बलवता सह दुर्बलस्य को विरोधः स्वविनाशहेतुत्वात् कोऽपि नेत्यर्थः। सुतरां ममापि तदाक्रमणप्रवृत्तिरेव नोचितेति भावः।

अत्र पूर्वार्द्धे अर्थापत्तिसङ्कीर्णा श्रौतोपमा, द्वितीयार्द्धे च अर्थापत्तिसङ्कीर्णः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास इत्यनयोः परस्परनिरपेक्षतया संसृष्टिः।

वसन्ततिलका वृत्तम्॥२॥

(च) तदिति। साधोःशीघ्यादिदोषहीनस्य, अन्यथा गृहस्येदृशी दशा न स्यादिति भावः। अनावृतम् उद्घाटितकपाटं पक्षद्वारं पार्श्वद्वारं यस्य तत्।

तथा च 'प्रवेशावधिक—मन्दभाग्यः' इत्यन्तसन्दर्भे विद्रवो नाम गर्भसन्ध्यङ्गम्। तथा च दर्पणे—"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः।"

---

রাজ্য লাভ করিবার শুভাদৃষ্টই যদি আমার থাকে, তবে তাহাতে আমার অপরাধ কি ? যে, বক্ত হস্তীর ন্যায় রাজা আমাকে বন্ধ করিলেন। কেহই ভাগ্যবিহিত কার্য্যসিদ্ধিকে লঙ্ঘন করিতে পারে না। রাজার নিকটেই যাইতে হইবে, কারণ, বলবানের সহিত বিরোধ কি ? ॥২॥

(চ) তা, মন্দভাগ্য আমি কোথায় যাই। (দেখিয়া) এই বাড়ীখানি কোন সজ্জনের হইবে, ইহার পার্শ্বদ্বারও অনাবৃত রহিয়াছে।

नेपथ्ये । जाध गोणा ! जाध । (भ)

आर्य्यकः । आकर्ण्य । अये ! प्रवहणमित एवाभिवर्त्तते ।

भवेद्गोष्ठीयानं न च विषमशीलैरधिगतं
वधूसंयानं वा तदभिगमनोपस्थितमिदम् ।
बहिर्नेतव्यं वा प्रवर-जन-योग्यं विधिवशात्
विविक्तत्वाच्छून्यं मम खलु भवेद्दैवविहितम् ॥४॥

(भ) यात गावौ । यातम् ।

इदमिति । इह गृह वाटी, भिन्न पुरातनतया विदीर्णभित्तिकम् ; विशीर्णा सुप्रघनतया जीर्णः सन्धिः संयोगस्थान यस्य स तादृशः, न दत्तो दण्डः अर्गल यस्य स तादृशस्य महाकपाटो वर्त्तते । अतएव मम तुल्यभाग्यस्तुल्यदुरदृष्टः, कुटुम्बी एतद्-गृहस्वामी, ध्रुव निश्चितमेव, व्यसनेन दारिद्र्यविपदा अभिभूता आत्मना सा दशामवस्थाम्, प्रपन्नः प्राप्त, इति तर्कयामीति भावः ।

अत्र गृहस्य भिन्नत्वादिलिङ्गेन गृहस्वामिनो दारिद्र्यदशाप्राप्तिरूपसाध्यज्ञानादनुमानं नाम गर्भसन्धेरङ्गम्—"लिङ्गादूहोऽनुमानता" इति दर्पणलक्षणात् ।

उपेन्द्रवज्रा वृत्तम् ॥३॥

(भ) नेपथ्य इति । वर्द्धमानकाख्यस्य चारुदत्तभृत्यस्योक्तिरियम् ।

अथ वर्द्धमानकेनानीयमानं गोशकटं विकल्प्य तर्कयति भवेदिति । इदं प्रवहणम्,

এই বাড়ীর দেওয়ালগুলি জীর্ণ হইয়া গিয়াছে এবং ইহার প্রকাণ্ড কপাটের সংযোগস্থান বিশীর্ণ হইয়া গিয়াছে, অথচ অর্গলও দেওয়া হয় নাই। সুতরাং ইহার মালিক আমারই তুল্যভাগ্য হইবেন এবং নিশ্চয়ই দারিদ্র্যাভিভূত দশা প্রাপ্ত হইয়াছেন ॥৩॥

অতএব এই বাড়ীতে প্রবেশ করিয়া অবস্থান করি।

(ভ) নেপথ্যে। যা, গরু! যা।

আর্য্যক। (শুনিয়া) অহে! গাড়ীখানা এই দিকেই আসিতেছে।

ततः प्रवहणेन सह प्रविश्य वर्द्धमानकचेटः। हीमाणहे ! आणीदे मए जाणत्थलोंके। रदणिए! णिवेदेहि अज्जआए वसन्तसेणाए "अवत्थिदे सज्जे पवहणे अहिरुहिअ पुप्फकरण्डअं जिण्णुज्जाणं गच्छदु अज्जआ।" (म)

(म) आश्चर्यम्। आनीतं मया यानास्तरणम्। रदनिके! निवेदय आर्यायै वसन्तसेनायै—'अवस्थितं सज्जं प्रवहणम् अधिरुह्य पुष्पकरण्डकं जीर्णोद्यानं गच्छतु आर्या।'

विषमशीलैर्दुर्विलसितस्वभावैर्जनैः, अधिष्ठितम् अध्यारूढम् गोष्ठीयान वस्त्रानुरुथीत्सवसभा यानम्, न च नहि भवेत्, तथात्वे अस्य शान्तभावो न स्यादिति भावः। यदि कार्यदर्शिनाह—शून्यम् आरोहिरहितम् इदं प्रवहणम्, वधूमयान स्त्रीलोकयान तस्या वध्वाः स्त्रीलोकस्यैव अभियानाय अत्र परमारूढाया तस्या यत्र कुत्रचिद्गमनाय उपस्थितं वा भवेत्, वा अथवा, विविक्तत्वात् पवित्रत्वात् गुणपात्रत्वपवित्रमनुगर्हित-व्यक्तेः प्रवरजनयोग्य श्रीहस्तीकमनयोग्यम् इदं प्रवहणम् विधिवशात् विधानवशात् तस्यैव प्रवरजनस्य आदेशवशादित्यर्थः बहिर्नेतव्य कस्मिंश्चित् बहिर्देशे चालकेन नेयं भवेत्। यथा तथा वा अस्तु इति भावः। दैवम शुभादृष्टेन विहितम् आनीतम् इदं प्रवहणम् मम स्वस्तु भवत् आरोहणोपयोगीति शेषः, आरोहियत्वादवति भावः।

अत्र रूप नाम गर्भसन्धेरङ्गम्—"रूपं वाक्यं वितर्कवत्" इति दर्पणलक्षणात्।
"विधिविधाने दैवे च" इति "विविक्तौ पूतविजनौ" इति चामरः।
शिखरिणी वृत्तम् ॥४॥

এই গাড়ীখানা, দুর্জনাধিষ্ঠিত উৎসবসমাজের গাড়ী হইবে বলিয়া বোধ হয় না, তবে আরোহিরহিত ইহা স্ত্রীলোকের গাড়ী, তাহাকে লইয়া যাইবার জন্য উপস্থিত হইয়া থাকিবে, কিংবা পবিত্র বলিয়া, কোন প্রধান লোকের উপযুক্ত এই গাড়ী, তাঁহারই আদেশে বাহিরে নিয়া যাইবে। যাহা হউক, শুভাদৃষ্টকর্তৃক আনীত এই গাড়ী এখন আমারই আরোহণের উপযোগী হইবে ॥৪॥

आर्य्यकः । आकर्ण्य । गणिकाप्रवहणमिदं वहिर्यानञ्च । भवतु, अधिरोहामि । इति स्वैरमुपसर्पति । (य)

चेट. । श्रुत्वा । कधं णेउलसद्दे ? ता आअदा क्खु अज्जआ । अज्जए ! इमे णस्स कड्डआ वइल्ला, ता पिट्ठदो ज्जेव आरुहदु अज्जआ । (र)

(र) कथ नूपुरशब्द ? तदागता खलु आर्य्या । आर्य्ये ! इमौ नस्य कट्टकौ बलीवर्द्दौ, तत् पृष्ठत एवारोहतु आर्य्या ।

---

(म) तत इति । डीमाणाइ इत्यायथार्थे देशीयभाषापदम्, कार्य्यञ्च यत् कदापि न विस्मृतं तस्यैव यानान्तरस्य विस्मरणादिति बोध्यम् ।

(य) आर्य्यक इति । वसन्तसेनाया परिचितत्वाद्गणिकाप्रवहणमिदमिति निर्द्धारणम्, पुष्पकरण्डकजीर्णोद्यानस्य वहि स्थितत्वात् वहिर्यानञ्चेति निर्द्देशः । स्वैरं मन्दम् । अन्यथा यदि परिचिनुयादिति भाव ।

(र) चेट इति । आर्य्यकस्य पादन्यासशब्दे नूपुरशब्द इति भ्रमो जात, अतएव तदित्याद्युक्तम् । नस्यं नासिकारन्ध्रप्रवेशितरज्जुम् कट्टका कष्टा इत्यर्थं, तेन च महाप्रहारसम्भव इति भाव ।

---

(ম) তদনন্তর বর্দ্ধমাননামক চারুদত্তের ভৃত্য, গাড়ীর সহিত প্রবেশ করিয়া। ওহে! আমি গাড়ীর আস্তরণ আনিয়াছি। রদনিকা। তুমি আর্য্যা বসন্তসেনাকে জানাও যে,—"গাড়ী প্রস্তুত হইয়া অবস্থান করিতেছে, আপনি আরোহণ করিয়া, পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে যান"।

(য) আর্য্যক। (শুনিয়া) এখানি বেশ্যার গাড়ী এবং বাহিরে যাইবে। হউক, আরোহণ করি। (এই বলিয়া আস্তে আস্তে নিকটে গেল)

(র) ভৃত্য। (শুনিয়া) নূপুরের শব্দ হইতেছে, সুতরাং বসন্তসেনা আসিয়াছেন। আর্য্যে। নাকে দড়ি দেওয়ায় এই গরু দুইটা বড়ই

आर्य्यकस्तथा करोति। (ल)

चेटः। पादुप्फाल-चालिदाणं णेउराणं वीसन्तो सद्दो, भलक्कन्तं अ पवहणं; तधा तक्केमि सम्पदं अज्जआए आलूढ़ाए होदव्वं; ता गच्छामि। जाध, गोणा! जाध। इति परिक्रामति। (व)

प्रविश्य वीरकः। अरे रे अरे जअ-जअमाण-चन्दणअ-मङ्गल-फुल्लभद्द-प्पमुहा! (श)

---

(व) पादोत्स्फालचालितानां नूपुराणां विश्रान्तः शब्दः, भाराक्रान्तञ्च प्रवहणम्, तथा तर्कयामि साम्प्रतमार्य्यया आरूढया भवितव्यम्, तद्गच्छामि। यातं गावौ! यातम्।

(श) अरे रे अरे जय-जयमान-चन्दनक-मङ्गल-पुष्पभद्र-प्रमुखाः!!

---

(ल) आर्य्यक इति। तथा करोति पश्चाद्भागेन प्रवहणमारोहति।

(व) चेट इति। पादयोरुत्स्फालनेन आरोहणकाले उत्तोलनेन चालितानां स्थानान्तरं नीतानां नूपुराणां यः शब्दो जातः स विश्रान्त इत्यर्थः। आरूढया आरुह्य स्थितया।

(श) प्रविश्येति। वीरको नामास्य सेनापतिः, जयादिकास्तु तदधीनं सैनानीपञ्चकम्।

---

পাগলা হইয়া গিয়াছে, সুতরাং আপনি পিছনের দিক্ হইতেই আরোহণ করুন।

(ল) (আর্য্যক তাহাই করিল)

(ব) ভৃত্য। চরণযুগল উত্তোলনে সঞ্চালিত নূপুরের শব্দ এখন বিরত হইয়াছে, গাড়ীও ভারাক্রান্ত হইয়াছে, তাহাতে আমি মনে করি,—এখন বসন্তসেনা আরূঢ় হইয়াছেন, তা, এখন যাই। যা, গরু! যা। (এই বলিয়া যাইতে লাগিল)

(শ) বীরকনামক সেনাপতি, প্রবেশ করিয়া। ওরে ওরে জয়-জয়মান-চন্দনক-মঙ্গল-পুষ্পভদ্রপ্রভৃতি বীরগণ!

किं अच्छध (१) वीसद्धा जो सो गोवालदारओ रुद्धो ।
भेत्तूण मम वच्चइ णरवइ-हिअअं बन्धणं अ ॥५॥

अले ! पुरत्थिमे पदोली-दुआरे चिट्ठ तुमं, तुमं पि पच्छिमे, तुमं पि दक्खिणे, तुमं पि उत्तरे । जोवि एसो पाआरखण्डो, एदं अहिरुहिअ चन्दणेण समं गदुअ अवलोएमि । एहि चन्दणअ । एहि, इदो दाव । (घ)

किं स्थ विश्रब्धाः ? यः स गोपालदारको रुद्धः ।
भित्त्वा मम व्रजति नरपतिहृदयं बन्धनञ्च ॥५॥

(घ) अरे ! पुरस्तात् प्रतोलीद्वारे तिष्ठ त्वम्, त्वमपि पश्चिमे, त्वमपि दक्षिणे, त्वमपि उत्तरे । योऽपि एष प्राकारखण्ड, एतमधिरुह्य चन्दनेन समं गत्वा अवलोकयामि । एहि चन्दनक । एहि, इतस्तावत् ।

किमिति । विश्रब्धाः 'सर्वत्र प्रान्तिरेव स्थिता' इति विश्वस्ताः, किं स्थ कथं तिष्ठथ यूयम्; उद्विग्नैरेव युष्माभिर्भवितव्यमिति भावः । तत्र कारणमाह—य भावि राज्याधिकारितया सिद्धादिष्टः, यो गोपालदारको रुद्धः, स अयं, मम युगपदेव, नरपतिहृदयम् बध्यते अनेनेति बन्धनं शृङ्खलाञ्च भित्त्वा विदार्य उद्वेगेनाकुलीकृत्य खण्डयित्वा च व्रजति पलायते ।

अत्र बन्धनभेदनं कारणं नरपतिहृदयभेदनञ्च तत्कार्य्यमित्यनयोर्यौगपद्याभिधानेन कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययरूपा अतिशयोक्तिः, एकभेदनक्रियया बन्धननरपति-हृदययोः कर्म्मतया अभिसम्बन्धात् तुल्ययोगिता च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

आर्य्या जातिः ॥५॥

তোমরা বিশ্বস্ত হইয়াছ কেন ? সেই যে গোপালবালকটাকে রুদ্ধ করা হইয়াছিল, সে একসাই রাজার হৃদয় ও বন্ধনশৃঙ্খল ভেদ করিয়া পলাইয়াছে ॥৫॥

(१) अच्छध ।

प्रविश्य सम्भ्रान्तश्चन्दनकः । अरे रे वीरअ-विमल्ल-भीमङ्गअ-दण्डकालअ-दण्डसूर-प्पमुहा ! (स)

आअच्छध वीसत्था तुरिअं जत्तेह लहु करेज्जाह ।
लच्छी जेण ण रण्णो पहवइ गोत्तन्तरं गन्तुं ॥६॥

(स) अरे रे वीरक विमल्य भीमाङ्गद दण्डकालक दण्डशूरप्रमुखाः ! ।
आगच्छत विश्रब्धास्त्वरितं यतध्वं लघु कुरुत ।
लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ॥६॥

---

(य) अरे इति । पुरस्तात् पूर्वस्मिन्, प्रतोल्या रथ्याया रथ्यापार्श्ववर्तिनीत्यर्थः. द्वारि । इदन्तु अग्र यदभिहितम् अन्वीक्षणक्रमात् । त्वमपि जयमान पश्चिमे प्रतोलीद्वारि तिष्ठेत्यन्वयः । त्वमपि मङ्गल इत्यर्थः, चन्दनकस्य पृथगभिधानात् । त्वमपि पुष्पभद्र उत्तरे । प्राकारखण्ड इत्यादय मार्यमेव निश्चित चर्चे एकान्तत्व ।

(स) प्रविश्येति । सम्भ्रान्तो व्यस्तचित्त । अत्र वीरकादयः सैन्याः ।

आगच्छतेति । विश्रब्धाः 'पलायितमार्य्यकमवश्यमेव धरिष्याम' इति विश्वस्ताः सन्तो यूयमागच्छत, त्वरितं यतध्वं तं धर्त्तुमिति शेषः, लघु शीघ्रं कुरुत तदन्वेषणमित्यध्याहारः । येन छलविधेन युष्माकं व्यापारेण राज्ञः पालकस्य, लक्ष्मीः गोत्रान्तरम् आर्य्यकाख्यस्यैव क्षत्रियस्य गोपवंशम्, गन्तुं न प्रभवति न शक्नोति ।

आर्य्या जातिः ॥६॥

---

(য) ওরে! তুমি পূর্ব্বদিকে রাস্তার দ্বারে থাক, তুমিও পশ্চিম দিকে, তুমিও দক্ষিণদিকে এবং তুমিও উত্তরদিকে থাক। আর এই যে প্রাচীরের খণ্ড দেখা যাইতেছে, চন্দনকের সহিত যাইয়া আমি ইহাতে উঠিয়া দেখি। আইস, চন্দনক! এই দিকে আইস।

(স) চন্দনক ব্যস্তভাবে প্রবেশ করিয়া। ওরে ওরে বীরক-বিমল্য-ভীমাঙ্গদ দণ্ডকালক দণ্ডশূর প্রভৃতি বীরগণ!

তোমরা বিশ্বস্ত হইয়া আইস, শীঘ্র তাহাকে ধরিবার চেষ্টা কর, তাড়া-

अवि अ। उज्जाणेसु सहासु अ मग्गे णअरीअ आवणे घोसे।
तं तं जोहह तुरिअं सङ्का वा जाअए जत्थ ॥७॥
रे रे वीरअ! किं किं दरिसेसि भणाहि दाव वीसद्धं।
भेत्तूण अ बन्धणअं को सो गोवालदारअं हरइ ॥८॥

---

अपि च। उद्यानेषु सभासु च मार्गे नगर्य्यापणे घोषे।
तं तमन्विष्यत त्वरितं शङ्का वा जायते यत्र ॥७॥
रे रे वीरक! किं किं दर्शयसि भणसि तावद्विस्रब्धम्।
भित्त्वा च बन्धनकं कः स गोपालदारकं हरति ॥८॥

---

उद्यानेष्विति। उद्यानेषु, सभासु, मार्गे पथिमात्रे, नगर्य्या उज्जयिन्या आपणे क्रयविक्रयस्थाने, घोषे आभीरपल्लयाञ्च, त्वरितं तं बन्धनखण्डयितारं जनम्, तमार्य्यकञ्च, अन्विष्यत, यत्र स्थाने वा शङ्का तयोरवस्थानसन्देहो जायते, तत्राप्यन्विष्यतेत्यर्थः।

आर्य्या जातिः ॥७॥

रे रे इति। रे रे वीरक! किं किम् आर्य्यकस्य चिह्नमित्यर्थः, दर्शयसि दर्शयितुं शक्नोषि? तद्यदि विस्रब्धं विश्वस्तं यथा स्यात्तथा भणसि, तदा मह्यमेव सुविधा भवेदिति शेषः। बन्धनकं बन्धनशृङ्खलाम्, भित्त्वा खण्डयित्वा, यो गोपालदारकमार्य्यकं हरति, किं वेत्सि आर्य्य। स जनः कः?।

अत्र 'आर्य्यकस्य चिह्नम्' इत्यादिपदानामनुक्तत्वेऽपि न न्यूनपदतादोषः, प्रत्युत गुण एव, वक्तुर्वेगमयत्वात् "कोपावेगसम्भ्रमादौ न्यूनपदता गुणः" इति दर्पणोक्तेः।

गीतिर्जातिः ॥८॥

---

তাড়ি তাহার অন্বেষণ কর, যাহাতে রাজশত্রু অন্য দেশে যাইতে না পারে ।৬।

আরও, উদ্যানে, সভায়, পথে, নগরের দোকানে, কিংবা গোয়াল-পাড়ায় অথবা যেখানে সন্দেহ হইবে, সেইখানে আর্য্যক ও তাহার বন্ধনমোচককে শীঘ্র অন্বেষণ কর ।৭।

ওরে ওরে বীরক! তুমি আর্য্যকের কি কি চিহ্ন দেখাইতে পার,

कस्स इमो (१) दिणअरो कस्स चउत्थो अ वट्टए चन्दो ।
छट्ठो अ भग्गवगहो भूमिसुओ पञ्चमो कस्स ॥९॥
भण कस्स जम्म-छट्ठो जीवो णवमो तहेअ सूरसुओ ।
जीअन्ते चन्दणए को सो गोवालदारअं हरइ ॥१०॥

कस्याष्टमो दिनकरः कस्य चतुर्थश्च वर्त्तते चन्द्रः ।
षष्ठश्च भार्गवग्रहो भूमिसुतः पञ्चमः कस्य ॥९॥
भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः ।
जीवति चन्दनके कः स गोपालदारकं हरति ॥१०॥

कस्येति । इत श्लोकद्वयेन युग्मकं वाच्यम् । चन्दनके मयि जीवति सति, यो गोपालदारकं हरति स जनः कः ? एव दिनकरो रविः, कस्य जनस्य अष्टम जन्मराशितोऽष्टमराशिगत इत्यर्थः । एवमन्यत्रापि । "पीडामष्टमगः करोति नितराम्" इति शास्त्रादष्टमस्थरवेर्बहुतरपीडाजनकत्वादस्मदादिभिर्दुरुत्पीडनं भवेदिति भावः । मरणाद्येवम् ।

चन्द्रश्च कस्य चतुर्थो वर्त्तते । "वैररोगं चतुर्थे" इति वचनादस्मदादिभिर्भयगीत् पातनं भावीत्याशयः ।

भार्गवग्रहः शुक्रश्च कस्य षष्ठो वर्त्तते । "शत्रुनाशं कुर्यात्" इति शास्त्रात्तस्य मृत्युरेव भविष्यतीत्यभिप्रायः ।

भूमिसुतो मङ्गलः कस्य पञ्चमो वर्त्तते । "शत्रुं चिनोति च पञ्चमः" इति ज्योतिर्वचनात् मरणमेव भावीति भावः ।

जीवो बृहस्पतिः, कस्य जन्मनो जन्मराशेः षष्ठः षष्ठराशिस्थो वर्त्तते । "षष्ठेऽशुभमपि च कुर्यादरिगृहे" इत्युक्तेर्जीवत्यैव कारावासादिरूपमशुभं भवेदित्याशयः ।

তাহা যদি ভাল করিয়া বল, (তবে বড়ই সুবিধা হয়)। যে, বন্ধন ছেদন করিয়া গোপবালক আর্য্যককে হরণ করিয়াছে, সে লোকটা কে? ॥৮॥

(१) कस्स अट्ठमो ।

चेटः । जाध गोणा । जाध । (च)

चन्द । हद्धा । अरे रे । पेक्ख पेक्ख । (क)

ओहारिओ पवहणो वच्चइ मज्झेण राअमग्गस्स ।

एदं दाव विआरह, कस्स कहिं पवसिओ पवहणो त्ति ॥१२॥

वीरकः । अवलोक्य । अरे पवहणवाहआ ! मा दाव एदं पवहणं वाहेहि । कस्सकेरकं एदं पवहणं ? को वा इध आरूढो ? कहिं वा वज्जइ ? । (ख)

(च) यात गावौ ! यातम् । (क) अरे रे । प्रेक्षस्व प्रेक्षस्व ।

अपवारितं प्रवहणं व्रजति मध्येन राजमार्गस्य ।

एतत्तावद्विचारय कस्य कुत्र प्रेषितं प्रवहणमिति ॥१२॥

---

स्फुट इति सौत्रो धातु, स्फुडित इत्येव देशीयप्रयोगो वा । आर्य्या जातिः ॥११॥

(च) चेट इति । अयन्तु वर्द्धमानको नाम चारुदत्तभृत्यः ।

अपेति । अपवारितं वसनावगुण्ठितं प्रवहणम् राजमार्गस्य मध्येन मध्यमार्गेण व्रजति । कस्य प्रवहणं कुत्र प्रेषितम् एतत्तावत् विचारय विचार्य पश्य यथार्थको वर्त्तते न वेत्यर्थः ।

गीतिर्जातिः ॥१२॥

---

হে চন্দনক ! আমি তোমার হৃদয়দ্বারা শপথ করিতেছি, কোনও লোক অপহরণ করিতেছে। যে হেতু, সেই গোপবালক, সূর্য্য অর্দ্ধ উদিত হইলে পলায়ন করিয়াছে ॥১১॥

(গ) ভৃত্য। যা, গরু ! যা।

(ক) চন্দনক। (দেখিয়া) ওরে রে ! দেখ দেখ—

রাজপথের মধ্য দিয়া একখানা আবৃত গাড়ী যাইতেছে, এখানা কাহার প্রেরিত গাড়ী, কোথায় যাইতেছে, ইহা বিচার করিয়া দেখ ॥১২॥

चेटः। एशे क्खु पवहणे अज्जचालुदत्ताह केलके, इध अज्जआ वशन्तशेणा आलूढा, पुप्फकरण्डअं जिण्णुज्जाणं कीलिदुं चालुदत्तश्श णीअदि। (ग)

वीरकः। चन्दनकमुपसृत्य। एसो पवहणवाहओ भणादि—"अज्जचालुदत्तश्श पवहणं, वशन्तशेणा आलूढा, पुप्फकरण्डअं जिण्णुज्जाणं णीअदि" त्ति। (घ)

चन्द। ता गच्छदु। (ङ)

(ख) अरे प्रवहणवाहक। मा तावदेतत् प्रवहणं वाहय। कस्यैतत् प्रवहणम्? को वा इहारूढः? कुत्र वा व्रजति?।

(ग) एतत् खलु प्रवहणमार्य्यचारुदत्तस्य, इह आर्य्या वसन्तसेना आरूढा, पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य नीयते।

(घ) एष प्रवहणवाहको भणति—"आर्य्यचारुदत्तस्य प्रवहणम्, वसन्तसेना आरूढा, पुष्पकरण्डकं जीर्णोद्यानं नीयते" इति।

(ङ) तद्गच्छतु।

---

(ग) चेट इति। क्रीडितुं विहर्त्तुमुत्सुकेति शेषः। चारुदत्तस्य समीपे।

---

(খ) বীরক। (দেখিয়া) ওরে গাড়ীচালক! এই গাড়ী চালাইস্ না। এখানা কাহার গাড়ী? ইহাতে কে আরোহণ করিয়াছে? কোথায়ই বা যাইতেছে?।

(গ) ভৃত্য। এ গাড়ী আর্য্য চারুদত্তের, ইহাতে আর্য্যা বসন্তসেনা আরোহণ করিয়াছেন, বিহার করিবার নিমিত্ত চারুদত্তের নিকট পুষ্পকরণ্ডনামক জীর্ণোদ্যানে নিয়া যাইতেছি।

(ঘ) বীরক। (চন্দনকের নিকট যাইয়া) এই গাড়ীর চালক বলিতেছে,—"আর্য্য চারুদত্তের গাড়ী, বসন্তসেনা আরোহণ করিয়াছেন, পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে নিয়া যাইতেছি"।

वीरकः। अणवलोइदो ज्जेव?। (च)

चन्द। अधइं। (छ)

वीरकः। कस्स पच्चएण?। (ज)

चन्द। अज्जचारुदत्तस्स। (झ)

वीरकः। को अज्जचारुदत्तो? का वा वसन्तसेणा? जेण अणवलोइदं वजइ। (ञ)

चन्द। अरे! अज्जचारुदत्तं ण जाणासि? ण वा वसन्तसेणिअं?। जइ अज्जचारुदत्तं वसन्तसेणिअं वा ण जाणासि, ता गअणे जोण्हासहिदं चन्दं पि तुमं ण जाणासि। (ट)

---

(च) अनवलोकित एव। (छ) अथकिम्।

(ज) कस्य प्रत्ययेन?। (झ) आर्य्यचारुदत्तस्य।

(ञ) क आर्य्यचारुदत्त? का वा वसन्तसेना? येनानवलोकितं व्रजति।

(ट) अरे! आर्य्यचारुदत्तं न जानासि? न वा वसन्तसेनिकाम्? यदि आर्य्यचारुदत्तं वसन्तसेनिकां वा न जानासि, तद् गगने ज्योत्स्नासहितं चन्द्रमपि त्वं न जानासि।

---

(ज) वीरक इति। प्रत्ययेन विश्वासेन।

---

(ঙ) চন্দনক। হা, হাঁ।

(চ) বীরক। না দেখা অবস্থায়ই?।

(ছ) চন্দনক। হাঁ।

(জ) বীরক। কাহার বিশ্বাসে?।

(ঝ) চন্দনক। আর্য্য চারুদত্তের।

(ঞ) বীরক। আর্য্য চারুদত্ত কে?। বসন্তসেনাই বা কে? যে না দেখা অবস্থায়ই যাইবে।

को तं गुणारविन्दं सीलमिअङ्कं जणो ण जाणादि ?।
आवण्ण-दुक्ख मोक्खं चउ-साअर-सारअं रअणं ॥१३॥
दो ज्जेव पूअणीआ एत्थ णअरीए तिलअभूदा अ।
अज्जा वसन्तसेणा, धम्मणिही चारुदत्तो अ ॥१४॥

कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति ?।
आपन्न दुःखमोक्षं चतुःसागरसारं रत्नम् ॥१३॥

---

(ट) चन्द्र इति। अत्र परवाक्ये वस्तुसम्बन्धोऽसम्भवन् अतिप्रसिद्धयोश्चारुदत्तवसन्तसेनयोर्ज्ञानं नियतप्रत्ययोश्चन्द्रज्योत्स्नयोर्ज्ञानमिवेति सादृश्यं बोधयतीति निदर्शनालङ्कारः।

क इति। गुणा दयादाक्षिण्यादयः अरविन्दानीव यस्य तं पद्मतुल्यलोभनीयगुणकमित्यर्थः, शीले मृगाङ्कश्चन्द्र इव तं चन्द्रतुल्यनिर्मलस्वभावमिति तात्पर्य्यम्, आपन्नानां विपन्नानां दुःखस्य मोक्षो मोचनं यस्मात् तम् तथा चतुर्णां सागराणां सारभूतम् रत्नं रत्नस्वरूपम्, तं चारुदत्तम् को जनो न जानाति? अपि तु सर्व्व एव जानातीत्यर्थः।

अत्र पूर्व्वार्द्धे लुप्तोपमाद्वयम् परार्द्धं च निरङ्गं केवलरूपकमित्येतेषां मिथो निरपेक्षतया संसृष्टिः। तथा पूर्व्वार्द्धे वाक्यसमाप्तावपि तन्मित्रस्य विशेषणतया परार्द्धस्य पुनरुपादानात् समाप्तपुनरात्ततादोषः, स च अर्द्धयोर्विपरीतपाठेन समाधेयः।

आर्य्या जातिः ॥१३॥

---

(ট) চন্দনক। ওহে! তুমি আর্য্য চারুদত্ত কিংবা বসন্তসেনাকে জান না? যদি আর্য্য চারুদত্ত ও বসন্তসেনাকে না জান, তবে আকাশে জ্যোৎস্নার সহিত চন্দ্রকেও তুমি জান না।

যাঁহার দয়াদাক্ষিণ্যপ্রভৃতি গুণ, পদ্মের ন্যায় স্পৃহণীয় যিনি স্বভাবে চন্দ্রের তুল্য নির্ম্মল, যাঁহা হইতে বিপন্ন জনের দুঃখের মুক্তি হইয়া থাকে এবং যিনি চতুঃসমুদ্রের উত্তম রত্নস্বরূপ, সেই চারুদত্তকে কে না চেনে? ॥১৩॥

वीरकः। अरे चन्दणआ! (ढ)

जाणामि चारुदत्तं वसन्तसेणं अ सुट्ठु जाणामि।

पत्ते अ राअकज्जे पिदरं पि अहं ण जाणामि ॥१५॥

आर्य्यकः। स्वगतम्। अयं मे पूर्व्ववैरी, अयं मे पूर्व्वबन्धुः। यतः—(ड)

---

द्वावेव पूजनीयौ अत्र नगर्यां तिलकभूतौ च।

आर्या वसन्तसेना धर्म्मनिधिश्चारुदत्तश्च ॥१४॥

(ढ) अरे चन्दनक।

जानामि चारुदत्तं वसन्तसेनाञ्च सुष्ठु जानामि।

प्राप्ते च राजकार्य्ये पितरमपि अहं न जानामि ॥१५॥

---

द्वाविति। तिलकभूतौ श्रेष्ठाविमर्थः। आर्य्या वेश्यात्वेऽपि साधुस्वभावा। अत्र पूजनीयाविर्त्येकया क्रियया वसन्तसेनाचारुदत्तयो प्रकृतयोरभिसम्बन्धात् तुल्ययोगितालङ्कारः। आर्य्या जातिः ॥१४॥

जानामीति। सुष्ठु, सम्यक्। राजकार्य्ये च प्राप्ते अनुसन्धानात्मके कस्मिंश्चित् राजकार्य्ये उपस्थिते, अहं पितरमपि आत्मनो जनकमपि न जानामि विश्वास्यतया न गणयामि, किं पुनश्चारुदत्तादीनिति भावः।

अत्रार्थापत्तिरलङ्कारः आर्य्या च जातिः ॥१५॥

(ड) आर्य्यक इति। अयमङ्गुल्या निर्द्दिष्टो वीरकः। अयञ्च चन्दनकः। अत उभयोरुपरि एकविधैव धारणा न कर्त्तव्येति भावः। अत्र हेतुमाह यत इति।

---

आর্য্যা বসন্তসেনা এবং ধর্ম্মনিধি চারুদত্ত—এই দুই জনই, এই উজ্জয়িনীনগরে পূজনীয় এবং তিলকস্বরূপ ॥১৪॥

(ঢ) বীরক। ওরে চন্দনক।

আমি চারুদত্তকে চিনি এবং বসন্তসেনাকেও ভালরকম চিনি। কিন্তু রাজকার্য্য উপস্থিত হইলে আমি পিতাকেও চিনি না ॥১৫॥

एककार्य्यनियोगेऽपि नानयोस्तुल्यशीलता ।
विवाहे च चितायाञ्च यथा हुतभुजोर्द्वयोः ॥१६॥

चन्द । तुमं तन्तिलो सेणावई रण्णो पच्चइदो, एदे धारिदा मए वइल्ला, अवलोएहि । (ढ)

(ढ) त्वं तन्त्रिलः सेनापती राज्ञः प्रत्ययितः, एतौ धारितौ मया बलीवर्दौ, अवलोकय ।

---

एकेति । एकस्मिन् मम धारणरूपे कार्य्ये नियोगेऽपि राज्ञा व्यापारितत्वेऽपि, अनयोर्वीरकचन्दनकयोः, तुल्यशीलता समानः स्वभावो न स्यात् । यथा विवाहे च चितायाञ्च द्वयोर्हुतभुजोरग्न्योर्न तुल्यशीलता । तथा च यथा वह्नेर्दहनरूपे एकस्मिन् कार्य्ये नियोगेऽपि विवाहे हविषो दहनं मङ्गलजननञ्च, चितायाञ्च शरीरस्यैव दहनममङ्गलजननञ्च, तथा चन्दनकेन धृत्वा मम मोचनम्, वीरकेण तु धृत्वा बन्धनं कर्त्तव्यमिति भावः ।

अत्र श्लोके उपमालङ्कारः । तथा क्षिप्तिर्नाम गर्भसन्ध्यङ्गञ्च—
"रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्" इति दर्पणलक्षणात् ॥१६॥

(ढ) तन्त्र इति । तन्त्रं प्राधान्यमस्यास्तीति तन्त्रिलः प्रधानः पृषोदरादित्वात् साधुः । "तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे" इत्यमरः । प्रत्ययोऽस्य सञ्जात इति प्रत्ययितो विश्वस्तः । अवलोकय आर्य्यकोऽस्ति न वेति परीक्षस्व ।

---

(ড) আর্য্যক। (স্বগত) এই বীরক আমার পূর্ব্বের শত্রু, আর এই চন্দনক আমার পূর্ব্বের বন্ধু। সুতরাং—

যেমন এক-দাহকার্য্যে নিয়োগ থাকিলেও বিবাহে ও চিতাতে দুইটী আগুনের সমান স্বভাব হয় না, সেইরূপ ইহাদেরও এককার্য্যে নিয়োগ থাকিলেও সমান স্বভাব হইবে না ॥১৬॥

(ঢ) চন্দনক। তুমি প্রধান সেনাপতি এবং রাজার বিশ্বস্ত, সুতরাং আমি এই গরু দুইটী ধরিয়াছি, তুমি দেখ।

वीरकः । तुमं पि रण्णो पच्चइदो बलवई, ता तुमं ज्जेव अवलोएहि । (ग)

चन्द । मए अवलोइदं तुए अवलोइदं भोदि ? । (त)

वीरकः । जं तुए अवलोइदं तं रण्णा पालएण अवलोइदं । (थ)

चन्द । अरे ! उण्णामेहि धुरं । (द)

---

(ग) त्वमपि राज्ञः प्रत्ययितो बलपतिः, तत् त्वमेव अवलोकय ।

(त) मया अवलोकितं त्वया अवलोकितं भवति ? ।

(थ) यत् त्वया अवलोकितं तत् राज्ञा पालकेनावलोकितम् ।

(द) अरे ! उन्नमय धुरम् ।

---

(ग) वीरक इति । बलपतिर्मांधीनत्वेऽपि विश्वस्तसैन्यपतिः ।

(त) चन्द इति । मत्परीक्षणं त्वत्परीक्षणतुल्यं भवति न वेत्यर्थः । मया अवलोकितेऽपि यदि पुनस्त्वयापि मय्यविश्वासेनावलोकयितव्यम्, तदा मयायं परिस्रमो नाङ्गीकर्त्तव्य इति भावः ।

(थ) वीरक इति । तव परीक्षणं साक्षाद्राजपरीक्षणतुल्यमेव भवेदित्यर्थः । सुतरां त्वमेवावलोकयितुमर्हसीति भावः ।

(द) चन्द इति । अरे इति चेटसम्बोधनम् । धुरम् आरोहणस्थानस्य वाहादि-भारम्, उन्नमय उत्तोलयापसारय, येनाहमारोढुमर्हामीति भावः ।

---

(গ) বীরক। তুমিও রাজার বিশ্বস্ত এবং সেনাপতি, সুতরাং তুমিই দেখ।

(ত) চন্দনক। আমার দেখায়ই তোমার দেখা হইবে ?।

(থ) বীরক। যাহা তুমি দেখিবে, তাহা রাজা পালকেরই দেখা হইবে।

(দ) চন্দনক। ওরে! ভার নামা।

चेटस्तथा करोति।

आर्य्यकः। स्वगतम्। अपि रक्षिणो मामवलोकयन्ति?। अशस्त्रश्चास्मि मन्दभाग्यः। अथवा—(ध)

भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति।
वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने ॥१७॥

अथवा, साहसस्य तावदनवसरः। (न).

---

(ध) आर्य्यक इति। अपिशब्दः प्रश्ने।

भीमस्येति। भीमस्य द्वितीयपाण्डवस्य, अनुकरिष्यामि अनुकरणं करिष्यामि। कीदृगित्याह—बाहुर्मम भुज एव शस्त्रं भविष्यति, भीमवत् बाहुयुद्धमेव करिष्यामीत्यर्थः। ननु शस्त्रधारिभिः सह बाहुयुद्धे मृत्युरवश्यम्भावीत्याह—व्यायच्छतो व्यायामं कुर्वतः बाहुभ्यां युद्ध्यमानस्यैवेत्यर्थः। मृत्युर्वरम्, किञ्चित्पुरुषकारप्रकाशादित्याशयः; किन्तु बन्धने कारायाम्, गृहीतस्य स्थापितस्य न, निर्जीववत् पुरुषकाराभावादिति भावः।

अत्र प्रथमपादे आर्थी उपमा, द्वितीयार्द्धसामान्येन पूर्व्वार्द्धविशेषसमर्थनरूपोऽर्थान्तरन्यासश्च, अनयोरङ्गाङ्गिभावेन सङ्करः।

भीमस्येति शेषे षष्ठी "तस्य चानुकरोति हि" इति श्रीपद्माङ्कवत्, "तदानुकुर्य्याद्विशदस्य तस्यास्ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य" इति कुमारोक्तवच्च ॥१७॥

(न) अथवेति। साहसस्य बहुभिः शस्त्रधारिभिः सह अशस्त्रस्यैकाकिनो युद्धरूपस्येत्यर्थः, एकाघातादेव मृत्युसम्भवेन पुरुषकारप्रकाशस्याप्यसम्भवादिति भावः।

---

(ভৃত্য তাহা করিল)

(ধ) আর্য্যক। (স্বগত) রক্ষীরা কি আমাকে দেখিতে পাইবে?। মন্দভাগ্য আমি, শস্ত্রবিহীন রহিয়াছি। অথবা—

ভীমের অনুকরণ করিব, বাহুই অস্ত্র হইবে। কারণ, যুদ্ধের ব্যায়াম করিতে করিতে মৃত্যু হওয়াও ভাল, কিন্তু কারাগারে স্থাপিত অবস্থায় নহে ॥১৭॥

चन्द । सार्थ्येन प्रवहणमारुह्यावलोकयति ।

आर्य्यकः । शरणागतोऽस्मि ।

चन्द । संस्कृतमाश्रित्य । अभयं शरणागतस्य । (प)

आर्य्यकः ।

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च ।

भवति च सदोपहास्यो यः खलु शरणागतं त्यजति ॥१८॥

(प) चन्द इति । क्षत्रियत्वादस्य संस्कृताश्रयणम् । यथा साहित्यदर्पणे—

"योषित्सखीबालवेश्याकितवाप्सरसां तथा ।

वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ॥"

भयस्याभाव इत्यभयम्, अभावार्थेऽव्ययीभावः ।

त्यजतीति । यः खलु जनः, शरणागतं जनं त्यजति ; जयश्रीर्विजयलक्ष्मीस्तं किल त्यजति, कापुरुषत्वादिति भावः । मित्राणि सुहृदश्च, तं जहति त्यजन्ति, बन्धुवर्गो भ्रात्रादिश्च तं जहाति उभयत्रापि निर्दयत्वज्ञानेनात्मनामप्युपकारित्वासम्भवबोधादित्याशयः । सदा उपहास्यश्च भवति, भीरुत्वेन शरणागतत्यागात् परञ्च तत्त्यागे कापुरुषताप्रकाशनादित्यभिप्रायः ।

अत्र शरणागतत्यागस्य अश्लाघ्यताप्रतिपादनकार्यं प्रति बहुलकारणोपन्यासात् समुच्चयोऽलङ्कारः । तथा एकवचनान्तक्रियायाः मध्ये जहतीति बहुवचनप्रयोगात् प्रक्रमभङ्गदोषः, त्यजतीति पदस्य द्विरुपादानात् कथितपदतादोषश्च; "जहाति च मित्रं बन्धुवर्गश्च" इति तृतीयचरणपाठेन "य शरणागतं वर्जयति" इति चतुर्थचरणपाठेन च तयोः समाधानम् । आर्या जातिः ॥१८॥

(ন) অথবা, ইহা সাহসের সময় নহে ।

চন্দনক । (অভিনয়ের ধরণে গাড়ীতে উঠিয়া দেখিতে লাগিল)

আর্য্যক । আমি আপনার শরণাগত হইলাম ।

(প) চন্দনক । (সংস্কৃতভাষা অবলম্বন করিয়া) শরণাগতের ভয় নাই ।

चन्द। कधं अज्जओ गोवालदारओ सेणवित्तासिदो विअ पत्तरही साउणिअस्स हत्थे णिवडिदो। विचिन्त्य। एसो अणवराधो सरणाअदो अज्जचारुदत्तस्स पवहणं आरूढो पाणप्पदस्स मे अज्जसव्विलअस्स मित्तं, अण्णदो राअ-णिओओ। ता किं दाणिं एत्थ जुत्तं अणुचिट्ठिदुं?। अथवा, जं भोदु, तं भोदु, पढमं ज्जेव अभअं दिण्णं। (फ)

(फ) कथमार्य्यको गोपालदारकः श्येनवित्रासित इव पतत्री शाकुनिकस्य हस्ते निपतितः। एषोऽनपराधः शरणागतः आर्य्यचारुदत्तस्य प्रवहणमारूढः प्राणप्रदस्य मे आर्य्यशर्व्विलकस्य मित्रम्, अन्यतो राजनियोगः। तत् किमिदानीमत्र युक्तमनुष्ठातुम्?। अथवा, यद्भवतु तद्भवतु, प्रथममेवाभयं दत्तम्।

(फ) चन्द इति। श्येनेन तदाख्यपक्षिविशेषेण वित्रासितो भयं प्रापितः, पतत्री बकादि क्षुद्रपक्षीव। शाकुनिकस्य शकुनिग्राहकस्य पक्षिमारकस्य। अनपराधः, अतो यथा स्त्रियामपि दण्डो न स्यात्तथाऽभिरक्षितव्यमिति भावः। शरणागतः, अतः सर्व्वथैव रक्षितव्य इत्याशयः। आर्य्येति। अतः परमसम्भ्रमगौरवस्यार्य्यमपि नायं निग्रहीतव्य इत्यभिप्रायः। प्राणेति। अतश्च वस्तुतः परममित्रत्वादेवायं रक्षणीय इति तात्पर्य्यम्।

আর্য্যক। বিজয়লক্ষ্মী, সুহৃদগণ ও ভ্রাত্রাদি বন্ধুবর্গ তাহাকে ত্যাগ করে এবং সে সর্ব্বদাই উপহাস্য হইয়া থাকে, যে ব্যক্তি শরণাগতকে ত্যাগ করে ॥১৮॥

(ফ) চন্দনক। হায়! শ্যেন-ত্রাসিত ক্ষুদ্রপক্ষী যেমন ব্যাধের হস্তে পতিত হয়, সেইরূপ এই গোপবালক আর্য্যককে দেখিতেছি। (চিন্তা করিয়া) এই ব্যক্তি—নিরপরাধ, শরণাগত, আর্য্য চারুদত্তের শকটে আরূঢ়, বিশেষতঃ আমার প্রাণদাতা আর্য্য শর্বিলকের মিত্র, অন্য দিকে রাজার আদেশ। সুতরাং এখন এ বিষয়ে কি করা উচিত?। অথবা, যা হউক, তা হউক, প্রথমেই অভয় দিয়াছি।

भीदाभअप्पदाणं दत्तस्स परोवआर-रसिअस्स ।
जइ होइ होउ णासो तहवि अ लोए गुणो ज्जेव ॥१८॥

अभयमवतीर्य । दिट्ठो अज्जो । इत्यर्द्धोक्ते । ण, अज्जआ वसन्त-सेणा । तदो एसा भणादि—"जुत्तं णेदं, सरिसं णेदं, जं अहं अज्जचारुदत्तं अहिसारिदुं गच्छन्ती राअमग्गे परिभूदा ।" (ब)

भीताभयप्रदानं ददतः परोपकाररसिकस्य ।
यदि भवति-भवतु नाशस्तथापि च लोके गुण एव ॥१८॥

(ब) दृष्ट आर्य्यः । न, आर्य्या वसन्तसेना । तदेषा भणति—"युक्तं नेदम्, सदृशं नेदम्, यदहमार्य्यचारुदत्तमभिसर्त्तुं गच्छन्ती राजमार्गे परिभूता ।"

---

भीतेति । भीताय जनाय अभयप्रदानं ददतः कुर्व्वत इत्यर्थः, तथा परोपकारे रसिकः अनुरागी तस्य तादृशस्य जनस्य, यदि नाम कुतोऽपि कारणान्मृत्युर्भवति, स भवतु ; तथापि च लोके लोकसमाजे गुण एव स नाशो भद्र एव अत आर्य्यकस्य रक्षया यदि मम मृत्युर्भवेत् तदा सोऽपि श्लाघ्य एवेति भावः ।

आर्य्या जातिः ॥१८॥

(ब) अभयमिति । आर्य्य इत्यत्रार्य्यक एव सम्राया अप्रत्ययात् । एवमुक्ते तदे-तदार्य्यकस्य महाविपत्तिभियाग्रतो निषेधति नेति । आर्य्या नेत्यत्र । युक्तमुचितम् । सदृशं सेनापतेर्योग्यम् । अभिसर्त्तुमभिसारप्रकारेण प्राप्तुम् । परिभूता निरुध्य दर्शने-नापमानिता ।

अत्र उद्वेगो नाम गर्भसन्धेरङ्गम्—"नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः" इति लक्षणात् । तथा आर्य्या इति वक्तव्ये भयव्याकुलतया आर्य्य इत्युक्तत्वात् भ्रंशो नाम नाट्यलक्षणम्—"दृप्तादीनां भवेद्‌भ्रंशो वाच्यादन्यतरद्वचः" इति दर्पणलक्षणात् ।

---

যে, ভীত ব্যক্তিকে অভয় দান করিয়াছে এবং যে, পরের উপকার করিতে অনুরাগী, তাহার যদি মৃত্যু হয়, হউক, তথাপি তাহা গুণই ॥১৮॥

वीरकः । चन्दणआ ! एत्थ मह संसओ समुप्पण्णो । (भ)

चन्द । कधं दे संसओ ? । (म)

वीरकः ।

सम्भम-घग्घरकण्ठो तुमं पि जादोसि जं तुए भणिदं ।

दिट्ठो मए क्खु अज्जो पुणोवि अज्जो वसन्तसेणित्ति ॥२०॥

एत्थ मे अप्पच्चओ । (य)

(भ) चन्दनक । अत्र मम संशयः समुत्पन्नः । (म) कथं ते संशयः ? ।

सम्भ्रम घर्घर कण्ठस्त्वमपि जातोऽसि यत्त्वया भणितम् ।

दृष्टो मया खलु आर्य्य पुनरप्यार्य्या वसन्तसेनेति ॥२०॥

(य) अत्र मे अप्रत्ययः ।

सम्भ्रमेति । त्वमपि, सम्भ्रमेण भयव्यस्ततया, घर्घरं एतद्रूप अस्पष्ट कण्ठः स्वरो यस्य स तादृशो जातोऽसि, यत् त्वया भणितमर्थ्यम् ।

गीतिर्जातिः ॥२०॥

(य) अत्रेति । अत्र "आर्य्या वसन्तसेना" इत्युक्तौ, अप्रत्ययः अविश्वासः ।

(ব) (সভয়ে অবতীর্ণ হইয়া) আর্য্যকে দেখিয়াছি (এই অর্দ্ধোক্তির পর) না, আর্য্যা বসন্তসেনাকে দেখিয়াছি। তাহার পর ইনি বলিলেন—'ইহা সঙ্গত নহে, ইহা অনুরূপও নহে, যে আমি চারুদত্তের অভিসারে যাইতেছি, এই অবস্থায় আমাকে রাজপথে অপমানিত করা হইল।"

(ভ) বীরক। চন্দনক। এ বিষয়ে আমার সংশয় জন্মিল ?।

(ম) চন্দনক। কেন তোমার সংশয় জন্মিল ? ।

বীরক। ব্যস্ততাবশতঃ তোমার কণ্ঠস্বর 'ঘর্ ঘরে' হইয়া গিয়াছে, বিশেষতঃ তুমি প্রথমে বলিলে—"আমি আর্য্যকে দেখিয়াছি", আবার বলিলে—'আর্য্যা বসন্তসেনাকে দেখিয়াছি" ॥২০॥

चन्द। अरे! को अप्पच्चओ तुह?। अम्हे दक्खिणत्ता अव्वत्तभासिणो। खस-खत्ति-खड्डो-विलअ—(१) कण्णाट-कण्ण-प्पावरण-दविड़-चोल-चीण-वव्वर-(२) खेर-खाण-मुख-मधुघाट-पहुदीणं मिलिच्छजादीणं अणेअ-देस-भासाभिण्णा जहिट्ठं मन्तआम—"दट्ठो दिट्ठा वा, अज्जो अज्जआ वा।" (र)

वीरकः। णं अहं वि पलोएमि। राअ-अण्णा एसा। अहं रण्णो पच्चइदो। (ल)

(र) अरे! कः अप्रत्ययस्तव?। वयं दाक्षिणात्या अव्यक्तभाषिणः। खस-खत्ति-खड्ड खड्डी विलय कर्णाट-कर्ण प्रावरण द्रविड़ चोल चीन बर्व्वर खेर-खान-मुख-मधुघात-प्रभृतीनां म्लेच्छजातीनाम् अनेकदेशभाषाभिज्ञा यथेष्ट मन्त्रयाम—"दृष्टो दृष्टा वा, आर्य्य आर्य्या वा।"

(र) चन्द इति। [illegible] पद भाषितु शील येषां ते। खसादयो म्लेच्छजातिविशेषाः [illegible]। यथेष्टम् इच्छानुसारेण शब्दानामर्थं [illegible]। मन्त्रयामो ब्रूम।

(য) ইহাতে আমার অবিশ্বাস হইয়াছে।

(র) চন্দনক। ওরে! তোমার অবিশ্বাসটা কি? আমরা দাক্ষিণাত্যের লোক, অস্পষ্টভাষী। খস, খত্তি, খড্ড, বিলয়, কর্ণাট, কর্ণ, প্রাবরণ, দ্রবিড, চোল, চীন, বর্ব্বর, খের, খান, মুখ ও মধুঘাত-প্রভৃতি ম্লেচ্ছজাতিদিগের অনেক দেশভাষায় আমরা অভিজ্ঞ, সুতরাং আমরা ইচ্ছানুসারে বলিয়া থাকি—"দৃষ্ট, অথবা দৃষ্টা, আর্য্য, অথবা আর্য্যা।"

(ল) বীরক। ওহে! আমিও দেখিব। রাজার আদেশ। আমি রাজার বিশ্বস্ত লোক।

(१) विमय। (२) बर्व्वर।

चन्द। ता किं अहं अप्पच्चइदो संवुत्तो। (व)

वीरकः। णं सामि-णिओओ। (श)

चन्द। स्वगतम्। अज्जगोवालदारओ अज्जचारुदत्तस्स पवहणं अहिरुहिअ अवक्कमदि त्ति जइ कहिज्जदि, तदो अज्ज-चारुदत्तो रण्णा सासिज्जइ, ता को एत्थ उवाओ ?। विचिन्त्य। कण्णाट-कलह-प्पओअं करेमि। प्रकाशम्। अरे वीरअ! मए चन्दणकेण पलोइदं पुणो वि तुमं पलोएसि, को तुमं ?। (ष)

---

(ध) ननु अहमपि प्रलोकयामि। राजाज्ञा एषा। अहं राज्ञ प्रत्ययित।

(व) तत् किमहमप्रत्ययित संवृत्त ?। (श) ननु स्वामिनियोग।

(ष) आर्य्यगोपालदारक आर्य्यचारुदत्तस्य प्रवहणमधिरुह्य अपक्रामतीति यदि कथ्यते, तदा आर्य्यचारुदत्तो राज्ञा शिष्यते, तत् कोऽत्र उपाय ?। कर्णाट कलह प्रयोग करोमि। अरे वीरक! मया चन्दनकेन प्रलोकित पुनरपि त्व प्रलोकयसि, कस्त्वम् ?।

---

(श) वीरक इति। स्वामिनियोगो राजाज्ञा। तदाज्ञादेवाहं पुन प्रलोकयामि, न पुनस्तवाप्रत्ययितत्वादिति भाव।

(ष) चन्द इति। आर्य्य आर्य्यकाख्यो गोपालदारक आर्य्यगोपालदारक। अपक्रामति पलायते। शिष्यते दण्डयिष्यते। भविष्यत्सामीप्ये वर्त्तमाना। राजविद्विष्टस्यार्य्यकस्य सहायदानादिति भाव। एतेनार्य्यकस्य ग्रहणं सुतरामेवायातम्। कर्णाटकलह-प्रयोग कर्णाटकदेशीयरीत्या विवादानुष्ठानम्। तयात्वे तदपदेशेन आर्य्यकापसारण सुकरमेव भविष्यतीति भाव।

---

(ব) চন্দনক। তবে কি আমি অবিশ্বাস্য হইলাম ?।

(শ) বীরক। ওরে! প্রভুর আদেশ।

(ষ) চন্দনক। (স্বগত) "গোপবালক আর্য্যক, আর্য্য চারুদত্তের গাড়ীতে উঠিয়া পলাইয়াছে"—ইহা যদি বলি, তবে রাজা আর্য্য চারু-দত্তের দণ্ড করিবেন। সুতরাং এখন উপায় কি ?। (চিন্তা করিয়া)

वीरकः। अरे। तुमं पि को ?। (ग)

चन्द। पूइज्जन्तो माणिज्जन्तो तुमं अप्पणो जादिं ण सुमरेसि। (घ)

वीरकः। सक्रोधम्। अरे। का मह जादी ?। (ङ)

चन्द। को भणउ ?। (च)

वीरकः। भणउ। (छ)

---

(ग) अरे। त्वमपि कः ?।

(घ) पूज्यमानो मान्यमानस्त्वमात्मनो जातिं न स्मरसि ?।

(ङ) अरे। का मम जातिः ?। (च) को भणतु ?।

(छ) भणतु।

---

(घ) चन्द इति। मान्यमान सम्मानपात्रीक्रियमाण। उभयत्रापि सेनापतित्वादिति भावः।

(च) चन्द इति। क आवयोर्मध्ये कतर इत्यर्थः, भणतु वदेदिति तात्पर्य्यम्। "विभाष्यादिषु सप्तमी च" इति चकारात् पञ्चमी।

(छ) वीरक इति। भणतु भवानेव वदतु तत्प्रस्तावोऽस्माकमनुपयुक्तत्वादिति भावः।

---

কর্ণাটদেশীয় রীতি অনুসারে বিবাদ আরম্ভ করি। (প্রকাশ্যে) ওরে বীরক। আমি চন্দনক যাহা দেখিয়াছি, তুই আবার তাহা দেখিবি, তুই কে ?।

(গ) বীরক। ওরে। তুই বা কে ?।

(ঘ) চন্দনক। তুই পূজিত হইতেছিস্, সম্মানিত হইতেছিস্, কিন্তু নিজের জাতিটা স্মরণ করিস্ না ?।

(ঙ) বীরক। (ক্রোধের সহিত) ওরে। আমার জাতিটা কি ?।

(চ) চন্দনক। কে বলিবে ?।

(ছ) বীরক। আপনিই বলুন।

चन्द। अहवा ण भणामि। (ग)

जाणन्तो वि हु (१) जादिं तुज्झ अ ण भणामि सील-विहवेण।
चिट्ठउ मह च्चिअ मणे किं हि (२) कइत्थेण भग्गेण ॥२१॥

वीरकः। णं भणउ भणउ। (घ)

चन्दनकः सञ्ज्ञां ददाति। (ङ)

(ग) अथवा न भणामि।

जानन्नपि खलु जातिं तव च न भणामि शीलविभवेन।
तिष्ठतु ममैव मनसि किं हि कपित्थेन भग्नेन ॥२१॥

(घ) ननु भणतु भणतु।

---

जानन्निति। तव खलु जातिं जानन्नपि अहम्, शीलविभवेन स्वभावसम्पत्त्या आत्मनः सत्स्वभाववशेनेत्यर्थः, न च भणामि तां तव जातिं नहि वदामि, तव जाते कुत्सितत्वेन तदुद्घोषणे सत्स्वभावभङ्गप्रसङ्गादिति भावः। अतएव मम मनस्येव, सा जातिस्तिष्ठतु। हि यतोहि कपित्थेन फलेन भग्नेन किं फलम्? किमपि नेत्यर्थः। तथा च यथा सुदृढत्वेन विल्वफलतुल्यस्य कपित्थफलस्य भङ्गे तन्मध्यमवलोक्य लोकानां महती विरक्तिर्जायते, तथा सेनापतित्वेन क्षत्रियवदेवादरणीयस्य तव जात्युद्घोषणे तदाकर्ण्य लोकानां महत्यवज्ञा जायेतेति भावः।

अतएवात्र पर्यायोक्तिदृष्टान्तयोरेकाश्रयानुप्रवेशरूपः सङ्करः। आर्या जातिः ॥२१॥

(ङ) चन्देति। संज्ञां सङ्केतम् उत्तानवामकरतलोपरि तिर्यग्दक्षिणकराङ्गुली-चालनरूपं नापितजातिसूचकं सङ्केतं करोतीत्यर्थः।

---

(গ) চন্দনক। অথবা, আমি বলিব না।

তোমার জাতি জানিয়াও, আমি স্বভাবের গুণে তাহা বলিব না। তাহা আমার মনেই থাক, কারণ, কয়েৎবেল ভাঙ্গিয়া কি হইবে? ॥২১॥

(ঘ) বীরক। ওহে। বলুন বলুন।

(ঙ) চন্দনক সঙ্কেত করিল।

---

(১)—वि हि। (২)—किं च।

वीरकः। अरे। किं णेदं?। (च)

चन्द। सिण्ण-सिलाअल-हत्थो पुरिसाणं कुच्च-गण्ठि-सण्ठवणो।
कत्तरि-वावुद-हत्थो तुमं पि सेणावई जादो ॥२२॥

वीरकः। अरे चन्दणआ! तुमं पि माणिज्जन्तो अप्पणो केरिकं जादिं ण सुमरेसि। (छ)

---

(च) अरे। किम् इदम्?।

शीर्णशिलातलहस्तः पुरुषाणां कूर्च-ग्रन्थि-संस्थापनः।
कर्त्तरी-व्यापृत-हस्तस्त्वमपि सेनापतिर्जातः ॥२२॥

(छ) अरे। चन्दनक। त्वमपि मान्यमान आत्मनो जातिं न स्मरसि।

---

शीर्णेति। शीर्णं बहुकालं यावत् क्षुरघर्षणात् क्षयप्राप्तम्, शिलातलं प्रस्तरखण्डं हस्ते वामकरतले यस्य सः, पुरुषाणां कूर्चग्रन्थिं श्मश्रुगुच्छं संस्थापयति समरति छिनत्तीति च, तथा कर्त्तर्या श्मश्रुकर्त्तनास्त्रेण क्षुरेण व्यापृतो व्यासक्तो हस्तो दक्षिणकरो यस्य स तादृशः नापितजातीय इत्यर्थः, त्वमपि सेनापतिर्जातः। अतो नितान्तनीचस्य अत्युच्चपदलाभात् दम्भाधिक्यमिति भावः।

अत्र हस्तस्य द्विरुपादानात् कथितपदतादोषः, स च "कत्तरिवावुदपाणी" इति पाठेन समाधेयः। तथा गर्हणं नाम नाट्यलक्षणम्। यथा साहित्यदर्पणे—

"दूषणोद्घोषणायान्तु भर्त्सना गर्हणन्तु तत्।"

"कूर्चमस्त्री भ्रुवोर्मध्ये श्मश्रुकैतवयोरपि" इति त्रिकाण्डशेषः। "परामृष्टप्रासपञ्चल-घटित प्रेत सम्बिता" "कृपाणी कर्त्तरी समे" इति चामरः।

आर्या जातिः ॥२२॥

---

(চ) বীরক। ওরে। এ কি রে?।

চন্দনক। যাহার বাম হস্তে জীর্ণ প্রস্তরখণ্ড, যিনি পুরুষগণের শ্মশ্রুগুচ্ছ ছেদন করিয়া থাকেন এবং যাহার দক্ষিণ হস্ত ক্ষুরসংযুক্ত থাকে, এ হেন তুমিও সেনাপতি ॥২২॥

चन्द। अरे! का मह चन्दणअस्स चन्दविसुद्धस्स जादी ?। (ज)

वीरक.। को भणउ ?। (झ)

चन्द। भणउ भणउ। (ञ)

वीरक। नाट्येन संज्ञां ददाति। (ट)

चन्द। अरे! किं णेदं। (ठ)

वीरक। अरे! सुणाहि सुणाहि। (ड)

जादी तुज्झ विसुद्धा मादा भेरी पिदा वि दे पडहो।
दुम्मुह! करडअ-भादा तुमं वि सेणावई जादो ॥२३॥

(ज) अरे! का मम चन्दनकस्य चन्द्रविशुद्धस्य जातिः ?।
(झ) को भणतु ?। (ञ) भणतु भणतु।
(ठ) अरे! किम् इदम्। (ड) अरे! शृणु शृणु।

(ट) वीरक इति। अत्रापि संज्ञा जातिसूचकसङ्केतम् ऊर्द्ध्वौ मिलितौ संयुक्तमुष्टि हस्तकरद्वयस्य समाकर्षणरूप वाद्यनिष्पादकालीन चर्मकारजातिसूचकसङ्केतमित्यर्थः।

(छ) वीरक। ওরে চন্দনক। তুইও সম্মানের পাত্র হইয়া, নিজের জাতি স্মরণ করিতেছিস্ না।।

(জ) চন্দনক। ওরে। চন্দ্রের মত নির্মল চন্দনক আমি, আমার আবার জাতি কি রে ?।

(ঝ) বীরক। কে বলিবে ?।

(ঞ) চন্দনক। আপনিই বলুন, আপনিই বলুন।

(ট) বীরক। (অভিনয়ের ধরণে সঙ্কেত করিল)

(ঠ) চন্দনক। ওরে। এ কি রে ?।

(ড) বীরক। ওরে! শোন্ শোন্।

चन्द । सक्रोधम् । अहं चन्दणओ चम्मारओ ! ता पलोएहि पवहणं । (ढ)

वीरकः । अरे पवहणवाहआ ! परिवत्तावेहि पवहणं पलोइस्सं । (ण)

जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः ।
दुर्मुख ! करटकभ्राता त्वमपि सेनापतिर्जातः ॥२२॥

(ढ) अहं चन्दनकश्चर्मकारः ! तत् प्रलोकय प्रवहणम् ।

---

जातिरिति । विशुद्धा निष्कलङ्का तव जातिः । क्रीडोक्तिरियम् । तथा च ते तव माता भेरी दुन्दुभिः, स्वनिर्माणद्वारा चिरपरिपालनादिति भावः । पितापि पटहो ढक्का, स्वनिर्माणद्वारैव सम्प्रदानादित्याशयः । तथा हे दुर्मुख ! कटुक्तिकारिन् ! करटकोऽपि वाद्यविशेषो भ्राता, स्वनिर्माणद्वारा जीविकाया आनुकूल्यकरणादित्यभिप्रायः । एतेन चर्मकारजातिः सूचिता, तदानीं चर्मकारस्यैव वाद्यनिर्माणनियमात् । ईदृगस्त्वमपि सेनापतिर्जातः । अतएव च नितान्तनीचस्य चतुरपदलाभात् दैवाधिक्यमिति भावः ।

अत्र क्षोभो नाम नाट्यालङ्कारः—"अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु" इति साहित्यदर्पणलक्षणात् ।

"करटी वाद्यभेदे" इति मेदिनी ।

आर्या जातिः ॥२२॥

(ढ) चन्द इति । चर्मकार इति काकु, कथमपि नेत्यर्थः । चन्दनको वस्तुत एव न चर्मकारः, प्रतिवादकरणात् ; वीरकस्तु वस्तुत एव नापित., प्रतिवादाकरणादिति बोध्यम् ।

---

তোর জাতি খুব বিশুদ্ধ। কারণ, তোর মাতা হইল ভেরী, পিতা হইল ঢাক এবং ডুগি হইল ভাই, ওরে দুর্মুখ! এহেন তুইও সেনাপতি হইয়াছিস্ ॥২৩॥

(ঢ) চন্দনক। (ক্রোধের সহিত) কি আমি চন্দনক চামার! তা দেখ (দেখি) গাড়ী।

चेटस्तथा करोति ।

वीरकः प्रवहणमारोढुमिच्छति, चन्दनकः सहसा केशेषु गृहीत्वा पातयति, पादेन ताड़यति च ।

वीरकः । सक्रोधमुत्थाय । अरे ! अहं तुए वीसत्थो राआणत्तिं करेन्तो सहसा केसेसु गेण्हिअ पादेण ताड़िदो । ता सुणु रे ! अहिअरणमज्झे जइ दे चउरङ्गं ण कप्पावेमि, तदो ण होमि वीरओ । (त)

---

(ण) अरे ! प्रवहणवाहक ! परिवर्त्तय प्रवहणं प्रलोकयिष्यामि ।

(त) अरे ! अहं त्वया विश्वस्तो राजाज्ञां कुर्वन् सहसा केशेषु गृहीत्वा पादेन ताड़ितः । तत् शृणु रे ! अधिकरणमध्ये यदि ते चतुरङ्गं न कल्पयामि, तदा न भवामि वीरकः ।

---

(त) वीरक इति । विश्वस्तो राज्ञ इति शेषः । अधिकरणमध्ये विचारालयाभ्यन्तरे । चत्वारि अङ्गानि अवयवाः प्रकारा यस्य तं तादृशं दण्डमिति शेषः, मस्तकमुण्डन-शिलाघात-धनादान-बहिष्करणात्मकचतुर्विधमेव दण्डमित्यर्थः । कल्पयामि करोमि ।

---

(ণ) বীরক। ওরে গাড়ীচালক। গাড়ী ফিরা, আমি দেখিব।

(ভৃত্য তাহাই করিল)

(বীরক গাড়ীতে উঠিবার চেষ্টা করিল, চন্দনক হঠাৎ কেশাকর্ষণ-পূর্ব্বক তাহাকে ভূতলে পাতিত করিয়া পাদপ্রহার করিল)

(ত) বীরক। (ক্রোধের সহিত উঠিয়া) ওরে। আমি রাজার বিশ্বস্ত এবং রাজারই আদেশ পালন করিতেছিলাম, এই অবস্থায় তুই হঠাৎ কেশাকর্ষণ করিয়া আমাকে পাদপ্রহার করিলি? তা শোন্ রে! বিচারালয়ের মধ্যে আমি যদি তোর চারিপ্রকার দণ্ড না করাই, তবে আমি বীরকই নই।

चन्द। अरे! राअउलं अहिअरणं वा-वच्च। किं तुए सुणअ-सरिसेण?। (थ)

वीरकः। तह। इति निष्क्रान्तः। (द)

चन्द। दिशोऽवलोक्य। गच्छ रे पवहणवाहआ! गच्छ। जइ को वि पुच्छेदि, तदो भणासि "चन्दणअ-वीरएहिं अवलोइदं पवहणं वच्चइ। अज्जे! वसन्तसेणे! इमं च अहिण्णाणं दे देमि। इति खड्गं प्रयच्छति। (ध)

---

(थ) अरे! राजकुलमधिकरणं वा व्रज। किं त्वया शुनकसदृशेन?।

(द) तथा।

(ध) गच्छ रे प्रवहणवाहक। गच्छ। यदि कोऽपि पृच्छति, तदा भणिष्यसि "चन्दनक-वीरकाभ्याम् अवलोकितमिदं प्रवहणं व्रजति।" आर्य्ये! वसन्तसेने! इदञ्च अभिज्ञानं ते ददामि।

---

(थ) चन्द इति। शुनकसदृशेन कुक्कुरतुल्येन त्वया किं मम कर्त्तव्यमिति शेषः।

(द) वीरक इति। तथा शुनकसदृश एवाहमित्यर्थः। साक्रोशोऽयं स्वीकारः।

(ध) चन्द इति। सर्वदिगवलोकनम् अन्यो रथो आयच्छति न वेति ज्ञानार्थम्। अभिज्ञायते अनेनेति अभिज्ञानम् आत्मवीरकलोकनचिह्नमित्यर्थः। वसन्तसेने इति अनेन आर्य्यकस्यैव सम्बोधनम्, अन्यथा यद्यन्यो रथो अपयात् प्रवहणवाहको वा राजविद्विष्टार्य्यक-ज्ञानेन तं परित्यजेदिति बोध्यम्।

अतएव खड्गदानादस्य संग्रहो नाम गर्भसन्धेरङ्गम्—"संग्रहः पुनः। सामदानार्थ-सम्पन्नः" इति साहित्यदर्पणवचनात्।

---

(থ) চন্দনক। ওরে! রাজবাড়ী বা বিচারালয়ে যা। কুকুরের তুল্য তুই আমার কি করিবি?।

(দ) বীরক। তাই। (এই বলিয়া চলিয়া গেল)

(ধ) চন্দনক। (চতুর্দ্দিকে চাহিয়া) যা গাড়ীচালক! যা। যদি

आर्य्यकः । खड्गं गृहीत्वा सहर्षमात्मगतम् ।

अये ! शस्त्रं मया प्राप्तं स्पन्दते दक्षिणो भुजः ।
अनुकूलञ्च सकलं हन्त संरक्षितो ह्यहम् ॥२४॥

चन्द । अज्जए ! (न)

एत्थ मए विस्सविदा पच्चइदा चन्दणं पि सुमरेसि ।
ण भणामि एस लुद्धो णेहस्स रसेण वोल्लामो ॥२५॥

---

(न) आर्य्ये !

अत्र मया विश्वस्ता प्रत्ययिता चन्दनमपि स्मरसि ।
न भणामि एष लुब्धः स्नेहस्य रसेन वदाम ॥२५॥

---

अयि इति । सम्भ्रमे अयेशब्दः । हर्षे च हन्तशब्दः । मया शस्त्रं प्राप्तम्, अतः सहसा कोऽपि किमपि कर्त्तुं न शक्नुयादिति भावः । दक्षिणो भुजः स्पन्दते ; सुतरां "दक्षिणभुजस्पन्दनमर्थलाभं बन्धुदर्शनं वा" इति गर्गवचनात् राज्यलाभस्यैव सम्भावनेति भावः । अन्यत् सकलञ्च अनुकूलम्, अन्यरक्षकानागमनरक्षकपलाभादिरित्याशयः । अतः अहं संरक्षितो हि दैवेन सम्यक् रक्षित एव ।

अत्र शुभप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः । हिशब्दस्य नियतार्थत्वान्न निरर्थकत्वदोषः ॥२४॥

---

কেহ জিজ্ঞাসা করে, তবে বলিস্—"চন্দনক ও বীরকের পরীক্ষিত এই গাড়ী যাইতেছে।" আর্য্যে। বসন্তসেনে। এই চিহ্ন আপনাকে দিলাম। (ইহা বলিয়া তরোয়াল দিল)

আর্য্যক। (তরবারি গ্রহণ করিয়া আনন্দের সহিত-স্বগত)

ওহে! আমি অস্ত্র পাইলাম, দক্ষিণ বাহুও স্পন্দিত হইতেছে এবং সকলই অনুকূল দেখিতেছি, সুতরাং বিধাতা আমাকে রক্ষা করিয়াছেন ॥২৪॥

(ন) চন্দনক। আর্য্যে!

आर्य्यकः। चन्दनश्चन्द्रशीलाढ्यो दैवादद्य सुहृन्मम।
चन्दनं! भोः स्मरिष्यामि सिद्धादेशस्तथा यदि ॥२६॥

---

(न) चन्द इति। आर्य्ये इत्यपि पूर्ववदेव वसन्तसेनासम्बोधनच्छलेन आर्य्यकस्यैव सम्बोधनम्।

अद्येति। अद्य इदानीम्, मया विज्ञप्ता वक्ष्यमाणविषये त्वं निवेदिता, प्रार्थिता "राज्यं प्राप्य त्वं मां स्मरिष्यसीव" इत्यर्थे विज्ञप्ता च। कस्मिन् विषये निवेदिता इत्याह चन्दनमपि अथान्यबन्धुवत् मां चन्दनकमपि, आर्य्ये राज्यं प्राप्य बन्धुत्वेन स्मरिष्यसीत्यर्थः। भविष्यत्सामीप्ये वर्त्तमाना। एतत् अहम्, लुब्धः प्रत्युपकारलोभी सन्, इदं न भणामि, किन्तु स्नेहस्य रसेन स्वविषयकस्नेहजनितानुरागेण ब्रूम।

अत्र भणामि ब्रूम इति वचनभेदात् भग्नप्रक्रमतादोषः, "स्नेहस्य रसेन वदतु" इति-पाठेन समाधेयः। एतत् भणामीत्यन्वयः।

तथा स्वपक्षस्थच्छलेन स्वोपकारकरणाभिप्रायपरिज्ञानादधिबलं नाम गर्भसन्धेरङ्गम्— "अधिबलमभिसन्धिच्छलेन यः" इति दर्पणलक्षणात्।

आर्य्या जातिः ॥२५॥

चन्दन इति। चन्द्रवत् शोभिना परहितसाधुत्वतया शीतलेन स्वभावेन आढ्यो युक्तश्चन्दनः, अद्य दैवात् मम सुहृत् जातः इति शेषः। यदि सिद्धादेशस्तथा फलिष्यति राज्यं प्राप्स्यामीत्यर्थः, तदा भो महोपकारिन्! चन्दन भवन्तं स्मरिष्यामि स्मृत्वा प्रत्युपकरिष्यामीत्यर्थः ॥२६॥

---

আমি এখন আপনাকে জানাইতেছি, আপনি আমার বিশ্বস্ত, ভবিষ্যতে আপনি চন্দনককেও স্মরণ করিবেন, ইহা আমি লুব্ধ হইয়া বলিতেছি না, স্নেহের টানে বলিতেছি ॥২৫॥

আর্য্যক। ভাগ্যবশতঃ আজ চন্দ্রের ন্যায় নির্ম্মলস্বভাব চন্দন, আমার বন্ধু হইলেন। সিদ্ধপুরুষের আদেশ যদি সফল হয়, তবে নিশ্চয়ই চন্দনকে স্মরণ করিব ॥২৬॥

चन्द । अभअं तुह देउ हरो विण्हू वम्हा रवी अ चन्दो अ ।
हत्तूण सत्तुवक्खं सुम्भ-णिसुम्भे जधा देवी ॥२७॥

चेट । प्रवहणेन निष्क्रान्तः ।

चन्द । नेपथ्याभिमुखमवलोक्य । अरे ! णिक्कमन्तस्स मे पिअवअस्सो सव्विलओ पिट्ठदो ज्जेव अणुलग्गो गदो । भोदु, पधाणदण्डधारओ वीरओ राअपच्चअ-आरो विरोधिदो । ता

---

अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च ।
हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी ॥२७॥

(प) अरे ! निष्क्रामतो मम प्रियवयस्यः शर्विलकः पृष्ठत एवानुलग्नो गतः ।

---

अभयमिति । देवी दुर्गा, यथा शुम्भनिशुम्भौ दानवौ हत्वा, देवानामभयं दत्तवतीति शेषः, तथा हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च, शत्रुपक्षं हत्वा, ते तव अभयं ददातु ।

अत्र "देवानामभयं दत्तवती" इत्येतेषां पदानामनुक्तत्वेऽपि न न्यूनपदतादोषः, प्रत्युत गुण एव, वस्तुन्यासमयत्वात् "क्रोधानन्दमयादौ क्वचिन्न्यूनपदता गुणः" इति दर्पणोक्तत्वात् । न वा ददात्विति विधिभेदेऽपि भग्नप्रक्रमतादोषः, 'हत्वा' इत्यस्य एव साकाङ्क्षपर्यवसानात् ।

आर्या जातिः ॥२७॥

(प) चन्द इति । अरे इति अधीरतया निष्क्रमणकाले सम्बोधने । निष्क्रामतः स्थानान्तरं गच्छतः । पृष्ठत एव पश्चादेव, अनुलग्नः अनुगतः, गतः कार्यक्रममनुगतः ।

---

চন্দনক। দুর্গাদেবী শুম্ভনিশুম্ভকে বধ করিয়া যেমন দেবগণকে অভয় দান করিয়াছিলেন, সেইরূপ ব্রহ্মা, বিষ্ণু, মহেশ্বর, চন্দ্র ও সূর্য্য শত্রুপক্ষকে নাশ করিয়া আপনাকে অভয় দান করুন ॥২৭॥

(ভৃত্য গাড়ীর সহিত চলিয়া গেল)

(প) চন্দনক। (নেপথ্যের দিকে দৃষ্টিপাত করিয়া) ওহে! আমি চলিয়া যাইতেছিলাম, এই অবস্থায় প্রিয়সুহৃৎ শর্বিলক, পশ্চাৎ দিক্

भावे। अज्जवि चेड़े णाअच्छदि। (न)

विटः। स्वस्थो भवतु भवान्, सम्प्रत्येव आगमिष्यति। (प)

तत प्रविशति प्रवहणाधिरूढा वसन्तसेना चेटश्च।

चेटः। भीदे क्खु हग्ग। मज्झण्हिके शुज्जे। मा दाणिं कुविदे लाअशाल-शण्ठाणे हुविश्शदि। ता तुलिद वहामि। जाध, गोणा। जाध। (फ)

वसन्त। हद्धी! हद्धी! ण क्खु वड्ढमाणअस्स अअं सरसंजोओ, किं ण्ेदं?। किं ण क्खु अज्जचारुदत्तेण वाहण-

(न) भाव। अद्यापि चेटो नागच्छति।

(फ) भीत खल्वहम्। माध्याह्निक सूर्य्य। मा इदानीं कुपितो राष्ट्रियस्थान-सम्प्राणी भविष्यति। तत् त्वरित वहामि। यातम् गावौ यातम्।

(प) विट इति। स्वस्थ प्रकृतिस्थ।

(फ) चट इति। माध्याह्निका मध्याह्नसमय सूर्य्य, अत पदाभ्या तनुमशक्ततया मन्दिन्येन च कौपसम्भव इति भाव।

হিঙ্গুশোভিত, মরীচচূর্ণসংযুক্ত এবং তৈল ও ঘৃত মিশ্রিত করিয়া আলোড়িত কোকিলের মাংস আমি খাইয়াছি, সুতরাং আমি মধুরস্বর না হইব কেন ?॥১৪॥

(ন) পণ্ডিত। এখনও ভৃত্য আসিতেছে না।

(প) বিট। তুমি সুস্থ হও, এখনই আসিবে।

তাহার পর গাড়ীতে উঠিয়া বসন্তসেনা ও ভৃত্যের প্রবেশ।

(ফ) ভৃত্য। আমি ভীত হইয়া পড়িয়াছি। মধ্যাহ্নের সূর্য্য। তা, রাজার শালা সংস্থান ক্রুদ্ধ না হ'ন, এই জন্য আমি তাড়াতাড়ি যাই। যা গরু যা।

पड़िस्समं परिहरन्तेण अस्रो मणुस्सो अस्रं पवहणं पेसिदं भविस्सदि ?। फुरदि दाहिणं लोअणं वेवदि मे हिअअं, सुण्णाओ दिसाओ, सव्वं ज्जेव विसंठुलं पेक्खामि। (ब)

शकारः। नेमिघोषमाकर्ण्य। भावे ! भावे ! आगदे पवहणे। (भ)

विटः। कथं जानामि ?।

(ब) हा धिक् ! हा धिक् । न खलु वर्द्धमानकस्यायं स्वरसंयोगः। किन्नु इदम् ? किं खलु आर्य्यचारुदत्तेन वाहनपरिश्रमं परिहरता अन्यो मनुष्योऽन्यत् प्रवहणं प्रेषितं भविष्यति ?। स्फुरति दक्षिणं लोचनम् वेपते मे हृदयम् शून्या दिशः, सर्व्वमेव विसंष्ठुलं पश्यामि।

(भ) भाव ! भाव ! आगतं प्रवहणम्।

(ब) चट इति। वर्द्धमानकस्य पार्श्वचितस्य वदान्यचारुदत्तभृत्यस्य, अयं स्वरसंयोगः शकटध्वनिसम्बन्धी न खलु, विभिन्नप्रकारत्वादिति भावः। वाहन शकटसञ्चालने परिश्रमो वाहनपरिश्रमस्तम्, परिहरता परिहर्त्तुमिच्छताऽर्थः, पुनरपि वर्द्धमानकस्यैव प्रेरणे तस्य महान् परिश्रमो भवेदिति विविच्येत्यर्थः। लोचना दक्षिणाक्षिस्पन्दनं विपत्सूचकम्। विसंष्ठुलं प्रतिकूलम्।

(भ) शकार इति। नेमिघोषं घूर्णमानचक्रप्रान्तशब्दम्।

(ব) বসন্তসেনা। হায় ! হায় ! এই স্বরসংযোগ ত বর্দ্ধমানের নহে। এ ঘটনাটা কি ?। তবে কি আর্য্য চারুদত্ত, যাতায়াতের পরিশ্রম না হইবার জন্য, অন্য মানুষ এবং অন্য গাড়ী পাঠাইয়াছেন ?। আমার দক্ষিণ চক্ষু স্পন্দিত হইতেছে, হৃদয় কাঁপিতেছে এবং দিক্ সকল শূন্য বলিয়া বোধ হইতেছে, এইরূপ সকলই প্রতিকূল দেখিতেছি।

(ভ) শকার। (চক্রপ্রান্তের শব্দ শুনিয়া) পণ্ডিত ! পণ্ডিত ! গাড়ী আসিয়াছে।

शकारः। किं ण पेक्खदि भावे? वुड्ढशूअले विअ घुलघुलाअमाणं लक्खीअदि। (म)

विटः। (दृष्ट्वा)। साधु लक्षितम्। अयमागतः।

शकारः। पुत्तका! थावलका! चेडा! आगदे शि?। (य)

चेटः। अध इं। (र)

शकारः। पवहणे वि आगदे?। (ल)

चेटः। अध इं। (व)

शकारः। गोणा वि आगदे?। (श)

(म) किं न प्रेक्षते भावः? वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते।

(य) पुत्रक! स्थावरक! चेट! आगतोऽसि?।

(र) अथकिम्। (ल) प्रवहणमप्यागतम्?।

(व) अथकिम्। (श) गावावपि आगतौ?।

(म) शकार इति। घुरघुरायमाणं "घुर घुर" इत्येवमव्यक्तं शब्दं कुर्वाणम्, प्रवहणमिति शेषः, अपि घूर्णमानचक्रघर्षणादिति भावः। वृद्धशूकरोऽपि नासिका-विलिखनकाले 'घुर घुर' इत्येवं शब्दं करोतीति द्रष्टव्यम्।

বিট। কি করিয়া জানিলে?।

(ম) শকার। পণ্ডিত। আপনি কি দেখিতেছেন না? বৃদ্ধ শূকরের ন্যায় 'ঘুর্ ঘুর্' করিতেছে বলিয়া লক্ষ্য হইতেছে।

বিট। (দেখিয়া) ভাল লক্ষ্য করিয়াছ। এই আসিয়াছে।

(য) শকার। পুত্র! স্থাবরক! ভৃত্য! আসিয়াছিস্?।

(র) ভৃত্য। হাঁ।

(ল) শকার। গাড়ীও আসিয়াছে?।

(ব) ভৃত্য। হাঁ।

(শ) শকার। গরু দুইটাও আসিয়াছে?।

चेटः। अध इं। (घ)

शकारः। तुमं पि आगदे?। (ङ)

चेटः। सहासम्। भट्टके! अहं पि आगदे। (च)

शकारः। ता पविशेहि पवहणं। (छ)

चेटः। कदलेण मग्गेण?। (ज)

शकारः। एदेण ज्जेव पाआलखण्डेण। (झ)

चेटः। भट्टके! गोणा मलेन्ति, पवहणे वि भज्जेदि, हगे वि चेडे मलामि। (ञ)

(घ) अथ किम्। (ङ) त्वमपि आगतः?।

(च) भट्टारक! अहमप्यागतः। (छ) तत् प्रवेशय प्रवहणम्।

(ज) कतरेण मार्गेण?। (झ) एतेनैव प्राकारखण्डेन।

(ञ) भट्टारक! गावौ म्रियेते, प्रवहणमपि भज्यते, अहमपि चेटो म्रिये।

(च) चेट इति। प्रवहणदर्शने सत्यपि पुनरागमनप्रश्नात् मार्गेऽयमासीदिति प्रतीयते।

(झ) शकार इति। एतेनैव सम्मुखवर्त्तिनैव, प्राकारखण्डेन दृश्यमानप्राचीरभागेन तदुपरि प्रेरयेत्यर्थः।

(ञ) चेट इति। एवंच प्राकारखण्डेन प्रवेशने इति सम्बध्यते। गोमरणादिकन्तु प्राकारोपरि वक्रमार्गाभावात् ततः पतनादेवेति बोध्यम्।

(ঘ) ভৃত্য। হাঁ।

(ঙ) শকার। তুইও আসিয়াছিস্?।

(চ) ভৃত্য। (হাস্যের সহিত) প্রভু! আমিও আসিয়াছি।

(ছ) শকার। তবে গাড়ীখানা ভিতরে আন্।

(জ) ভৃত্য। কোন পথে?।

(ঝ) শকার। এই প্রাচীরের উপর দিয়াই আন।

विटः । एवं भवतु । इत्यारोहति ।

शकारः । अधवा चिट्ठ तुमं । तुह वप्पकेलके, पवहणे ? जेण तुमं अग्गदो अहिलुअशि । हग्गे पवहणशामी अग्गदो पवहणं अहिलुहामि । (ट)

विटः । भवानेवं ब्रवीति । (ठ)

शकारः । जइ वि हग्गे एव्वं भणामि, तथावि तुह एशे आदले अहिलुह भट्टकेत्ति भणिदुं । (ड)

(ञ) भाव । आगच्छ, प्रवहण पश्चात् । भाव ! त्वमपि मे गुरुः, परमगुरुः प्रेक्ष्यसे, सादरकः अभ्यन्तरक इति पुरस्करणीय इति त्व तावत् प्रवहणमग्रत अधिरोह ।

(ट) अथवा तिष्ठ त्वम् । तव बप्पीय प्रवहणम् ? येन त्वमग्रत, अधिरोहसि । अहं प्रवहणस्वामी अग्रत प्रवहणमधिरोहामि ।

(ञ) शकार इति । अपरिवार्य, त्वमैश्वर्य, । सादरक आदरणीय, अभ्यन्तरक अन्तरङ्गश्च, इति हेतो, पुरस्करणीय सर्वत्र अग्रत, स्थापनीय ।

(ट) शकार इति । बप्पस्य पितुरिदमिति बप्पीयम्, प्रवहण किमिति काकु ।
"बप्पस्तात पिता चैव अरे रेफो च रोषणि" इति त्रिकाण्डशेष ।

(ठ) विट इति । एव 'त्व तावत् प्रवहणमग्रत अधिरोह' इत्य भवानेव ब्रवीति । अतस्तदनुसारेणाहमग्रतोऽधिरोढ़ गच्छन्न दोषीति भाव ।

আপনাকে গুরু, এমন কি পরম গুরু বলিয়া দেখি এবং আদর করি ও অন্তরঙ্গ বলিয়া মনে করি, সুতরাং আপনাকেই আগে করা উচিত, অতএব আপনিই আগে আরোহণ করুন।

বিট। ইহাই হউক। (এই বলিয়া আরোহণ করিতে লাগিল)

(ট) শকার। অথবা, তুমি থাক, তোমার বাপের গাড়ী ? যে, তুমি আগে উঠিতেছ, আমি গাড়ীর মালিক; আমি আগে উঠিব।

(ঠ) বিট। তুমিই সে এইরূপ বলিয়াছিলে।

विटः। आरोहतु भवान्।

शकारः। एशे शम्पदं अहिलुहामि। पुत्तका। थाव-लका। चेडा। पलिवत्ताविहि पवहणं। (ढ)

चेटः। परावर्त्य। अहिलुहदु भट्टालके। (ण)

शकारः। अवरुह्यावलोक्य च सहसा नाटयित्वा त्वरितमवतीर्य विटं कण्ठे अवलम्ब्य। भावे! भावे! मलेशि मलेशि पवहणाधिलूढा लक्खशी चोले वा पडिवशदि। जइ लक्खशी तदा उभे वि मूशे, अध चोले त उभे वि खज्जे। (त)

---

(ड) यद्यपि अहमेव भणामि, तथापि तव एष आदर "अधिरोह भट्टारक।" इति भणितुम्।

(ढ) एष साम्प्रतमधिरोहामि। पुत्रक। स्थावरक। चेट। परिवर्त्तय प्रवहणम्।

(ण) आरोहतु भट्टारक।

(त) भाव। भाव। म्रिये म्रिये। प्रवहणाधिरूढा राक्षसी चौरो वा प्रतिवसति। यदि राक्षसी तदा उभावपि मुषितौ, अथ चौर तदा उभावपि खादितौ।

(ड) शकार इति। हे भट्टारक। स्वामिन्। आरोह इति भणितुं वक्तुम् आदरः तव कर्त्तुमुचित आसीदिति शेष। एवं सति विनयो रचितो भवतीति भाव।

(त) शकार इति। उभावपि समुच्चेतत्रावपि, चेटस्य तु पूर्वत एव स्थितत्वात्

---

(ড) শকার। যদিও আমি এইরূপ বলিয়া থাকি, তথাপি আপনার এইরূপ আদর করা উচিত ছিল যে, প্রভু! আপনি উঠুন।

বিট। আপনি উঠুন।

(ঢ) শকার। এই এখন উঠিতেছি। পুত্র! স্থাবরক! ভৃত্য! গাড়ী ফিরাও।

(ণ) ভৃত্য। (গাড়ী ফিরাইয়া) প্রভু! আরোহণ করুন।

शकारः। अले लाअशालए हग्गे, गोणा मले, अवले कीणिश्शं, पवहणे भग्गे अवलं घडाइश्शं, तुमं मले अण्णे पवहणवाहके हुविश्शदि। (घ)

चेटः। शव्वं उववण्णं हुविश्शदि, हग्गे अत्तणकेलके ण हुविश्शं। (ङ)

शकारः। अले! शव्वं पि णश्शदु, पाआलखण्डेण पवेशेहि पवहणं। (च)

(घ) अरे! राजश्यालकोऽहम्, गावौ मृतौ, अपरौ क्रेष्यामि, प्रवहणे भग्नम् अपरं घटयिष्यामि, त्वं मृत, अन्यः प्रवहणवाहको भविष्यति।

(ङ) सर्वमुपपन्नं भविष्यति, अहमात्मीयो न भविष्यामि।

(च) अरे! सर्वमपि नश्यतु प्राकारखण्डेन प्रवेशय प्रवहणम्।

---

(घ) शकार इति। मृतौ म्रियेतामिति शेषः। एवं परत्रापि।

(ङ) चेट इति। उपपन्नं तव सम्पन्नम्। आत्मीय एतच्छरीरसम्बन्धी एतस्माच्छरीरान्निर्गतो जीवः पुनरेतत् प्राप्स्यतीत्यर्थः।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।" इत्यमरः।

---

(গ) ভৃত্য। প্রভু! গরু দুইটা মরিবে, গাড়ীও ভাঙ্গিবে, আমি ভৃত্য বেটাও মরিব।

(ঘ) শকার। ওরে! আমি রাজার শালা, গরু মরে, আর দুইটা কিনিব গাড়ী ভাঙ্গে, আর একখানা গাড়ী গড়াইব, তুই মরিস ত, আর একজন গাড়ীচালক হইবে।

(ঙ) ভৃত্য। আপনার সকলই সম্পন্ন হইবে, কিন্তু আমি ত আর নিজের হইব না।

(চ) শকার। ওরে! সকলই নষ্ট হউক, তথাপি প্রাচীরের উপর দিয়া গাড়ী আন।

चेटः। विभज्ज ले पवहण! शमं शामिणा विभज्ज, अण्णे पवहणे भोदु। भट्टके गदुअ णिवेदेमि। प्रविश्य। कधं ण भग्गे!। भट्टके! एशे उवट्ठिदे पवहणे। (छ)

शकारः। ण छिण्णा गोणा? ण मला लज्जू? तुमं पि ण मले?। (ज)

चेटः। अधइं। (झ)

शकारः। भाव! आअच्छ, पवहणं पेक्खामो। भावे! तुमं पि मे गुलु पलमगुलु पेक्खिअशि शाट्टलके अब्भमन्तलके त्ति पुलक्कलणीएत्ति तुमं दाव पवहणं अग्गदो अहिलुह। (ञ)

(छ) विभज्यस्व रे प्रवहण! मम स्वामिना विभज्यस्व अन्यत् प्रवहणं भवतु, भट्टारकं गत्वा निवेदयामि। कथं न भग्नम्? भट्टारक! एतदुपस्थितं प्रवहणम्।

(ज) न छिन्नौ गावौ? न मृता रज्जवः? त्वमपि न मृतः?।

(झ) अथकिम।

(छ) चेट इति। विभज्यस्व विच्छिन्नं भग्नं भव, स्वामिना मम प्रभुणा शकारेण सह, विभज्यस्व विश्लिष्टं भग्नं भव, अन्यत् प्रवहणं भवतु इति गत्वा, भट्टारकं मम स्वामिनं शकारं निवेदयामीत्यन्वयः।

(ज) शकार इति। अत्र मृतौ गावौ, छिन्ना रज्जवः इति व्यत्ययेनान्वयः।

(ছ) ভৃত্য। ভাঙ্ রে গাড়ী! প্রভুর সহিত ভাঙ্, অন্য গাড়ী হউক, প্রভুকে যাইয়া জানাই। (প্রবেশ করিয়া) গাড়ী যে ভাঙিল না? প্রভু! এই গাড়ী উপস্থিত হইয়াছে।

(জ) শকার। গরু ছিঁড়ে নাই? দড়ি মরে নাই? তুইও মরিস্ নাই?।

(ঝ) ভৃত্য। হাঁ।

(ঞ) শকার। পণ্ডিত! আসুন, গাড়ী দেখি। পণ্ডিত! আমি

विट. । एवं भवतु । इत्यारोहति ।

शकार । अधवा चिट्ठ तुमं । तुह वप्पकेलके पवहणे ? जेण तुमं अग्गदो अहिलुअसि । हग्गे पवहणशामी अग्गदो पवहणं अहिलुहामि । (ट)

विट: । भवानेव ब्रवीति । (ठ)

शकार. । जइ वि हग्गे एव्व भणामि, तधावि तुह एशे आदले अहिलुह भट्टकेत्ति भणिदुं । (ड)

(ञ) भाव । आगच्छ प्रवहणं पश्चात् । भाव । त्वमपि मे गुरुः परमगुरुः प्रेक्ष्यसे सादरकः अभ्यन्तरक इति पुरस्करणीय इति त्वं तावत् प्रवहणमग्रतः अधिरोह ।

(ट) अथवा तिष्ठ त्वम् । तव बप्पीयं प्रवहणम् ? येन त्वमग्रतः अधिरोहसि । अहं प्रवहणस्वामी अग्रतः प्रवहणमधिरोहामि ।

---

(ञ) शकार इति । अपिरवार्थे त्वमित्यव्यय । सादरक आदरणीय अभ्यन्तरक अन्तरङ्ग इति द्वौ पुरस्करणीय सर्वत्र अग्रत स्थापनीय ।

(ट) शकार इति । बप्पस्य पितुरिदमिति बप्पीयम् प्रवहणं किमिति काकु ।
"बप्पस्तातं स्त्रिया चेत्री चरी रेण्टी च नीचसि" इति त्रिकाण्डशेष ।

(ठ) विट इति । एवं 'त्वं तावत् प्रवहणमग्रत अधिरोह' इत्थं भवानेव ब्रवीति । अतस्तदनुसारणाहमग्रतोऽधिरोढुं गच्छन् दोषोऽस्तीति भाव ।

---

আপনাকে গুরু, এমন কি পরম গুরু বলিয়া দেখি এবং আদর করি ও অন্তরঙ্গ বলিয়া মনে করি, সুতরাং আপনাকেই আগে করা উচিত, অতএব আপনিই আগে আরোহণ করুন।

বিট। ইহাই হউক। (এই বলিয়া আরোহণ করিতে লাগিল)

(ট) শকার। অথবা, তুমি থাক, তোমার বাপের গাড়ী ? যে, তুমি আগে উঠিতেছ, আমি গাড়ীর মালিক, আমি আগে উঠিব।

(ঠ) বিট। তুমিই সে এইরূপ বলিয়াছিলে।

विटः । आरोहतु भवान् ।

शकारः । एशे शम्पदं अहिलुहामि । पुत्तका ! थावलका ! चेड़ा ! पलिवत्तावेहि पवहणं । (ढ)

चेटः । परावर्त्य । अहिलुहदु भट्टालके । (ण)

शकारः । अधिरुह्यावलोक्य च सशङ्कं नाटयित्वा त्वरिततरमवतीर्य विटं कण्ठे गृहीत्वा । भावे ! भावे ! मलेशि मलेशि पवहणाधिलूढ़ा लक्खशी चोले वा पड़िवशदि । जइ लक्खशी तदा उभे वि मूशिदे, अध चोले त उभे वि खज्जिदे । (त)

(ड) यद्यपि अहमेव भणामि, तथापि त्वम् एव आदरं "अधिरोह भट्टारक !" इति भणितुम् ।

(ढ) एष साम्प्रतमधिरोहामि । पुत्रक ! स्थावरक ! चेट ! परिवर्त्तय प्रवहणम् ।

(ण) अधिरोहतु भट्टारक ।

(त) भाव ! भाव ! म्रियसे म्रियसे ! प्रवहणाधिरूढा राक्षसी चौरो वा प्रतिवसति । यदि राक्षसी, तदा उभावपि मुषितौ, अथ चौरः तदा उभावपि खादितौ ।

(ड) शकार इति । हे भट्टारक ! स्वामिन् ! अधिरोह इति भणितुं वक्तुम्, आदरो यत्न कर्त्तुमुचित आसीदिति शेषः । एवं सति विनयो रक्षितो भवतीति भावः ।

(त) शकार इति । उभावपि ममहमपि ... तावपि, चेटस्य तु पूर्वत एव स्थितत्वात्

(ড) শকার । যদিও আমি এইরূপ বলিয়া থাকি, তথাপি আপনার এইরূপ আদর করা উচিত ছিল যে, প্রভু ! আপনি উঠুন ।

বিট । আপনি উঠুন ।

(ঢ) শকার । এই এখন উঠিতেছি । পুত্র ! স্থাবরক ! ভৃত্য ! গাড়ী ফিরাও ।

(ণ) ভৃত্য । (গাড়ী ফিরাইয়া) প্রভু ! আরোহণ করুন ।

विटः। न भेतव्यम्। कुतोऽत्र वृषभयाने राक्षस्याः सञ्चारः। मा नाम, ते मध्याह्नार्क-ताप-च्छिन्न-दृष्टेः स्थावरकस्य सकञ्चुकां छायां दृष्ट्वा भ्रान्तिरुत्पन्ना?। (थ)

शकारः। पुत्तका! थावलका! चेड़ा! जीवेशि?। (द)

(द) पुत्रक! स्थावरक! चेट! जीवसि?।

---

स्थितिसम्भव इति भावः, मुषितौ अपहृतौ। अथ पक्षान्तरे। अत्रापि पूर्ववदेव यौग्यतामतिक्रम्याभिहितम्। तेन "यदि राक्षसी, तदा उभावपि खादितौ। अथ चौरः, तदा उभावपि मुषितौ" इत्युक्तिः मन्तव्या।

(थ) विट इति। वृषभयाने गोशकटे। प्रचारो गमनम्। मध्याह्नार्कस्य तापेन छिन्ना नाशिता दृष्टिर्दर्शनशक्तिर्यस्य तादृशस्य ते तव, स्थावरकस्य तदाख्यस्य प्रवहणवाहकस्य भृत्यस्य, कञ्चुकेन वारबाणेन गात्रावरणेन सहितां ताम्। दृष्ट्वा विद्यमानस्य ते तव, मा नाम भ्रान्तिरुत्पन्ना न किं भ्रमो जातः? अपि तु भ्रान्तिरेवोत्पन्ना, न पुनर्वस्तुत एव राक्षसी चौरो वेति भावः।

---

(ত) শকার। (আরোহণ করিয়া, দেখিয়া, ভয় অভিনয় করিয়া, তাড়াতাড়ি নামিয়া, গলদেশে বিটকে ধারণ করিয়া) পণ্ডিত! পণ্ডিত! মরিয়াছি, মরিয়াছি। কারণ, একটা রাক্ষসী, কিংবা একটা চোর গাড়ীতে উঠিয়া বসিয়া রহিয়াছে। যদি রাক্ষসী হয়, তবে আমাদের দুই জনকেই চুরি করিয়া নিয়াছে; আর যদি চোর হয়, তবে দুই জনকেই খাইয়া ফেলিয়াছে।

(থ) বিট। ভয় করিও না। এই গরুর গাড়ীতে রাক্ষসীর আগমন হইবে কিরূপে?। মধ্যাহ্নের সূর্যের তাপে তোমার দৃষ্টিশক্তি নষ্ট হইয়াছে, তাহাতে অঙ্গরাখার সহিত স্থাবরকের ছায়া দেখিয়া তোমার ভ্রম হয় নাই ত?।

(দ) শকার। পুত্র! স্থাবরক! চেটা! বাঁচিয়া আছিস্ ত?।

चेटः। अध इं। (ध)

शकारः। भावे! पवहणाधिरूढा इत्थिआ पडिवशदि। ता अवलोएहि। (न)

विटः। कथं स्त्री!!

अवनतशिरसः प्रयाम शीघ्रं
पथि वृषभा इव वर्षताडिताक्षाः।
मम हि सदसि गौरवप्रियस्य
कुलजनदर्शनकातरं हि चक्षुः ॥१५॥

वसन्त। सविस्मयमात्मगतम्। कधं मम णअणाणं आआसअरो

(ध) अथकिम्। (न) भाव। प्रवहणाधिरूढा स्त्री प्रतिवसति। तदवलोकय।

अवनतेति। पथि वर्षवृष्टिभिः ताडिते पीडिते अक्षिणी येषां ते तादृशा वृषभा इव, अवनतानि शिरांसि येषां ते तादृशाः परस्त्रीदर्शनभयादिति भावः, वयं शीघ्रं प्रयाम इतो गच्छाम। हि यस्मात्, सदसि सज्जनसमाजे, गौरवप्रियस्य सम्मानलाभाभिलाषिणः, मम चक्षुः कुलजनस्य कुलस्त्रिया दर्शने कातरं हि असमर्थमेव, तथा च यदीदानीं परस्त्रियं पश्येयम्, तच्च प्रथितं, तदा सज्जनसमाजे मम गौरवं न स्यात्, तेनेतः प्रस्थानमेव मे श्रेय इति भावः।

अत्र कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः श्रौतोपमया सङ्कीर्यते। पुष्पिताग्रा च वृत्तम् ॥१५॥

(ध) भृत्य। हाँ।

(न) শকার। পণ্ডিত! একটা স্ত্রীলোক গাড়ীতে উঠিয়া বসিয়া রহিয়াছে। তা দেখুন।

বিট। স্ত্রীলোক!! পথে বৃষ্টিপীড়িত-দৃষ্টি বৃষের ন্যায়, আমি অবনতমস্তক হইয়া, এখান হইতে শীঘ্র চলিয়া যাইব। কারণ, আমি সজ্জন-সমাজে গৌরবাভিলাষী, সুতরাং আমার নয়ন, কুলবধূদর্শনে অসমর্থ ॥১৫॥

ज्जेव राअस्सालो। ता संसइदम्हि मन्दभाआ। एसो दाणिं मम मन्दभाइणीए ऊसरक्खेत्तपडिदो विअ वीअमुट्ठी णिप्फलो इध आगमणो संवुत्तो। ता किं एत्थ करइस्सम्?। (प)

शकारः। कादले क्खु एशे वुड्ढचेडे पवहणं णावलोएदि। भावे। आलोएहि पवहणं। (फ)

विटः। को दोषः। भवत्वेवं तावत्।

(प) अथ मम नयनशीरायाः कर एव राजश्यालः। तत् शङ्कितास्मि मन्दभागा। एतदिदानीं मन्दभागिन्या ऊषरक्षेत्रपतित इव बीजमुष्टिः निष्फलमिहागमनं संवृत्तम्। तत् किमत्र करिष्यामि ?।

(फ) कातरः खल्वेष वृद्धचेटः प्रवहणं नावलोकयति। भाव। आलोकय प्रवहणम्।

(प) वसन्त इति। सर्वथैवाऽसम्भावितशकारप्रवहण आगमनात् सहसा तद्दर्शनाच्च विस्मय इति बोध्यम्। शङ्कितास्मि जीवने इति शेषः, शकारस्य क्रूरत्वात् वधकाण्डाद्यभावात् इति भावः। ऊषरक्षेत्रे क्षारमृत्तिकामयभूमौ पतितः, बीजमुष्टिः मुष्टिपरिमितं धान्यादिबीजमिव, निष्फलं चारुदत्तदर्शनाभावात् अनुपलब्ध सम्भवात् इति भावः।

(फ) शकार इति। वृद्धचेटः स्थावरकाख्यो दासः, कातरः पार्श्वोदर्शने भीतः, अतएव प्रवहणं नावलोकयति।

(প) বসন্তসেনা। (বিস্ময়ের সহিত স্বগত) আমার নয়নের দুঃখজনক রাজশ্যালকই (যে উপস্থিত), তা মন্দভাগা আমি সংশয়াপন্ন হইয়াছি। ঊষরক্ষেত্রে নিপতিত বীজমুষ্টির ন্যায়, এখন আমার এই আগমন নিষ্ফল হইয়াছে। তা, এখন আমি কি করি?।

(ফ) শকার। এই বৃদ্ধ ভৃত্য কাতর হইয়া পড়িয়াছে, তাই গাড়ী দেখিতেছে না। পণ্ডিত! আপনি দেখুন।

शकारः। कधं शिआला उड्डेन्ति वाअशा वज्जेन्ति। ता जाव भावे अक्खीहिं भक्खीअदि, दन्तेहिं पेक्खीअदि, दाव इदो पलाइस्सं। (व)

विटः। वसन्तसेनां दृष्ट्वा सविषादमात्मगतम्। कथमये मृगी व्याघ्रमनुसरति। भोः कष्टम्। (भ)

शरच्चन्द्रप्रतीकाशं पुलिनान्तरशायिनम्।
हंसी हंसं परित्यज्य वायसं समुपस्थिता ॥१६॥

(व) कथं शृगालाः उड्डयन्ते, वायसाः व्रजन्ति। तत् यावत् भाव अक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते, तावदितः पलायिष्ये।

(व) शकार इति। उड्डेन्ति विहायसा गच्छन्ति। वायसाः काकाः। व्रजन्ति भूमावेव विचरन्ति। असम्बद्धप्रलापकमेतत्। सङ्गत्या इति। शृगालाः व्रजन्ति, वायसाः उड्डयन्ते। तद्यावदत्र अक्षिभ्यां प्रेक्ष्यते, दन्तैर्भक्ष्यते गावस्था इति शेषः। तावदितः पलायिष्ये इति क्रमो बोद्धव्यः। व्युत्क्रमाभिधानं शकारस्वभावात्।

(भ) विट इति। मृगी व्याघ्रमनुसरतीत्यनेन शकारद्वारा वसन्तसेनाया विपत्तिः सूचिता। अतएवात्र अप्रस्तुतप्रशंसालङ्कारः।

शरदिति। हंसी पक्षिणी शरच्चन्द्रप्रतीकाशं शरच्चन्द्रवत् शुभ्रवर्णम्। एतेन चारुदत्तस्य यशःशुभ्रत्वं निर्मलनिर्दोषत्वञ्च व्यज्यते। पुलिनान्तरं नद्यादिसैकतमध्ये शयितं तिष्ठतीति तम्। अनेनापि चारुदत्तस्य निरापद्‌स्थितित्वं सूच्यते। हंस

বিট। দোষ কি ?। এইরূপই হউক।

(ব) শকার। হায়! শিয়াল উড়িতেছে, কাক দৌড়াইতেছে। সুতরাং যে পর্য্যন্ত পণ্ডিতটাকে নয়নদ্বারা ভক্ষণ করে এবং দন্তদ্বারা দর্শন করে, তাহার মধ্যে আমি পলাইব।

(ভ) বিট। (বসন্তসেনাকে দেখিয়া, বিষাদের সহিত স্বগত) হরিণী যে ব্যাঘ্রের অনুসরণ করিতেছে। হায়! কি কষ্ট।

जनान्तिकम्। वसन्तसेने! न युक्तमिदं नापि सदृशमिदम्। (न)

पूर्वं मानादवज्ञाय द्रव्यार्थं जननीवशात्।

वसन्त। न। इति शिरश्चालयति। (य)

विटः। अशौण्डीर्यस्वभावेन वेशभावेन मन्यते ॥१७॥

(य) न।

परित्यज्य, वायसं काकम्, समुपस्थिता सम्प्राप्ता। तथा च हंस्याः हंसविहङ्गम-परित्यागानन्तरं वायसं प्रति समुपस्थानमिव तथापि चारुदत्तपरित्यागानन्तरं शकारं प्रति समुपस्थानं नितान्तायोग्यत्वात् महादुःखकरमिति भावः।

अतएवात्र अप्रस्तुतसमात् प्रस्तुतसमप्रतीतिरूपा अप्रस्तुतप्रशंसा तुल्योपमया सङ्कीर्यते। अभिप्रायो नाम नाट्यलक्षणञ्च। यथा दर्पणे—

"अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ॥१८॥

(न) जनेति। इदं तव समुपस्थानम्, न युक्तं नौचितम्, नापि सदृशं योग्यम्, तव उत्तमाङ्गनात्वात् शकारस्य तु पुरुषाधमत्वादित्याशयः।

न युक्तं कथमित्याह पूर्वमिति। मानात् शकारापेक्षया आत्मन उत्तमत्वाभिमानात्, पूर्वं शकारमवज्ञाय तथा, द्रव्यार्थं धनलाभार्थं, जननीवशात् मातुरादेशवशात्, अशौण्डीर्यमनौदार्यमेव स्वभावो यस्मिन् तादृशेन, वेशभावेन वेश्याजनस्वभावेन, मन्यते

শরচ্চন্দ্রের ন্যায় শুভ্রবর্ণ এবং পুলিনদেশে অবস্থিত হংসকে পরিত্যাগ করিয়া হংসী, কাকের নিকট উপস্থিত হইয়াছে ॥১৬॥

(ন) (বসন্তসেনার নিকট চুপি চুপি) বসন্তসেনে। তোমার এই আগমন সঙ্গত হয় নাই এবং অনুরূপও হয় নাই। কারণ—

পূর্ব্বে অভিমান বশতঃ শকারকে অবজ্ঞা করিয়া, এখন ধনের নিমিত্ত মাতার আদেশে—

(য) বসন্তসেনা। না। (এই বলিয়া মস্তক সঞ্চালন করিল)

বিট।—এবং অনুদার বেশ্যাজনের স্বভাববশতঃ নিজের আগমনই সঙ্গত বলিয়া মনে করিতেছ ॥১৭॥

ननूक्तमेव मया भवतीं प्रति—"सममुपचर भद्रे! सुप्रियञ्चाप्रियञ्च"।

वसन्त। पवहणविपज्जासेण आगदा सरणागदम्हि। (र)

विटः। न भेतव्यं न भेतव्यम्। भवत्वेनां वञ्चयामि। शकारमुपगम्य। काणेलीमातः! सत्यं राक्षस्येवात्र प्रतिवसति।

शकारः। भावे! भावे! जइ लक्खशी पड़िवशदि, ता कीश ण तुमं मूशेदि?। अध चोले, ता किं ण तुमं भक्खिदे?। (ल)

(र) प्रवहणविपर्य्यासेनागता शरणागतास्मि।

(ल) भाव! भाव! यदि राक्षसी प्रतिवसति, तत् केन न त्वां मुष्णाति? अथ चौरः तत् किं न त्वं भक्षितः?।

सर्वं च शकारस्यान्तिके स्वयमेवोपस्थानं न्याय्यं सम्भाव्यते। तथा च पूर्वं मयोक्तत्व-ज्ञानेनावस्थानस्य जनस्य कारणविशेषेण योऽवर्त्तीनपथ्यभावं कैवल्यधनलाभाऽन्यथा तस्यादर-प्रदर्शनमात्मनो नीचाशयताप्रकाशादयुक्तमेवेति भाव।

अत्र वस्तुविषादमयतया न श्रुङ्गपदतादोष ॥१७॥

(ल) शकार इति। मुष्णाति चोरयति। अत्रापि पूर्ववत् क्रम उन्नेयः।

আমি ত তোমাকে পূর্ব্বেই বলিয়াছিলাম যে—হে ভদ্রে! তুমি প্রিয়জন ও অপ্রিয়জনকে সমান ভাবে সেবা কর।

(র) বসন্তসেনা। ভ্রমবশতঃ অন্য গাড়ীতে উঠিয়া আসিয়া পড়িয়াছি। এখন আমি আপনার শরণাপন্ন হইলাম।

(ল) বিট। ভয় করিও না, ভয় করিও না। হউক, ইহাকে বঞ্চিত করি। (শকারের নিকট যাইয়া) কাণেলীর পুত্র! সত্যই এই গাড়ীতে রাক্ষসীই রহিয়াছে।

विट:। किमनेन निरूपितेन। यदि पुनरुद्यानपरम्परया पद्भ्यामेव नगरीमुज्जयिनीं प्रविशाव:, तदा को दोष: स्यात्?। (ब)

शकार:। एव्वं किदे किं भोदि?। (श)

विट:। एवं कृते व्यायाम: सेवितो धुर्य्याणाञ्च परिश्रम: परिहृतो भवति। (ष)

शकार:। एव्वं भोदु। थावलआ! चेड़ा! गेह्न पव-

(श) एवं कृते किं भवति?।

(ब) विट इति। अनेन प्रवहणाध्येन जनेन, निरूपितेन राक्षसतया चौरतया वा निश्चितेन किं फलमिति शेष, किमपि नेत्यर्थ:। उद्यानपरम्परया उपवनश्रेण्या पद्भ्यामपि यानं विनापि गमनं सिध्यतीति दर्शितम्।

(ष) विट इति। व्यायाम: स्वास्थ्यसम्पादक: कायिकपरिश्रम:, सेवित: अनुष्ठित:। धुर्य्याणां प्रवहणवाहकानां गवाम्। प्रवहणवाहका गाव एकवारमागता: पुनर्गमने तेषां महान् परिश्रम: सम्भाव्यते, स च न स्यात् स्वास्थ्यकरो व्यायामश्च स्यादिति उभयथापि पद्भ्यामेव गमनमावयोरुचितमिति भाव:।

(ল) শকার। পণ্ডিত! পণ্ডিত! যদি রাক্ষসীই বহিয়া থাকে, তবে আপনাকে চুরি করিল না কেন? আর যদি চোর বহিয়া থাকে, তবে ভক্ষণ করিল না কেন?।

(ব) বিট। উহার নিরূপণ করিয়া কি হইবে?। যদি এই বনশ্রেণীর ভিতর দিয়া পায়ে হাটিয়া, উজ্জয়িনীনগরে প্রবেশ করি, তা হইলে কি দোষ হয়?।

(শ) শকার। এরূপ করিলে কি ফল হইবে?।

(ষ) বিট। এরূপ করিলে ব্যায়াম করা হইবে এবং গরুগুলির পরিশ্রম পরিত্যক্ত হইবে।

हणं। अधवा चिट्ठ चिट्ठ, देवदाणं बम्हणाणं च अग्गदो चलणेग गच्छामि। णहि णहि, पवहणं अहिलुहिअ गच्छामि। जेण दूलदो मं पेक्खिअ भणिश्शन्ति, "एशे शे लट्टिअशाले भट्टालके गच्छदि।" (स)

विटः। स्वगतम्। दुष्करं विषमौषधीकर्त्तुम्। भवतु, एवं तावत्। प्रकाशम्। काणेलीमातः! एषा वसन्तसेना भवन्तमभिसारयितुमागता। (ह)

(स) एवं भवतु। स्थावरक! चेट! नय प्रवहणम्। अथवा, तिष्ठ तिष्ठ देवतानां ब्राह्मणानाञ्चाग्रतः चरणेन गच्छामि। नहि नहि, प्रवहणमधिरुह्य गच्छामि। येन दूरतो मां प्रेक्ष्य भणिष्यन्ति—"एष स राष्ट्रियश्यालो भट्टारको गच्छति।"

(स) शकार इति। भणिष्यन्ति लोका इति शेषः। राष्ट्रियस्य राज्यपालस्य राजश्यालः, भट्टारकः प्रभूतधनस्वामी।

(ह) विट इति। विषम् औषधीकर्त्तुं दुष्करमित्यन्वयः। तथा च प्राणनाशकस्य विषस्य प्राणरक्षकौषधतया परिणमनं दुष्करम्, तथा सर्व्वदा परप्रतिकूलस्य दुर्जनस्य परानुकूलतया परिणमनं दुष्करमेवेति भावः। अतएवात्र अप्रस्तुतप्रशंसालङ्कारः। अभिसारयितुम् अभिसारप्रकारेण रमयितुम्।

(স) শকার। এইরূপই হউক। স্থাবরক! ভৃত্য! গাড়ী নিয়া যা অথবা দাঁড়া দাঁড়া, দেবতা ও ব্রাহ্মণগণের সম্মুখ দিয়া পায়ে হাঁটিয়াই যাই। না না, গাড়ীতে উঠিয়া যাইব। যে হেতু, দূর হইতে আমাকে দেখিয়া লোকে বলিবে—"এই সেই রাজার শালা প্রভু যাইতেছেন।"

(হ) বিট। (স্বগত) বিষকে ঔষধ করা দুষ্কর। হউক, এইরূপ বলি। (প্রকাশ্যে) কাণেলীর পুত্র! এই বসন্তসেনা তোমার অভিসারে আসিয়াছে।

वसन्त । सन्तं पावं सन्तं पावं । (च)

शकारः। सहर्षम्। भावे! भावे! मं पवलपुलिशं मणुश्शं वाशुदेवकं ?। (क)

विटः। अथकिम्।

शकारः। तेण हि अपुव्वा शिलि शमाशादिदा, तश्शिं काले मए लोशाविदा, शम्पदं पादेशुं पडिअ पशादेमि। (ख)

विटः। साधु अभिहितम्।

---

(च) शान्तं पापं शान्तं पापम्।

(क) भाव! भाव! मां प्रवरपुरुषं मनुष्यं वासुदेवकम्?।

(ख) तेन हि अपूर्वा श्रीः समासादिता, तस्मिन् काले मया रोषिता, साम्प्रतं पादयोः पतित्वा प्रसादयामि।

---

(च) वसन्त इति। शान्तं पापम् "भवन्तमभिसारयितुमागता" इत्यनिर्द्देश्यमित्यर्थः, "शान्तं पापमनिर्द्देश्ये" इत्यभिधानात्। तस्यातिशयने द्विरुक्तिः।

(क) शकार इति। अत्र काकुस्वरेण प्रश्नो व्यज्यते।

(ख) शकार इति। श्रीः श्रीरूपा रमणी। रोषिता रोषं प्रापिता।

---

(চ) বসন্তসেনা। ওরূপ বলিবেন না, ওরূপ বলিবেন না।

(ক) শকার। (হর্ষের সহিত) পণ্ডিত! পণ্ডিত! প্রধানপুরুষ, মনুষ্য ও বাসুদেবস্বরূপ আমার (অভিসারে আসিয়াছে?)।

বিট। হাঁ।

(খ) শকার। তাহা হইলে, আমি অপূর্ব্ব লক্ষ্মীকে লাভ করিয়াছি। সে সময়ে আমি উহাকে কুপিত করিয়াছিলাম, এখন পায়ে পড়িয়া প্রসন্ন করিব।

বিট। ভাল বলিয়াছ।

वसन्त। सक्रोधम्। अवेहि, अणज्जं मन्तेसि। (घ) इति पादेन ताडयति।

शकारः। सक्रोधम्।

जे चुम्बिदे अम्बिकमादुकेहिं
गदे ण देवाणं वि जे पणामं।
शे पाडिदे पादतलेण मुण्डे
वणे शिआलेण जधा मुदङ्गे ॥१९॥

(घ) अपेहि, अनार्य्यं मन्त्रयसि।

यच्चुम्बितमम्बिकामातृकाभिर्गतं न देवानामपि यत् प्रणामम्।
तत् पातितं पादतलेन मुण्डं वने शृगालेन यथा मृताङ्गम् ॥१९॥

(घ) वसन्त इति। अपेहि दूरं गच्छ। अनार्य्यम् असज्जनोचितम्।

यदिति। यत् मम मुण्डम्, अम्बिकामातृकाभिः मातृभि। अत्र पीनस्तनम्। स्नेहेन चुम्बितम्, यच्च देवानामपि सकाशे, प्रणामम् अवनतीभावम्, न गतं न प्राप्तम् अपमानभयादिति भावः; शृगालेन वने यथा मृतस्य अङ्गं अवयवम्, पादतलेन भक्षणाय पातितं जायते, तथा त्वयापि तत् मदीयं मुण्डं मस्तकम्, पादतलेन अपमानाय पातितं जातम्। महदन्याय्यमिदमिति भावः।

अत्रोपजातिवृत्तम्: षष्ठवर्णस्य लघुत्वावश्यकत्वेऽपि द्वितीयपादे तदभावात् हतवृत्तता-दोषः। न च शकारवचनत्वादेव पुनरुक्तत्वादिदोषवत् हतवृत्ततादोषस्यापि स्वीकार

আমি এই তোমার পায়ে পড়িলাম এবং তোমার নিকট হাতযোড় করিলাম, আমি কামার্ত্ত হইয়া তোমার যে সেই অপকার করিয়াছিলাম, এখন তাহার ক্ষমা করাইতেছি। হে উত্তমাঙ্গি! আমি তোমার দাস হইলাম ॥১৮॥

(ঘ) বসন্তসেনা। (ক্রোধের সহিত) দূর হও, অসভ্যের কথা বলিতেছ। (এইরূপ বলিয়া চরণদ্বারা তাড়ন করিল)

अले थावलआ ! चेड़ा ! कहिं तुए एशा शमाशादिदा ? । (ङ)

चेटः । भट्टके ! गाम-शअलएहिं लुद्धे लाअमग्गे, तदो चालुदत्तश्श लुक्खवाड़िआए पवहणं थाविअ, तहिं ओदलिअ, जाव चक्कपलिवट्टिअं कलेमि, ताव एशा पवहणविपज्जाशेण इह आलूढ़े त्ति तक्केमि । (च)

शकारः । कधं पवहण-विपज्जाशेण आगदा, ण मं अहि-

(ङ) अरे स्थावरक ! चेट ! कस्मिन् त्वया एषा समासादिता ।

(च) भट्टक ! ग्रामशकटैः रुद्धे राजमार्गे तदा चारुदत्तस्य वृक्षवाटिकायां प्रवहणं स्थापयित्वा, तस्मिन्नवतीर्य, यावत् चक्रपरिवृत्तिं करोमि, तावदेषा प्रवहणविपर्यासेन इह आरूढे ति तर्कयामि ।

र्वेति वाच्यम्, "अपार्थमक्रम व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धञ्च यश्च।त्वचन विदु ॥" इत्यत्र अपार्थत्वादिदोषे ग्रहणादन्यस्य वाचकत्वात् तेन 'दैवस्स वि' इति पाठेनाप्यी परिहार्यः ॥१८॥

শকার । (ক্রোধের সহিত) মাতৃগণ যাহা চুম্বন করিয়াছেন এবং যাহা দেবতার নিকটেও অবনতভাবে প্রাপ্ত হয় নাই, বনে শিয়াল যেমন মৃতপ্রাণীর অঙ্গ পাদতলে পাতিত করে, তেমন তুইও আমার সেই মুণ্ড পাদতলে পাতিত করিলি ॥১৯॥

(ঙ) ওরে স্থাবরক ! ভৃত্য ! তুই কোন্ জায়গায় এটাকে পাইলি ? ।

(চ) ভৃত্য । প্রভু ! গ্রাম্য গাড়ীতে রাজপথ একেবারে রুদ্ধ হইয়া গিয়াছিল, তখন আমি চারুদত্তের বৃক্ষবাটিকার নিকটে এই গাড়ী রাখিয়া, সেখানে নামিয়া, যাবৎ চক্রপরিবর্তন করি, তাহার মধ্যে ইনি, গাড়ীর বৈপরীত্যে এই গাড়ীতে উঠিয়াছেন বলিয়া মনে করি ।

शालिदुं। ता ओदल ओदल मम केलकादो पवहणादो। तुमं तं दलिद्दशत्थवाह-पुत्तकं अहिशालेशि, मम केलकाइं गोणाइं वाहेशि ; ता ओदल ओदल गब्भदाशि! ओदल ओदल। (छ)

वसन्त। तं अज्जचारुदत्तं अहिसारेसि त्ति जं सच्चं अलङ्किदम्हि इमिणा वअणेण। सम्पदं जं भोदु, तं भोदु। (ज)

शकारः। एदेहि दे दशणहुप्पलमण्डलेहिं
हत्थेहि चाडु-शद-ताडण-लम्पडेहिं।
कड्ढामि दे वलतणुं णिअ-जाणकादो
केशेशु वालि-दइअं वि जहा जडाऊ ॥२०॥

(छ) कथं प्रवहणविपर्यासेनागता, न मामभिसारयितुम्। तदवतर अवतर मदीयात् प्रवहणात्। त्वं तं दरिद्र सार्थवाह-पुत्रकमभिसारयसि, मदीयौ गावौ वाहयसि ; तदवतर अवतर गर्भदासि। अवतर अवतर।

(ज) तमार्य्यचारुदत्तमभिसारयसि इति यत् सत्यम् अलङ्कृतास्मि अनेन वचनेन। साम्प्रतं यद्भवतु, तद्भवतु।

(ज) वचन इति। अलङ्कृतास्मि वेश्यात्वेऽपि गुणवाद्दिलसूचनादिति भाव.।

(छ) শকার। ও! গাড়ীর বৈপরীত্যে আসিয়াছে, আমার অভিসারে নহে। তা, নাম্ নাম্ আমার গাড়ী হইতে। তুই সেই দরিদ্র বণিক্ পুত্রের অভিসরণ করিবি, আর আমার গরুর ঘাড়ে চড়িবি। তা, নাম্ নাম্ গর্ভদাসি। নাম্ নাম্।

(জ) বসন্তসেনা। 'সেই আর্য্য চারুদত্তের অভিসরণ করিবি' এই কথাতে আমি সত্যই অলঙ্কৃত হইয়াছি। এখন যা হউক, তা হউক।

विटः । अग्राह्या मूर्द्धजेष्वेताः स्त्रियो गुणसमन्विताः ।
न लताः पल्लवच्छेदमर्हन्त्युपवनोद्भवाः ॥२१॥

एताभ्यां ते दशनखोत्पलमण्डलाभ्यां हस्ताभ्यां चाटुशततांडनलम्पटाभ्याम् ।
कर्षामि ते वरतनु निजयानकात् केशेषु वालिदयितामिव यथा जटायुः ॥२०॥

---

एताभ्यामिति । दश नखानि उत्पलमण्डलानीव पद्मसमूहा इव ययोस्ताभ्याम्, तथा चाटुशतानीव प्रियवाक्यसमूहा इव ताडनानि प्रहारास्तेषु लम्पटाभ्याम् अभिलाषिभ्याम् एताभ्यां हस्ताभ्याम्, यथा जटायुः वालिदयिता ताराम्, केशेषु गृहीत्वा ते तव वरतनुं सुन्दरशरीरम्, निजयानकात् स्वकीयप्रवहणात् कर्षामि आकृष्य पातयामि ।

अत्र लुप्तोपमाद्योतोपमाः सर्व्वा एव हताः, सादृश्याभावात् वास्तविकत्वाभावाच्च । 'इव यथा' इति च पुनरुक्तम् । वसन्ततिलका वृत्तम् ॥२०॥

अग्राह्या इति । गुणसमन्विताः दयादिगुणविशिष्टाः एताः सुन्दर्यः स्त्रियः, मूर्द्धजेषु केशेषु अग्राह्या न ग्रहणयोग्या ईदृशीनां स्त्रीणां केशाकर्षणं न कार्य्यमित्यर्थः, नालिन्या मानहरणस्य अमङ्गलजनकत्वादिति भावः । तथा च उपवनोद्भवा लताः, पल्लवच्छेदं नार्हन्ति ; सुन्दरपदार्थस्य सौन्दर्य्यापहरणे विधिनियमव्यत्ययकरणापराधापातादित्याशयः ।

अत्र दृष्टान्तोऽलङ्कारः । तथा अग्राह्या इत्यत्र प्रधानस्य नञर्थस्य समासे गुणीभावात् विधेयाविमर्शदोषः, "अमुक्ता भवता नाथ ! मुहूर्त्तमपि सा पुरा" इति दर्पणोदाहरणवत् ; न ग्राह्या इति पाठे तु तद्दोषाभावः ॥२१॥

---

শকার। পদ্মসমূহের ন্যায় যাহার দশটী নখ রহিয়াছে এবং যাহা বহুতর প্রিয়বাক্য তুল্য প্রহারের অভিলাষী, সেই হস্তযুগল দ্বারা, জটায়ু যেমন বালির স্ত্রীকে কেশাকর্ষণ করিয়া পাতিত করিয়াছিল, আমিও সেইরূপ কেশাকর্ষণ করিয়া তোমার সুন্দর শরীরটীকে নিজের গাড়ী হইতে নিপাতিত করিব ॥২০॥

বিট। গুণান্বিত এই সকল স্ত্রীলোককে কেশে আকর্ষণ করিতে নাই ; উপবনোৎপন্ন লতা, পল্লবচ্ছেদনের যোগ্য নহে ॥২১॥

तदुत्तिष्ठ त्वम्। अहमेनामवतारयामि। वसन्तसेने! अवतीर्य्यताम्।

वसन्तसेना अवतीर्य्य एकान्ते स्थिता।

शकारः। स्वगतम्। जे शे मम वअणावमाणेण तदा लोशग्गी शन्धुक्खिदे, अज्ज एदाए पादप्पहालेण अणेण पज्जलिदे, तं शम्पदं मालेमि णं। भोदु, एव्वं दाव। प्रकाशम्। भावे! भावे! (भ)

जदिच्छशि लम्बदशा-विशालं
पावालअं शुत्तशदेहि जुत्तम्।
मंशं च खादुं तह तुट्टि कादुं
चुहु चुहु चुक्कु, चुहु चुहु त्ति ॥२२॥

(भ) य स मम वचनेनापमानेन तदा रोषाग्नि सन्धुक्षित, अद्य एतया पादप्रहारेणानेन प्रज्वलित, तत् साम्प्रतं मारयाम्येनाम्। भवतु, एवं तावत्। भाव! भाव!

यदीच्छसि लम्बदशाविशाले प्रावारके सूत्रशतैर्युक्तम्।
मांसञ्च खादितुं तथा तुष्टिञ्च कर्त्तुं, चुहु चुहु चुक्कु, चुहु चुहु इति ॥२२॥

(भ) शकार इति। वचनेन “पवेहि, पणञ्च मन्दोऽसि” इति वाक्येन योऽपमानस्तेन। सन्धुक्षित उद्दीपित उत्पादित इत्यर्थः। एतया वसन्तसेनया प्रज्वलित ज्वालावान् कृत।

অতএব তুমি উঠ। আমি ইহাকে নামাইব। বসন্তসেনা! নাম।

বসন্তসেনা নামিয়া একপ্রান্তে থাকিল।

(শ) শকার। (স্বগত) তখন বাক্য দ্বারা অপমানে আমার সেই যে ক্রোধাগ্নি উৎপন্ন হইয়াছিল, আজ আবার এই মাগী এই পাদপ্রহার দ্বারা তাহাকে জ্বালাইয়া দিয়াছে, সুতরাং এখন ইহাকে মারিয়া ফেলিব। হউক, এইরূপ বলি। (প্রকাশ্যে) পণ্ডিত! পণ্ডিত!

विटः। ततः किम्?। (ञ)

शकारः। मम पिअं कलेहि। (ट)

विटः। वाढं करोमि, वर्जयित्वा त्वकार्य्यम्। (ठ)

शकारः। भावे! अकज्जाह गन्धे वि णत्थि, लक्खशी कावि णत्थि। (ड)

(ट) मम प्रियं कुरु।

(ड) भाव! अकार्य्यस्य गन्धोऽपि नास्ति, राक्षसी कापि नास्ति।

यदीति। यदि, लम्बाभिर्दीर्घाभिः दशाभिः प्रान्तसूत्रैर्विशालं लम्बमानीभूतम्, सूत्रशतैर्युक्तं प्रावारकम् एकमुत्तरीयवस्त्रम्, इच्छसि पारितोषिकत्वेन लब्धुमिति शेषः, मांसञ्च खादितुमिच्छसि, तथा मम तुष्टिं सम्पादयितुमिच्छसि। 'तदेहि मारयेहि वसन्तसेनां' इति वक्तुमिच्छन्नपि भयसङ्कोचवशादपारयन् यथाकथञ्चिदिच्छार्थितशब्दे- श्चतुर्थपादं पूरयन्नाह चुक्क इति। एतएव चुक इत्यादयः शब्दा अपार्थाः। मांसभोजन- कालीनास्यकशब्दानुकरणभूता इति केचित्। उपजातिर्वृत्तम् ॥२२॥

(ञ) विट इति। ततस्तदा, किं मया कर्त्तव्यमिति शेषः।

(ठ) विट इति। वाढमवश्यम्। अकार्य्यं गर्हितकार्य्यम्।

(ड) शकार इति। गन्धो लेशः। कापि राक्षसी नास्ति मम प्रत्यक्षम् इति शेषः। अतश्च "लक्खशी पडिवशदि" इति यत् प्रागुक्तं तदुपहासपरम्, तेन निःशङ्कमेनां मारयितुं प्रवर्त्तितुमर्हसीति भावः।

লম্বমান দশা দ্বারা দীর্ঘ এবং বহুতর সূত্রযুক্ত একখানা উত্তরীয় বস্ত্র যদি লাভ করিতে ইচ্ছা করেন, আর মাংস খাইতে এবং আমার সন্তোষ জন্মাইতে যদি ইচ্ছা করেন, তবে চুক্ চুক্ চুক্ চুক্ চুক্ কি ।২২।

(ঞ) বিট। তাহা হইলে কি?।

(ট) শকার। আমার প্রিয়কার্য্য করুন।

(ঠ) বিট। নিশ্চয়ই করিব, কিন্তু অকার্য্য বর্জন করিয়া।

विटः। उच्यतां तर्हि।

शकारः। मालेहि वशन्तशेणिअं। (ढ)

विटः। कर्णौ पिधाय।

बालां स्त्रियञ्च नगरस्य विभूषणञ्च
वेश्यामवेश-सदृश-प्रणयोपचाराम्।
एनामनागसमहं यदि मारयामि
केनोडुपेन परलोकनदीं तरिष्ये ॥२३॥

(ढ) मारय वसन्तसेनाम्।

बालामिति। अहं यदि, बालामल्पवयस्काम्। तेन सम्भावितदीर्घजीवनाया वधः अङ्कुरच्छेद इव गुरुतरदुःखकर इति भावः। स्त्रियञ्च। तथा च "अवध्याञ्च स्त्रियं प्राहुस्तिर्यग्योनिगतेष्वपि" इति विशेषनिषेधेन स्त्रीहत्या गुरुतरपापहेतुरित्याशयः। नगरस्य विभूषणञ्च अलङ्कारस्वरूपाञ्च एतेनास्या वधे सम्प्रति नगरस्यापि महती हानिरित्यभिप्रायः। वेश्याम्। तेनैतद्वधे कश्चित् पुरुषकारोऽपि नास्तीति भावः। अवेशसदृशौ वेश्यालयायोग्यौ प्रणयोपचारौ अनुरक्ते प्रगाढप्रणयोऽनुरागः उपचारश्च सर्वत्र सद्व्यवहारो यस्यास्तां वेश्याजातीयामपि अवेश्यास्वभावामित्यर्थः। अनेन अस्या वधो दुर्लभरत्नध्वंस इव जगत एव क्षतिकर इत्याशयः। अनागसम् अनपराधाम्। तेन अस्या हत्यायां दस्योरपि अनुशोचनं जायेत इत्यभिप्रायः। एनां वसन्तसेनाम्, मारयामि हन्मि, तदा केन उडुपेन प्लवेन, परलोकनदीं लोकान्तरगमने अवश्यतरणीयां वैतरणीं नाम नदीम्, तरिष्ये नापि केनेत्यर्थः। तथा च पापाभावे पुण्यमेव वैतरणीतारकम्, एतच्च ईदृशपापमस्ते अनुप्रतिबन्धकतया मदपि पुण्यं न मां तारयितुं शक्ष्यतीति भावः।

(ড) শকার। পণ্ডিত! অন্যায়ের গন্ধও নাই, কোন রাক্ষসীও নাই।

বিট। তা হইলে বল।

(ঢ) শকার। বসন্তসেনাকে মারিয়া ফেলুন।

शकारः। अहं ते भेड़कं दइश्शं। अण्णं च विवित्ते उज्जाणे इध मालन्तं को तुमं पेक्खिश्शदि। (ग)

विटः। पश्यन्ति मां दश दिशो, वनदेवताश्च,
चन्द्रश्च, दीप्तकिरणश्च दिवाकरोऽयम्।
धर्म्मानिलौ च गगनञ्च तथान्तरात्मा
भूमिस्तथा सुकृत-दुष्कृत-साक्षिभूता ॥२४॥

(ग) अहं ते उडुपं दास्यामि। अन्यच्च विविक्ते उद्याने इह मारयन्तं कस्त्वां प्रेक्षिष्यते?।

अनेकप्रकारैश्च विशेषणानामभिप्रायविशेषैः प्रयुक्तत्वात् परिकरोऽलङ्कारः "नगरस्य विभूषणञ्च" इति निरङ्गकेवलरूपकेण सङ्कीर्य्यते।

वसन्ततिलका वृत्तम् ॥२३॥

[ग] शकार इति। उडुपं परलोकनदीतरणाय प्लवम्। एवञ्च निःशङ्कमेनां मारयितुमर्हसीति भावः। विविक्ते विजने। "विविक्तौ पूतविजनौ" इत्यमरः।

पश्यन्तीति। सुकृतदुष्कृतयोः साक्षिभूता द्रष्टृरूपा। इदञ्च लिङ्गवचनव्यत्ययेन सर्व्वैरेव सम्बध्यते। दश दिशः, वनदेवताश्च, चन्द्रश्च। दिवसतया अस्माभिरदृश्यमानोऽपि चन्द्र उपरिस्थराशिचक्रवर्त्तित्वात् सर्व्वं पश्यत्येवेति भावः। दीप्ताः किरणा यस्य सः। एतेन दिवसे किरणानां प्राखर्य्यं तथा सर्व्वैरेवानुभूयमान इति व्यज्यते। अयं दृश्यमानो दिवाकरः सूर्य्यश्च, धर्म्मः, अनिलो वायुश्च, तथा अन्तरात्मा कार्य्यकारकभाव-

বিট। (কর্ণযুগল আচ্ছাদন করিয়া) অল্পবয়স্কা, স্ত্রীজাতি, নগরের অলঙ্কারস্বরূপা, বেশ্যা, বেশ্যালয়ের অনুপযুক্তা, প্রণয় ও ব্যবহারশালিনী এবং অপরাধবিহীন এই বসন্তসেনাকে যদি আমি হত্যা করি, তবে কোন্ ভেলাদ্বারা আমি পরলোক-নদী উত্তীর্ণ হইব ? ॥২৩॥

(গ) শকার। আমি আপনাকে ভেলা দিব। আরও, এই নির্জন উদ্যানে মারিলে আপনাকে কে দেখিবে ?।

शकार । तेण हि पडन्तोवालिद कदुअ मालेहि । (त)

विट । मूर्ख ! अपध्वस्तोऽसि । (थ)

शकार । अधम्मभीलू एशे वुड्ढकोले । भोदु, थावलअं चेडं अणुणेमि । पुत्तका ! थावलका ! चेडा ! शोवण्णखुडुआइं दइश्शं । (ट)

(त) तेन हि पटान्तापवारितां कृत्वा मारय ।

... व जीवात्मा च तथा भूमिः आधारभूता पृथिवी च, मां पश्यन्ति । सुतरां मया प्रगृह्यमाणां वसन्तसेनायां हन्यमानां पश्यन्त्येव, तत्र च मनुष्याभावमात्रेण विजनतया किं कल्पितमिति भावः ।

अत्र परस्परैकया क्रियया दिवादीनामनेकेषामभिसम्बन्धात् दीपकमलङ्कारः । शुद्धार्थं चाक्षिकतत्प्रसूता स्मृतिरपि यथा—

चेटः। अहं पि पलिहिश्शं। (ध)

शकारः। शोवण्णं दे पीढके (१) कालइश्शं। (न)

चेटः। अहं उवविशिश्शं। (प)

शकारः। शव्वं दे उच्छिट्टं (२) दइश्शं। (फ)

चेटः। अहं पि खाइश्शं। (ब)

शकारः। शव्वचेडाणं महत्तलकं कलइश्शं। (भ)

---

(द) अधर्मभीरुरेष वृद्धकोलः। भवतु, स्थावरकं चेटमनुनयामि। पुत्रक! स्थावरक। चेट! सुवर्णकटकानि दास्यामि।

(ध) अहमपि परिधास्यामि। (न) सौवर्णं ते पीठकं कारयिष्यामि।

(प) अहमप्युपवेक्ष्यामि। (फ) सर्वं ते उच्छिष्टं दास्यामि।

(ब) अहमपि खादिष्यामि। (भ) सर्वचेटानां महत्तरकं करिष्यामि।

---

शकारतया च विटं प्रति उक्तिरियम्। "वराह शूकरो घृष्टि कोल पोत्री" इत्यमरः। सुवर्णकटकानि स्वर्णनिर्मितवलयानि।

(न) शकार इति। पीठकमासनम्।

(फ) शकार इति। उच्छिष्टं भोजनावशिष्टम्। आत्मनो भोजनीयान्नमुत्तमत्वात्तदवशिष्टान्नमप्युत्तममिति भावः।

---

(দ) শকার। এই বুড়ো শূকরটা অধর্মভীরু। হউক, ভৃত্য স্থাবরকের অনুনয় করি। পুত্র! স্থাবরক। ভৃত্য! তোকে সোনার বালা দিব।

(ধ) ভৃত্য। আমিও পরিব।

(ন) শকার। তোর জন্য সোনার পীড়ি তৈয়ার করাইব।

(প) ভৃত্য। আমি বসিব।

(ফ) শকার। ভোজনের অবশিষ্ট সমস্ত তোকে দিব।

(ব) ভৃত্য। আমিও খাইব।

---

(১) পীঠকম্। (২) উচ্ছিষ্টম্।

चेटः। भट्टके! हुविश्शं। (म)

शकारः। ता मखेहि मम वअणं। (य)

चेटः। भट्टके! शव्वं कलेमि, वज्जिअ अकज्जं। (र)

शकारः। अकज्जाह गन्धं वि णत्थि। (ल)

चेटः। भणादु भट्टके।' (व)

शकारः। एदं वशन्तशेणिअं मालेहि। (श)

चेटः। पशीददु भट्टके। इअं मए अणज्जेण अज्जा पवहणपलिवत्तणेण आणीदा। (ष)

(म) भट्टक! भविष्यामि। (य) तल्लक्षय मम वचनम्।

(र) भट्टक! सर्वं करोमि, वर्जयित्वा अकार्यम्।

(ल) अकार्यस्य गन्धोऽपि नास्ति। (व) भणतु भट्टकः।

(श) एतां वसन्तसेनां मारय।

(ष) प्रसीदतु भट्टकः। इयं मया अनार्येण आर्या प्रवहणपरिवर्तनेनानीता।

---

(भ) शकार इति। महत्तरके प्रधानतमभृत्यत्वमेष्यसि, दुर्गमते नर·तमयोरथाभिदाम्।

(य) शकार इति। मद्वचनं स्वीकुरु मम वचनानुसारेण कार्यं कुर्वित्यर्थः।

---

(ভ) শকার। সকল ভৃত্যের মধ্যে তোকে প্রধান করিব।

(ম) ভৃত্য। প্রভু! আমিও হইব।

(য) শকার। তবে আমার আদেশ স্বীকার কর্।

(র) ভৃত্য। প্রভু! সকলই করিব, কিন্তু অকার্য্য বর্জ্জন করিয়া।

(ল) শকার। অকার্য্যের গন্ধও নাই।

(ব) ভৃত্য। প্রভু! বলুন।

(শ) শকার। এই বসন্তসেনাকে মারিয়া ফেল্।

शकारः । अले चेड़ा ! तवावि ण पहवामि ? । (स)

चेटः । पहवदि भट्टके शलीलाह, ण चालित्ताह । ता पशीददु पशीददु भट्टके । भाआमि क्खु अहं । (ह)

शकारः । तुमं मम चेड़े भविअ काश भाआशि ? । (च)

चेटः । भट्टके ! पललोअश्श । (क)

---

(स) अरे चेट । तवापि न प्रभवामि ? ।

(ह) प्रभवति भट्टक शरीरस्य, न चारित्रस्य । तत् प्रसीदतु प्रसीदतु भट्टकः । बिभेमि खलु अहम् ।

(च) त्वं मम चेटो भूत्वा कस्मात् बिभेषि ? । (क) भट्टक ! परलोकात् ।

---

(घ) चेट इति । अनार्य्येण अधमेन । इय वसन्तसेना । स्वयमेवागतायाः स्वयमेव हत्याया व्याघातः स्यादिति कथमपि नाहमस्या हत्यां विधातुमर्हामीति भावः ।

(स) शकार इति । अपि तु सर्व्वदासत्वात् सर्व्वथैव तवापि प्रभवामीत्याशयः ।

(ह) चेट इति । शरीरस्य प्रभवति, तन्मात्रेणैव च व्यापारस्य प्रयोजकत्वात्, किन्तु चारित्रस्य स्वभावस्य न प्रभवति, अमूर्त्तत्वेन कस्याप्यनधीनत्वात् सत्पथचालितत्वादित्यभिप्रायः ।

(च) शकार इति । अहं हि तव स्वामी ; सुतरां तस्मिन् ममाधिपत्ये सति न मदिच्छया प्रचालितस्य जनस्य कस्यापि भयासम्भव एवेति भावः ।

---

(ঘ) ভৃত্য। প্রভু! প্রসন্ন হউন। আমি অসজ্জন, তাই এই আর্য্যাকে গাড়ীর বৈপরীত্যে আনিয়াছি।

(স) শকার। ওরে ভৃত্য! তোর উপরেও আমার প্রভুত্ব নাই?।

(হ) ভৃত্য। প্রভু! আপনি আমার শরীরের প্রভু বটেন, কিন্তু চরিত্রের নহে। তা প্রভু প্রসন্ন হউন, প্রসন্ন হউন। আমি ভয় করিতেছি।

(চ) শকার। তুই আমার ভৃত্য হইয়া কাহার ভয় করিতেছিস্?।

शकारः। के शे पललोए ?। (ख)

चेटः। भट्टके! शुकिद-दुक्किदश्श पलिणामे। (ग)

शकारः। केलिशे शुकिदश्श पलिणामे ?। (घ)

चेटः। जादिशे भट्टके बहु-शोवण्ण-मण्डिदे। (ङ)

शकारः। दुक्किदश्श केलिशे ?। (च)

चेटः। जादिशे हग्गे पलपिण्डभक्खके भूदे। ता अकज्जं ण कलइश्शं। (छ)

(ख) कः स परलोकः ?। (ग) भट्टक! सुकृत-दुष्कृतस्य परिणामः ?।

(घ) कीदृशः सुकृतस्य परिणामः। (ङ) यादृशो भट्टकः बहुसुवर्णमण्डितः।

(च) दुष्कृतस्य कीदृशः ?।

(छ) यादृशोऽहं परपिण्डभक्षको भूतः। तदकार्य्यं न करिष्यामि।

---

(ग) चेट इति। सुकृतञ्च दुष्कृतञ्चेति सुकृतदुष्कृतम्। शाकपार्थिवादित्वान्मध्यपदलोपी समासः। पुण्यपापयोः फलभूत इत्यर्थः।

(ङ) चेट इति। एतेन सुखमेव सुकृतस्य परिणाम इति ध्वनितम्।

(छ) चेट इति। परपिण्डभक्षकः परान्नभोजी। अनेनापि दुःखमेव दुष्कृतस्य परिणाम इति सूचितम्।

---

(ক) ভৃত্য। প্রভু! পরলোকের।

(খ) শকার। সে পরলোকটা কি ?।

(গ) ভৃত্য। প্রভু! পুণ্য-পাপের পরিণাম।

(ঘ) শকার। পুণ্যের পরিণাম কি রকম ?।

(ঙ) ভৃত্য। বহু-স্বর্ণভূষিত যেমন প্রভু।

(চ) শকার। পাপের পরিণাম কি রকম ?।

(ছ) ভৃত্য। আমি যেমন পরপিণ্ডোপজীবী হইয়াছি। অতএব আমি অকার্য্য করিব না।

शकारः। अले! ण मालिश्शशि?। इति बहुविधं ताडयति। (ज)

चेटः। पिट्टदु भट्टके, मालेदु भट्टके, अकज्जं ण कलइश्शं। (झ)

जेण म्हि गब्भदाशे विणिम्मिदे भाअधेअदोशेहिं।
अहिअं च ण कीणिश्शं तेण अकज्जं पलिहलामि॥२५॥

वसन्त। भाव! शलणागदम्हि। (ञ)

(ज) अरे! न मारयिष्यसि?।

(झ) पीडयतु भट्टक, मारयतु भट्टक, अकार्य्यं न करिष्यामि।

येनास्मि गर्भदास विनिर्मितो भागधेयदोषैः।
अधिकञ्च न क्रेष्यामि तेनाकार्य्यं परिहरामि॥२५॥

(ञ) भाव! शरणागतास्मि।

[झ] चेट इति। पीडयतु प्रहरतु मारयतु निहन्तु।

येनेति। येन हेतुना, भागधेयस्य भाग्यस्य पूर्वजन्मकृतदुष्कृतस्य दोषैः, गर्भदास इह जन्मनि मातुर्गर्भतो निर्गमात् प्रभृत्येव तव दासः, विनिर्मितः कृतः अस्मि, तेन हेतुना, अधिकञ्च तत्पूर्वजन्मोत्थपापातिरिक्तं पापञ्च न क्रेष्यामि वसन्तसेनाहत्यया अर्जयिष्यामि, तथा सति नरकपातोऽपि भवेदिति भावः। अतएव अकार्य्यं वसन्तसेनाहत्यारूपमकर्त्तव्यं विषयम्, परिहरामि परित्यजामि। आर्य्या जातिः॥२५॥

(জ) শকার। ওরে। তুই বসন্তসেনাকে মারিবি না?। (এই বলিয়া নানারকম প্রহার করিতে লাগিল)

(ঝ) ভৃত্য। প্রভু পীড়ন করুন, কিংবা প্রভু মারিয়া ফেলুন, তথাপি অকার্য্য করিব না।

যে হেতু ভাগ্যের দোষ, আমাকে গর্ভদাস করিয়াছে, সেই হেতু আমি আর অধিক পাপ কিনিব না, সেই জন্যই অকার্য্য পরিত্যাগ করিতেছি॥২৫॥

श्रियं त्वदीयां यदयं न भुङ्क्ते
यदेतदाज्ञां न भवान् करोति ॥२७॥

शकारः। स्वगतम्। अधम्मभीलुए वुड्ढखोड़े, पल्लोअभीलू-एशे गब्भदाशे। हग्गे लट्ठिअशाले कश्श भाआमि वल-पुलिश-मणुश्शे ?। प्रकाशम्। अले गब्भदाशे! चेड़े! गच्छ तुमं, ओवलके पविशिअ वीशन्ते एअन्ते चिट्ठ। (ट)

रन्ध्रेति। हताशा दैवम् विषमा विपरीतो विपरीतकार्य्यकारीत्यर्थः रन्ध्रानुसारी छिद्रान्वेषी यत्किञ्चित् क्षुद्र छिद्रमात्र प्राप्य कार्य्यकारीत्यर्थः। यद्यस्मात् अस्य स्थावरकस्य दासः दासत्वम् तव च शकारस्य ईश्वरत्वम् एतत् प्रभुत्वम्, तथा यत् अयं स्थावरकः धार्म्मिक इति भावः त्वदीयां श्रियं सुखसम्पदम् न भुङ्क्ते नानुभवति, यच्च हेतोः भवान् शकारः, एतस्य स्थावरकस्य आज्ञां न करोति न पालयति। तथा च स्थावरको धार्म्मिकः त्वञ्च पापी, एवञ्च त्वया भुज्यमाना सुखसम्पत् स्थावरकस्यैव भोगयोग्या त्वञ्चास्य दासयोग्यः, तथाकुर्व्वत् दैवं विषममेव, तथा क्षुद्रपापेन स्थावरकं दासं कुर्व्वत् क्षुद्रपुण्येन भवन्तञ्च प्रभुं कुर्व्वत् दैवं रन्ध्रानुसार्य्येवेति भावः।

अत्र कारणाभावेऽपि स्थावरकस्य दासरूपकार्य्योत्पत्तेः किं विभावना? उत धर्म्मरूपकारणसत्त्वे ईश्वरत्वरूपतत्कार्य्याभावाद्विशेषोक्तिः। एवं शकारस्येश्वरत्वपक्षेऽपि सन्देह ऊह्यः। तेन विभावनाविशेषोक्त्योः सन्देहसङ्करोऽलङ्कारः। तथा स्थावरकस्य शकारीयश्रीभोगोपयोगिधर्म्मसत्त्वेऽपि तदभोगादिका शकारस्य च स्थावरकाज्ञाकरणोपयोगिपापसत्त्वेऽपि तदकरणात्मिका विशेषोक्तिरिति समुदाये मिथो निरपेक्षतया पुनः संसृष्टिः।

उपजातिर्वृत्तम् ॥२७॥

আরও, ছিদ্রান্বেষী দৈব, বিপরীত কার্য্য করিয়া থাকে, যে হেতু ইহার (স্থাবরকের) দাসত্ব, আর তোমার (শকারের) প্রভুত্ব, আর যে হেতু, তুমি (শকার) ইহার (স্থাবরকের) আদেশ পালন করিতেছ না ॥২৭॥

चेट: । जं भट्टके आणवेदि । वसन्तसेनामुपसृत्य । अज्जए ! एत्तिके मे विहवे । इति निष्क्रान्त । (ठ)

शकार: । परिकरं बध्नन् । चिट्ठ वशन्तशेणिए ! चिट्ठ, मालइश्शं । (ड)

(ट) अधर्मभीरुको वृद्धशृगाल, परलोकभीरुरेव गर्भदास । अहं राष्ट्रियश्याल: कस्माद्बिभेमि वर पुरुष मनुष्य ?। अरे गर्भदास ! चेट ! गच्छ त्वम्, अपवारके प्रविश्य विश्रान्त एकान्ते तिष्ठ ।

(ठ) यद्भट्टक आज्ञापयति । आर्ये ! एतावान् मे विभव ।

[ड] तिष्ठ वसन्तसेने ! तिष्ठ, मारयिष्यामि ।

---

(ट) शकार इति । वृद्ध शृगाल इवेति वृद्धशृगालो विट । भीरुत्वादेव शृगालोपमम् । अपवारके व्यवधानकारिणि निकुञ्जादौ ।

(ठ) चेट इति । एतावान् तवापकारानिवृत्तिमात्र, विभव क्षमता । इतोऽधिके साहाय्यकरणादौ तु विभवो नास्त्येव गर्भदासत्वादिति भाव ।

(ड) शकार इति । परिकर कटिवस्त्रम् । "प्रगाढगात्रिकाबन्धे पर्यङ्कपरिवारयो: । प्रयुज्यते परिकर: समूहारम्भयोरपि ॥" इति शाश्वत: ।

---

(ট) শকার। (স্বগত) এই বুড়ো শিয়ালটা (বিট) অধর্মভীরু; আবার এই গর্ভদাসটা পরলোকভীত। তা, আমি রাজার শালা প্রধান পুরুষ ও মনুষ্য হইয়া কাহার ভয় করি ?। (প্রকাশ্যে) ওরে গর্ভদাস! ভৃত্য! তুই যা, কোন আবৃত স্থানে প্রবেশ করিয়া, তাহার একদিকে বিশ্রাম করিতে থাক্।

(ঠ) ভৃত্য। প্রভু যাহা আদেশ করেন। (বসন্তসেনার নিকট যাইয়া) আর্য্যে! এই পর্য্যন্তই আমার ক্ষমতা। (এই বলিয়া চলিয়া গেল)

(ড) শকার। (কোমরের কাপড় বাঁধিতে বাঁধিতে) থাক্, বসন্তসেনা! থাক্, তোকে খুন করিব।

विटः। आः! ममाग्रतो व्यापादयिष्यसि?। इति गले गृह्णाति। (ढ)

शकारः। भूमौ पतति। भावे भट्टकं मालेदि। इति मोहं नाटयति। चेतना लब्ध्वा। (ण)

शव्वकालं मए पुट्टे मंशेण अ घिएण अ।
अज्ज कज्जे शमुप्पण्णे जादे मे वेलिए कधं ॥२८॥

विचिन्त्य। भोदु, लद्धे मए उवाए। दिण्णा वुड्ढखोड्डेण शिर-श्चालणशण्णा। ता एदं पेशिअ वशन्तशेणिअं मालइश्शं। एव्वं

(ण) भावो भट्टकं मारयति।

सर्वकालं मया पुष्टो मांसेन च घृतेन च।
अद्य कार्ये समुत्पन्ने जातो मे वैरिकः कथम् ॥२८॥

(त) भवतु लब्धो मया उपायः। दत्ता वृद्धशृगालेन शिरश्चालनसंज्ञा, तदेतां

(ढ) विट इति। व्यापादयिष्यसीति काकुः, कथमपि नेत्यर्थः। गृह्णाति दृढमिति शेषः।

(ण) शकार इति। पतति पतन् वदतीत्यर्थः। भट्टकं प्रभुम्। इदमत्यन्त-मन्याय्यमिति भावः।

सर्वेति। वैरिकः शत्रुः। स्वार्थे कप्रत्ययः ॥२८॥

(ঢ) বিট। আঃ! আমার সম্মুখেই খুন করিবে?। (এই বলিয়া দৃঢ়ভাবে গলদেশ ধারণ করিল)

(ণ) শকার। (ভূতলে পড়িল)। পণ্ডিত, প্রভুকে মারিলেন। (এই বলিয়া মূর্চ্ছা অভিনয় করিল, পরে চৈতন্য লাভ করিয়া)

আমি সমস্ত সময়ে মাংস ও ঘৃত দ্বারা আপনাকে পোষণ করিয়া আসিতেছি, কিন্তু আজ কার্য্য উপস্থিত হইলে, কেন আপনি আমার শত্রু হইলেন ॥২৮॥

दाव । प्रकाशम् । भावे ! जं तुमं मए भणिदे, तं कधं हग्गे एव्वं वड्डकेहिं गलकप्पमाणेहिं कुलेहिं जादे अकज्जं कलेमि ? । एव्वं एदं अङ्गीकलावेदुं मए भणिदं । (त)

विटः । किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥२८॥

---

पिष्य वसन्तसेनां मारयिष्यामि । एवं तावत् । भाव ! यत् त्वं मया भणितः, तत् कथमहमेव इडक्करैः गलकंप्रमाणैः कुलैर्जातोऽकार्यं करोमि ? । एवमेतदङ्गीकारयितुं मया भणितम् ।

---

(त) विचिन्त्येति । इडक्कगालेन पूर्ववत् समासात् विटेन, शिरश्चालनेन तिर्यङ्मस्तककम्पनेन सज्ञा वसन्तसेनाहत्यायाः सङ्केतः । तथा च वायुरोगवशादेव विटस्य मस्तकं तिर्यक् कम्पते ; मूर्खः शकारस्तु तदेव हत्यानुमोदनं मन्यमानः स्वगलधारणवत् गले धृत्वैव मारयेति सङ्केतो दत्त इत्यवधारयन् इदमुक्तवानिति बोध्यम् । एवं तावत् प्रवीमीति शेषः । यत् "भालदके" इति वाक्यम् । इडक्करैर्बृहद्भिः गलकंप्रमाणैः शुष्कमृगालतुल्यैः, कुलैरिति करणे तृतीया । कथं करोमि कथमपि नेत्यर्थः । एतत् वसन्तसेनाया मारणम् । अङ्गीकारयितुं त्वामिति शेषः । तथा च सत्कुलप्रसूतोऽहं मारयितुं नार्हामि, किन्तु त्वया मारणमङ्गीकारयितुमेतदुक्तवानिति भावः ।

किमिति । कुलेन जनकीभूतवंशेन, उपदिष्टेन उत्कर्षकारणतया उदाहृतेन किं फलमिति शेषः, किमपि नेत्यर्थः । तथा च अत्र उत्कर्षे, शीलं स्वभाव एव कारणम् ।

---

(ত) (চিন্তা করিয়া) হউক, আমি উপায় পাইয়াছি। এই বুড়ো শিয়ালটা, মাথা কাঁপাইয়া আমাকে সঙ্কেত জানাইয়াছে। তা, নিষ্পেষণ করিয়া, এই বসন্তসেনাকে মারিয়া ফেলিব। এইরূপ বলি। (প্রকাশ্যে) পণ্ডিত! আমি আপনাকে যে বলিয়াছিলাম, দুর্দুরের মত এইরূপ উচ্চবংশে জন্মিয়া আমি সেই অকার্য্য, কি প্রকারে করিব? আমি এই ভাবে ইহা স্বীকার করাইবার জন্যই বলিয়াছিলাম।

शकारः। भावे! एशा तव अगदो लज्जायदि, ण मं अङ्गीकलेदि। ता गच्छ, थावलअचेड़े मए पिट्टिदे गदे वि। एशे पलाइअ गच्छदि, ता तं गेण्हिअ आअच्छदु भावे। (घ)

विटः। स्वगतम्।

अस्मत्ममक्षं हि वसन्तसेना
शौण्डीर्य्यभावान्न भजेत मूर्खम्।

---

[घ] भाव! एषा तवाग्रतो लज्जते, न मामङ्गीकरोति। तद् गच्छ, स्थावरक-चेटो मया पीडितो गतोऽपि। एष पलाय्य गच्छति, तत् तं गृहीत्वा आगच्छतु भावः।

---

उत्कृष्टकुले जातोऽपि दुष्टस्वभावान्निकृष्टो भवति, निकृष्टकुले जातश्च सत्स्वभावादुत्कृष्टो भवतीति भावः। तथाहि सुतरां स्फीता अतीवबृद्धिं प्राप्ता कण्टकिद्रुमा मन्दारादयः कण्टकवन्तो द्रुमाः, सुक्षेत्रे उत्कृष्टभूमौ भवन्ति जायन्ते। तथा च यथा सुक्षेत्रे जातानामपि मन्दारादिद्रुमाणां कण्टकवत्त्वादेव निकृष्टत्वम्, तथा सत्कुले जातस्यापि तव दुःस्वभावादेव निकृष्टत्वमित्याशयः।

अत्रएवात्र अप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसा, विशेषेण सामान्य समर्थनरूपोऽर्थान्तरन्यासश्च, अनयोर्मिथो निरपेक्षतया संसृष्टिः ॥२८॥

(घ) शकार इति। अङ्गीकरोति रन्तुमिति शेषः। एष स्थावरकः पलाय्य यदि गच्छतीत्यर्थः, तदा प्रवहणेनावयोर्गमनं न सम्भवतीति भावः।

---

বিট। বংশের উল্লেখ করিয়া কি হইবে? উৎকর্ষের প্রতি স্বভাবই কারণ। অতিশয় বৃদ্ধিপ্রাপ্ত কণ্টকশালী বৃক্ষ, উৎকৃষ্ট ক্ষেত্রে জন্মিয়া থাকে ॥২৯॥

(ঘ) শকার। পণ্ডিত! বসন্তসেনা আপনার সম্মুখে লজ্জিত হইতেছে, তাই, আমাকে স্বীকার করিতেছে না। সুতরাং আপনি যান, ভৃত্য স্থাবরককে আমি প্রহার করিয়াছি, তাই সে চলিয়া গিয়াছে, হয় ত সে পলাইয়া যাইবে। অতএব আপনি তাহাকে নিয়া আসুন।

तस्मात् करोम्येष विविक्तमस्या
विविक्तविस्रम्भरसो हि कामः ॥३०॥

प्रकाशम्। एवं भवतु, गच्छामि।

वसन्त। पटान्ते गृहीत्वा। णं भणामि सरणागदम्हि। (द)

विटः। वसन्तसेने! न भेतव्यं न भेतव्यम्। काणेलीमातः! वसन्तसेना तव हस्ते न्यासः।

शकारः। एव्वं। मम हत्थे एशा णाशीण चिट्ठदु। (ध)

[द] ननु भणामि शरणागतास्मि। [ध] एवं। मम हस्ते एषा न्यासीना तिष्ठतु।

तस्मादिति। वसन्तसेना शौण्डीर्यभावात् आत्मन औदार्यात्, अस्मत्समक्षं हि निश्चितम्, मूर्खं शकारं न भजेत् स्वनुभावयेत्। तथात्वे परवशमस्येव औदार्यभङ्गः स्यादिति भावः। तस्मात् हेतोः, एषः अहम् अस्याः वसन्तसेनायाः सम्बन्धे, विविक्तम् इदं स्थानं विजनं करोमि स्वयमपसृत्येति शेषः। हि यस्मात्, कामः, विविक्ते विजनस्थाने विस्रम्भः परस्परविश्वासश्च ताभ्यां रसोऽनुरागो यस्मिन् स तादृशो भवति।

अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

उपजातिर्वृत्तम् ॥३०॥

বিট। (স্বগত) বসন্তসেনা, উদারস্বভাববশতঃ, আমার সমক্ষে এই মূর্খকে ভজনা করিবে না। সুতরাং আমি ইহার জন্য, এই স্থানটীকে নির্জন করিব। কারণ, নির্জন স্থান ও পরস্পর বিশ্বাস—এই উভয়ে যে অনুরাগ জন্মে, তাহাতেই কামব্যবহার ঘটিয়া থাকে ॥৩০॥

(প্রকাশ্যে) এইরূপই হউক, আমি যাই।

(দ) বসন্তসেনা। (বিটের বস্ত্রাঞ্চল গ্রহণ করিয়া) মহাশয়! আমি বলিতেছি, আমি আপনার শরণাপন্ন হইয়াছি।

বিট। বসন্তসেনা! ভয় করিও না, ভয় করিও কাণেলীর পুত্র! বসন্তসেনা তোমার হাতে গচ্ছিত থাকিল।

विटः। सत्यम्?।

शकारः। सच्चं। (न)

विटः। किञ्चिद् गत्वा। अथवा मयि गते नृशंसो हन्यादेनाम्। तदपवारितशरीरः पश्यामि तावदस्य चिकीर्षितम्। इत्येकान्ते स्थितः।

शकारः। भोदु, मालइश्शं। अधवा कवडकावडिके एशे बम्हणे वुड्ढखोडे कदावि ओवालिद-शलीले गदिअ, शिआले भविअ, खुलुखुल्लि कलेदि। ता एदश्श वञ्चणाणिमित्तं एव्वं दाव कलइश्शं। कुसुमावचयं कुर्वन्नात्मानं मण्डयति। बाधू! बाधू! वशन्तशेणिए। एहि। (प)

[न] सत्यम्।

[प] भवतु, मारयिष्यामि। अथवा कपटकापटिक एष ब्राह्मणो वृद्धशृगालः कदाचिदपवारितशरीरो गत्वा शृगालो भूत्वा कपटं करोति। तदेतस्य वञ्चनानिमित्तम् एवं तावत् करिष्यामि। बाले! बाले! वसन्तसेने। एहि।

(प) शकार इति। कपटेन छद्मना कापटिको धूर्तः। वृद्धशृगालस्तत्स्वरूप। एष विटः। इतो गत्वा कुत्रापि वा अपवारितशरीरः सन् शृगालस्तत्स्वरूपो भूत्वा। कुसुमैरात्ममण्डनं विटायात्मनः कामित्वज्ञापनार्थम्।

(ধ) শকার। হাঁ। বসন্তসেনা আমার হাতে গচ্ছিত থাক্।

বিট। সত্য?।

(ন) শকার। সত্য।

বিট। (কিছু দূর যাইয়া) অথবা আমি গেলে, নৃশংস শকার, বসন্তসেনাকে মারিয়া ফেলিবে। অতএব লুক্কায়িতদেহ হইয়া দেখি—ইহার কি করিবার ইচ্ছা। (এই বলিয়া একপ্রান্তে থাকিল)

(প) শকার। হউক, মারিয়া ফেলি। অথবা, ছলব্যবহারে ধূর্ত

विट: । अये ! कामी संवृत्तः । हन्त ! निर्वृतोऽस्मि । गच्छामि । इति निष्क्रान्त: । (फ)

शकार: । शुवण्णअं देमि पिअं वदेमि
पडेमि शीशेण शवेट्टणेण ।
तधावि मं णेच्छशि शुद्धदन्ति !
किं शेवअं कट्टमआ मणुश्शा ॥२१॥

सुवर्णकं ददामि, प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन ।
तथापि मां नेच्छसि शुद्धदन्ति ! किं सेवकं कष्टमया मनुष्याः ॥२१॥

(फ) विट इति । कामी मदनः ; अतएवायमिदानीं वसन्तसेनां प्रति स्वं हृदयमेव दर्शयितुं यतेत, न पुनः प्रहारादिकं कर्त्तुमिति भावः । अतएव च हन्तेति हर्षे । निर्वृतो निरुद्वेग. ।

सुवर्णकमिति । सुवर्णकं स्वर्णालङ्कारं ददामि, तव सन्तोषायमिति भावः । एवं सर्वत्र । प्रियं वाक्यं वदामि । सवेष्टनेन उष्णीषयुक्तेन । इदन्तु व्यर्थं विशेषणं शकारोक्तिनियमात् । शीर्षेण मस्तकेन, पतामि तव पादयोरिति शेषः । हे शुद्धदन्ति ! निर्मलदन्तशालिनि । तथापि एतावत्सन्तोषकरकार्य्यकरणेऽपि मां न इच्छसि रमणायेति शेष । अतएव ब्रवीमीत्यभिप्रेत्याह किमिति । मनुष्याः स्त्रीपुंसाधारणा मानवाः, सेवकं जनं प्रति, किं कष्टमयाः कष्टदायकस्वरूपाः, अपि तु तथैव, कथमन्यथा त्वं मां प्रति एवमाचरसीति भावः ।

उपजातिर्वृत्तम् ॥२१॥

এবং বৃদ্ধ শৃগালের তুল্য এই ব্রাহ্মণ, হয় ত, কখনও লুক্কায়িতদেহ হইয়া, শৃগালের ন্যায় ছল করিবে। অতএব ইহার প্রতারণার জন্য, এইরূপ করি। (পুষ্পচয়ন করিয়া আপনাকে ভূষিত করিতে লাগিল) বালিকে! বালিকে! বসন্তসেনে! আইস।

(ফ) বিট। ওহে! কামুক হইয়াছে। ভাল! সুস্থ হইলাম। এখন যাই। (এই বলিয়া চলিয়া গেল)

वसन्त। को एत्थ सन्देहो ?। अवनतमुखी "खलचरितम्" इत्यादि श्लोकद्वयं पठति। (व)

खल ! चरित-निकृष्ट ! जातदोष:
कथमिह मां परिलोभसे धनेन।
सुचरितचरितं विशुद्धदेहं
न हि कमलं मधुपाः परित्यजन्ति ॥३२॥

[व] कोऽत्र सन्देह ?।

(व) वसन्त इति। अत्र इत्यमात्रे कटुभाषणे, क सन्देह कर्त्तव्यत्वसमय, कोऽपि नेत्यर्थ। दुर्जनत्वादेन प्रति कटु वक्तव्यमेवेति भाव। वेश्यात्वेन "योषित् सुवी बाल वेश्या" इत्यादिप्रामाण्यादेव प्राकृतश्लोकद्वय स्वकृत पठतीति बोध्यम्।

खलेति। हे खल ! स्वभावत एव दुर्जन ! तथा चरितेन व्यवहारेणापि निकृष्ट ! नीच !। एतेन वर्णेन न नीच इति व्यज्यते। जाता मूर्खत्वादयो दोषा यस्य स तादृशस्तम्, इह सुरतविषये, कथ धनेन स्वर्णधनदानाङ्गीकारेण, मा परिलोभसे लुब्धां कर्त्तुं चेष्टसे। अत्र लुभधातोरिन्तार्थे लघयवा वेदितव्या। अतमपि परिलोभय तथापि न लुभ्यामीति भाव। कथमेतदित्याह हि यस्मात्, मधुपा मधुकर्य्य, सुचरित सुन्दरभावेन विहित चरित स्वभावो येन तत्, तथा विशुद्धदेह निर्मलाकारम्, कमल पद्मम्, न परित्यजन्ति परित्यज्य नैवान्य भजन्त इत्यर्थ। तथा च यथा मधुकर्य्य मनोहर पद्म परिहाय नैवान्य न भजन्ति, तथा अहमपि चारुदत्तमपहाय भवन्त न भजामीति भाव।

শকার। স্বর্ণ দান করিব, প্রিয় বাক্য বলিব এবং উষ্ণীষযুক্ত মস্তক দ্বারা তোমার চরণে পতিত হইব, হে নির্মলদন্তশালিনি। তথাপি আমাকে ইচ্ছা করিতেছ না। (তাই বলি) মানুষ কি স্বভাবতই সেবকের প্রতি কষ্টদায়ক হইয়া থাকে ? ॥৩১॥

(ব) বসন্তসেনা। এ বিষয়ে আর সন্দেহ কি ?। (অবনতবদন হইয়া "খলচরিত" ইত্যাদি শ্লোকদ্বয় পাঠ করিতে লাগিল)

यत्नेन सेवितव्यः पुरुषः कुलशीलवान् दरिद्रोऽपि ।
शोभा हि पणस्त्रीणां सदृशजनसमाश्रयः कामः ॥ ३२॥

अवि अ। सहआरपादवं सेविता ण पलास-पादवं अङ्गी-करिस्सं । (भ)

[भ] अपि च। सहकारपादपं सेवित्वा न पलाशपादपमङ्गीकरिष्यामि ।

अतएवात्र समासादप्रस्तुतात् प्रस्तुतसमप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः ।

पुष्पिताग्रा वृत्तम् ॥३१॥

यत्नेनेति। दरिद्रोऽपि कुलशीलवान् पुरुषः, यत्नेन सेवितव्यः, पणस्त्रीभिरिति शेषः। हि यस्मात्, सदृशो गुणेनात्मतुल्यो जनः समाश्रयो विषयो यस्य स तादृशः कामः, पणस्त्रीणां वेश्यानां शोभा शोभाजनकः । तथा च चारुदत्तो दरिद्रोऽपि सन् कुलशीलवत्तया मया यत्नेन सेवितव्यः, तथात्वे च तस्य सदृशतया कामो मे शोभामेव जनयेदिति भावः ।

अतएवात्रापि अप्रस्तुतात् पुरुषसामान्यात् पणस्त्रीसामान्याच्च प्रस्तुतस्य पुरुषविशेषस्य चारुदत्तस्य पणस्त्रीविशेषस्य आत्मनश्च प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः, कामशोभयोः कारणकार्ययोरभेदेनाभिधानात् हेत्वलङ्कारश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

आर्या जातिः ॥३२॥

(भ) अपि चेति । चारुदत्तं सेवित्वा भवन्तं नाङ्गीकरिष्यामीति भावः । अत-एवात्राप्यप्रस्तुतप्रशंसा ।

হে খল! হে স্বভাবনিকৃষ্ট! তুমি দোষান্বিত হইয়াও, এ বিষয়ে ধনদ্বারা আমাকে লুব্ধ করিতেছ কেন?। ভ্রমরীগণ, সংস্বভাব ও নির্ম্মল-দেহ পদ্মকে পরিত্যাগ করে না ॥৩২॥

বেশ্যারা যত্নপূর্ব্বক দরিদ্র হইলেও কুল-শীলবিশিষ্ট পুরুষকে সেবা করিবে। কারণ, অনুরূপ পুরুষের বিষয়ে যে কাম, তাহা বেশ্যাদিগের অলঙ্কার ॥৩৩॥

शकारः। दाशीए धीए! दलिद्द-चालुदत्तके शहआल-पादवे कडे, हग्गे उण पलाशे भणिदे, किंशुके वि ण कड़े। एव्वं तुमं मे गालिं देन्ती अज्ज वि तं ज्जेव चालुदत्तकं शुमलेशि?। (म)

वसन्त। हिअअगदो ज्जेव किं त्ति ण सुमरीअदि?। (य)

शकारः। अज्ज वि दे हिअअगदं तुमं च शमं ज्जेव मोड़ेमि। ता दलिद्द शत्थवाहश-मणुश्श-कामुकिणि! चिट्ठ चिट्ठ। (र)

[म] दास्याः पुत्रि! दरिद्र चारुदत्तस्य सहकारपादपः कृतः अहं पुनः पलाशो भणितः किंशुकोऽपि न कृतः। एवं त्वं मे गालिं ददती अद्यापि तमेव चारुदत्तं स्मरसि?।

(य) हृदयगत एव किमिति न स्मर्यते?।

(म) शकार इति। "पलाशे किंशुक" इत्याद्यमरप्रामाण्यात् "किंशुकोऽपि न कृतः" इत्यपार्थं सूक्तम्।

(य) वसन्त इति। यतो हृदयगत एव मनस्येव स्थितः, अतः किमिति न स्मर्यते न स्मर्त्तुं शक्यत इत्यर्थः।

(ভ) আরও, আম্রতরুর সেবা করিয়া, এখন পলাশতরুকে স্বীকার করিতে পারি না।

(ম) শকার। ওরে দাসীর মেয়ে! তুই দরিদ্র চারুদত্তকে আম-গাছ করিলি, কিন্তু আমাকে পলাশ বলিলি, কিংশুকও বলিলি না! তুই এইভাবে আমাকে গালি দিতে থাকিয়া এখনও সেই চারুদত্তকেই স্মরণ করিতেছিস্?।

(য) বসন্তসেনা। তিনি ত আমার হৃদয়েই রহিয়াছেন, কেন স্মরণ করিব না?।

वसन्त। भण भण, पुणो वि भण। सलाहणिज्जाइं एदाइं अक्खराइं। (ल)

शकारः। पलित्ताअदु दाशीए पुत्ते दलिद्द-चालुदत्तके (१) तुमं। (व)

वसन्त। परित्ताअदि, जदि मं पेक्खदि। (श)

(व) अद्यापि ते हृदयगत त्वाञ्च सममेव मोटयामि। तम् दरिद्र-सार्थवाहक-मनुष्यकामुकि। तिष्ठ तिष्ठ।

[ल] भण भण, पुनरपि भण। श्लाघनीयानि एतानि अक्षराणि।

[व] परित्रायतां दास्याः पुत्रो दरिद्र-चारुदत्तकस्त्वाम्।

(श) परित्रायते, यदि मां प्रेक्षते।

---

(व) शकार इति। हृदयगत चारुदत्तम्। समं युगपदेव। मोटयामि निष्पिष्य चूर्णयामि त्वन्मोटने त्वदीयहृदयगतस्यापि मोटनमवश्यं स्यादिति भावः।

(ल) वसन्त इति। श्लाघनीयानि प्रशस्यानि, एतानि दरिद्रचारुदत्तेत्यादीनि, चारुदत्तमनुष्यकामुकतासूचनेन गुणवत्तासूचनादित्याशयः।

---

(ব) শকার। এখনও তোর হৃদয়গত? তা হইলে তাকে এবং তোকে একসাই নিষ্পেষণ করিয়া মারিব। তা, দরিদ্র-বণিক্-মানুষের অভিলাষিণি। থাক্ থাক্।

(ল) বসন্তসেনা। বল্ বল্ আবারও বল্। এ কথাগুলি আমার পক্ষে শ্লাঘ্য।

(ব) শকার। বাঁদীর পো গরীব চারুদত্ত, তোকে রক্ষা করুক দেখি?।

(শ) বসন্তসেনা। রক্ষা করিবেন, যদি দেখিতেন।

---

(१)···दलिद्दचालुदत्तकं।

शकारः । किं शे शक्के वालिपुत्ते महिन्दे
लम्भापुत्ते कालणेमी शुवन्धू ।
लुद्दे लाआ दोणपुत्ते जडाऊ
चाणक्के वा धुन्धुमाले तिशङ्कू ? ॥३४॥

अधवा एदे वि दे ण लक्खन्ति । (घ)
चाणक्के ण जधा शीदा मालिदा भालदे जुए ।
एव्वं दे मोडइश्शामि जडाऊ विअ दोवदिं (१) ॥३५॥

इति ताडयितुमुद्यतः ।

किं शक्रो वालिपुत्रो महेन्द्रः रम्भापुत्रः कालनेमिः सुबन्धुः ।
रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कुः ? ॥३४॥

[घ] अथवा एतेऽपि त्वां न रक्षन्ति ।

किमिति । स चारुदत्तः किं शक्रः स्वयमिन्द्रः येन प्रचयमाजसव त्वां रक्षेदिति भावः । एवमन्यत्रापि । किं वालिपुत्रो महेन्द्र इति पुनरुक्तमपार्थं च वास्तविकत्वाभावात् । रम्भायामन्दोाख्याया स्वर्गवेश्यायाः पुत्रः कालनेमिः रावणमातुलः प्रसिद्धो राक्षसः । इदमप्यपार्थं वास्तविकत्वाभावात् । सुबन्धुः कश्चिद्गद्यकविः । इदमप्यपार्थमेव कवित्वमात्रेण पररक्षणोपयोगिकायिकबलासम्भवात् । रुद्रो नाम राजा द्रोणस्य पुत्रो जटायुः । इदं द्वयमप्यपार्थम् तयोरभावात् । चाणक्य इत्यप्यपार्थं बुद्धिमात्रेण कठात्पररक्षणोपयोगिकायिकबलासम्भवात् । धुन्धुमारस्त्रिशङ्कुश्च पौराणिकौ राजानौ ।

मालिनी वृत्तम् ॥३४॥

(घ) अथवेति । रक्षन्ति रक्षितुं शक्नुवन्ति ।

শকার। সে কি ইন্দ্র? না বালির পুত্র দেবরাজ? না রম্ভার পুত্র কালনেমি? না কবি সুবন্ধু? কিংবা রাজা রুদ্র? না দ্রোণের পুত্র জটায়ু? না চাণক্য? না ধুন্ধুমার? না ত্রিশঙ্কু? ॥৩৪॥

(१) दीव्वदिं ।

वसन्त। हा अत्ते! कहिं सि?। हा अज्जचारुदत्त! एसो जणो असम्पुण्ण-मणोरधो ज्जेव विवज्जदि। ता उड्ढं अक्कन्दइस्सं अधवा वसन्तसेणा उड्ढे अक्कन्ददि त्ति लज्जणीअं क्खु एदं। णम अज्जचारुदत्तस्स। (स)

चाणक्येन यथा सीता मारिता भारत युगे।
एव त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥३५॥

(स) हा मातः! कुत्रासि?। हा आर्य्यचारुदत्त! एष जनः असम्पूर्ण-मनोरथ एव विपद्यते। तदूर्द्ध्वमाक्रन्दयिष्यामि। अथवा वसन्तसेना ऊर्द्ध्वमाक्रन्दतीति लज्जनीयं खल्वेतत्। नम आर्य्यचारुदत्ताय।

---

चाणक्येन इति। भारत नाम युग तस्मिन्। इदन्तु अपार्थसमुदायान्तर्गतमपार्थम्। इदञ्च शौकारस्यैवापार्थं वास्तविकत्वाभावात् ॥३५॥

(स) वसन्त इति। असम्पूर्णमनोरथ एव, दीर्घकालसम्भोगाभावादिति भावः। विपद्यते म्रियते। तत् तस्मात् ऊर्द्ध्वं मरणात् परम्, आक्रन्दयिष्यामि मच्छोकेनैव भवन्तमिति शेषः। ऊर्द्ध्वमनुष्यैः, आक्रन्दति मरणभयात् स्वयं रोदिति, इत्येतत् लज्जनीयं लज्जाविषयमेवेति शेषः। तद्दुःखेऽपि तदनुरक्ता जनी रक्षितुं न शक्यत इत्येतदेव ते लज्जाकारणमिति भावः।

---

(ব) অথবা, ইহারাও তোকে রক্ষা করিতে পারিবেন না।

চাণক্য যেমন ভারতযুগে সীতাকে মারিয়াছিলেন, কিংবা জটায়ু যেমন দ্রৌপদীকে নিষ্পেষণ করিয়াছিল, সেইরূপ আমি তোকে নিষ্পেষণ করিব ॥৩৫॥

(এই বলিয়া প্রহার করিতে উদ্যত হইল)

(স) বসন্তসেনা। হা মা! তুমি কোথায়? হা আর্য্য চারুদত্ত! অভিলাষ পূর্ণ না হইতে না হইতেই এই ব্যক্তি মরিয়া গেল। অতএব ইহার পর আপনাকে কাঁদাইব। অথবা, বসন্তসেনা উচ্চৈঃস্বরে কাঁদিতেছে ইহা আপনার পক্ষে লজ্জাকর। আর্য্য চারুদত্তকে নমস্কার।

शकारः । अज्जवि गब्भदाशी तश्श ज्जेव पावश्श णामं गेण्हदि ?। इति कण्ठे पीडयन्। श्शुमल गब्भदाशि । श्शुमल । (छ)

वसन्त । णमो अज्जचारुदत्तस्स । (ज)

शकार । श्शुमल गब्भदाशि । श्शुमल । नाट्येन कण्ठे निपीडयन् मारयति । (झ)

वसन्तसेना मूर्च्छिता निश्चेष्टा पतति ।

शकारः । सहर्षम्,

एशे दोशकलण्डिआ अविणअश्शावाशभूदं खल्लं
लत्ता तश्श किलागदश्श लमणं कालागदं आअदं ।
किं एशे शमुदाहलामि णिअअं बाहूण शूलत्तणं
णीशाशे वि मलेइ अम्ब श्शुमला शीदा जधा भालदे ॥२६॥

(छ) अद्यापि गर्भदासी तस्यैव पापस्य नाम गृह्णाति ?। स्मर गर्भदासि । स्मर ।

(ज) नम आर्यचारुदत्ताय । (झ) म्रियस्व गर्भदासि । म्रियस्व ।

एषा दोषकरण्डिकाविनयस्यावासभूता खला
रक्ता तस्य किलागतस्य रमणं कालागतामागताम् ।
किमेव समुदाहरामि निजकं बाह्वोः शूरत्व
निश्वासेऽपि म्रियत अम्बा सुमृता सीता यथा भारते ॥२८॥

---

(ছ) শকার। গর্ভদাসী এখনও সেই পাপাত্মার নাম লইতেছে ?। (এই বলিয়া বসন্তসেনার গলদেশ চিপিতে থাকিয়া) স্মরণ কর্ গর্ভদাসি। স্মরণ কর্।

(জ) বসন্তসেনা। আর্য্য চারুদত্তকে নমস্কার।

(ঝ) শকার। মর্ গর্ভদাসি। মর্। (এই বলিয়া অভিনয়ের দ্বারা গলদেশে পীড়ন করতঃ মারিল)

(বসন্তসেনা মূর্চ্ছিত হইয়া নিস্পন্দ অবস্থায় পড়িয়া রহিল)

इच्छन्तं मम णेच्छति त्ति गणिआ पाशेण मे मालिदा
शुण्णे पुप्फकलण्डके त्ति शहशा पाशेण (१) उत्ताशिदा ।
शे वा वञ्चिद भादुके मम पिदा मादेव शा दोप्पदी
जे शे पेक्खदि णेदिशं ववशिदं पुत्ताह शूलत्तणं ॥३७॥

इच्छन्तं मां नेच्छतीति गणिका पाशेन मया मारिता
शून्ये पुष्पकरण्डके इति सहसा पाशेन उत्त्रासिता ।
स वा वञ्चितो भ्राता मम पिता मातेव सा द्रौपदी
योऽसौ पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम् ॥३७॥

एतामिति । एष अहम्, दोषाणां पापादीनां करण्डिका पात्रविशेषस्तद्रूपामित्यर्थः, अविनयस्य दुर्व्यवहारस्य आवासभूताम् आश्रयीभूताम्, खलाम्, आगतस्य जीर्णोद्याने उपस्थितस्य, तस्य चारुदत्तस्य, रमणे सुरतविषये रमणार्थमित्यर्थः, आगताम्, कालागतां कालप्राप्ताम्, रक्तां चारुदत्तानुरागिणीम्, एतां वसन्तसेनाम्, मारयित्वेति शेषः, निजकं स्वकीयं बाह्वोः शूरत्वं किं समुदाहरामि ? किमपि नेत्यर्थः। तथा च भारते वर्षे यथा सीता सुमृता सम्यक् मृता । इदं हतोपमं वाक्यम् । तथैव अम्बा माता वसन्तसेना । इदं लोकविरुद्धं न्यायविरुद्धोक्तम् । निश्वासेऽपि मम निश्वासपातेऽपि कोमलत्वात् निश्वासाघातेऽपीत्यर्थः म्रियते । निश्वासमात्रेणैव मारणसम्भवे सत्यैव बाहुबलप्रयोगे बाह्वोः शूरत्वं किमपि नास्तीति भावः ।

शार्दूलविक्रीडितं वृत्तम् ॥३६॥

শকার । (আনন্দের সহিত) এই বসন্তসেনা দোষের সাজী, দুর্ব্যবহারের আধার ও খলস্বভাব ছিল এবং জীর্ণোদ্যানে উপস্থিত চারুদত্তের সঙ্গে সম্মিলিত হইবার জন্য আসিয়াছিল, বিশেষতঃ চারুদত্তের প্রতি অনুরক্তা ছিল, আমি ইহাকে মারিয়া, নিজের বাহুর বীরত্বের কি উল্লেখ করিব। ভারতবর্ষে সীতা যেমন মরিয়াছিলেন, সেইরূপ আমার মাতা বসন্তসেনা, আমার নিশ্বাসমাত্রেই ভাল করিয়া মরিয়াছেন ॥৩৬॥

(१) लोशेण ।

भोदु, शम्पदं वुड्ढखोडे आगमिश्शदि त्ति । ता ओशलिअ चिट्ठामि । तथा करोति । (ख)

प्रविश्य चेटेन सह विटः (१) । अनुनीतो मया स्थावरकश्चेटः । तद् यावत् काणेलीमातरं पश्यामि । परिक्रम्यावलोक्य च । अये ! मार्ग एव पादपो निपतितः । अनेन च पतता स्त्री व्यापादिता । भोः !

(ख) भवतु, साम्प्रतं वृद्धशृगाल आगमिष्यतीति । तदपसृत्य तिष्ठामि ।

इच्छन्तमिति । इच्छन्तं तामेवेच्छन्तं मां सा नेच्छति इति हेतोः, मया, शून्ये लोकरहिते, पुष्पकरण्डके इति प्रसिद्धे तदाख्ये उद्याने, पाशेन बाहुपाशेन, गणिका वेश्या वसन्तसेना मारिता निहता, तथा पाशेन बाहुपाशेनैव, सहसा उत्त्रासिता प्राक् भयं प्रापिता । स मम भ्राता वञ्चितः, स वा मम पिता वञ्चितः, तथा द्रौपदीव सा मम माता च वञ्चितेत्यर्थः; योऽसौ भ्राता पिता यासौ माता चेति तात्पर्य्यम्, पुत्रस्य आतुर्येति बोध्यम्, ईदृशं वसन्तसेनाहत्यापरिचायितं शूरत्वम्, व्यवसितमध्यवसायं उद्यमसंस्थयः न पश्यति । आत्मीयस्य गुणादर्शी आत्मीयो वञ्चित एव भवतीति भावः ।

शार्दूलविक्रीडितं वृत्तम् ॥३७॥

(ख) भवत्विति । पूर्वोक्तव्याख्यानात् वृद्धशृगालो विट एव । अपसृत्य वसन्तसेनासमीपात् दूरं गत्वा । अन्यथा घातकतया मां शङ्किष्यतीति भावः ।

আমি উহাকে চাহি, কিন্তু ও আমাকে চাহে না, এই জন্য নির্জন পুষ্পকরণ্ডক উদ্যানে আমি ঐ বেশ্যাটাকে বাহুপাশদ্বারা মারিয়া ফেলিয়াছি। বাহুপাশদ্বারা হঠাৎ পূর্ব্বেও ভয় দেখাইয়াছিলাম। আমার সেই ভ্রাতা, পিতা ও দ্রৌপদীর ন্যায় মাতা—ইঁহারা সকলেই বঞ্চিত হইলেন, যাঁহারা পুত্রের এইরূপ বীরত্ব ও অধ্যবসায় দেখিলেন না ॥৩৭॥

(খ) হউক, এখন বৃদ্ধ শৃগালটা আসিবে, তা দূরে যাইয়া থাকি। (তাহাই করিল)

(१) प्रविश्य चेटेन सह विटः ।, विटः । इति क्वचित् पाठः ।

पाप ! किमिदमकार्य्यमनुष्ठितं त्वया ?। तथापि पापिनः पतनात् स्त्रीवधदर्शनेनातीव पातिता वयम्। अनिमित्तमेतत् यत्सत्यं वसन्तसेनां प्रति शङ्कितं मे मनः। सर्वथा देवताः स्वस्ति करिष्यन्ति। अग्रतमुपसृत्य। काणेलीमातः ! एवं मया अनुनीतः स्थावरकश्चेटः। (ग)

(ग) प्रविश्येति। अनुनीत शकारप्रहारजनितरोषमपनीय समनपनीय आनीत इत्यर्थः। मार्ग एव मदागमनपथ एव, पादयोरुद्देशे निपतित अनुनयार्थं लुण्ठित। स्त्री वसन्तसेना व्यापादिता भवदिति शेष। कथमन्यथा चनावश्यकमनुनयं करोतीत्याशय। पतनात् स्त्रीहत्याजनितपातित्यनरकसंसर्गात्, स्त्रीवधदर्शनेन कर्त्रा। पातिता वयमित्यत्र शकारमुद्दिश्योक्तम्। अनिमित्तमित्यादिकन्तु स्वगतमिति बोध्यम्। यत्सत्य वसन्तसेना प्रति तत्स्त्रीवधाश्रितविषय इत्यर्थं, मे मन शङ्कितम् इत्येतदेव अनिमित्त वसन्तसेनाया मृत्युसूचक दुर्लक्षणम्, "सता हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय" इति न्यायात् इत्याशय। स्वस्ति मङ्गलम्।

स्त्रीहत्याया पातित्यमाह प्रायश्चित्ततत्त्वधृता श्रुति —

"शरणागतबालस्त्रीहिंसकान् संवसेन्न तु।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥"

उद्वाहतत्त्वे — "कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च।
द्वापरे त्वर्थमादाय कलौ पतति कर्म्मणा॥"

इति वचनव्याख्यानावसरे गुरुतरसंसर्गे पातित्यमाह स्मार्त्त — "कर्म्मपद सम्भाषण-स्पर्शन-धनग्रहणेतरगुरुतरसंसर्गपरम्।" इति।

---

(গ) ভৃত্যের সহিত বিট প্রবেশ করিয়া। আমি ভৃত্য স্থাবরকের অনুনয় করিয়াছি। তা শকারের সঙ্গে দেখা করি। (কতিপয় পদক্ষেপ-পূর্ব্বক দর্শন করিয়া) ওহে। পথেই আমার পায়ের উদ্দেশে পতিত হইয়াছে। ভূপতিত এই শকার স্ত্রীহত্যা করিয়াছে। ওরে পাপাত্মা! তুই এই, কি অকার্য্যের অনুষ্ঠান করিলি।। পাপাত্মা তোর পতনের পর

शकारः। भावे! शाअदं दे?। पुत्तका! थावलका! चेड़ा! तवावि शाअदं?। (घ)

चेटः। अधइं। (ङ)

विटः। मदीयं न्यासमुपनय।

शकारः। कीदिशे?। (च)

विटः। वसन्तसेना।

शकारः। गदा। (छ)

विटः। क्व?।

शकारः। भावश्श ज्जेव पिट्ठदो। (ज)

(घ) भाव! स्वागतं ते?। पुत्रक! स्थावरक! चेट! तवापि स्वागतम्?।

(ङ) अथकिम्। (च) कीदृशम्? (छ) गता। (ज) भावस्यैव पृष्ठतः।

স্ত্রীহত্যা দর্শন করায় আমরাও পতিত হইব। আমার মন, বসন্তসেনার বিষয়ে আশঙ্কিত হইয়াছে, ইহা নিশ্চয়ই দুর্লক্ষণ। অভীষ্টদেবতারাই, সর্ব্বপ্রকারে মঙ্গল করিবেন। (শকারের নিকট যাইয়া) কাণেলীর পুত্র! আমি এই ভাবে ভৃত্য স্থাবরকের অনুনয় করিয়াছি।

(ঘ) শকার। পণ্ডিত! আপনার শুভাগমন ত? পুত্র! স্থাবরক! ভৃত্য! তোরও শুভাগমন ত?।

(ঙ) ভৃত্য। হাঁ।

বিট। আমার গচ্ছিত বস্তুটী আন।

(চ) শকার। কেমন?।

বিট। বসন্তসেনা।

(ছ) শকার। গিয়াছে।

বিট। কোথায়?।

(জ) শকার। আপনারই পিছনে।

विटः । सवितर्कम् । न गता खलु सा तया दिशा ।

शकारः । तुमं कदमाए दिशाए गड़े ?। (झ)

विटः । पूर्वया दिशा ।

शकारः । शा वि दक्खिणाए गड़ा । (ञ)

विटः । अहं दक्षिणया ।

शकारः । शा वि उत्तलाए । (ट)

विटः । अत्याकुलं कथयसि । न शुध्यति मे अन्तरात्मा । तत् कथय सत्यम् । (ठ)

शकारः । शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं ता, शमश्शाविहि हिअअं, एशा मए मालिदा । (ड)

(झ) त्वं कतमया दिशा गतः ? ।

(ञ) सापि दक्षिणया गता । (ट) सापि उत्तरया ।

(ड) शपे भावस्य शीर्षम् आत्मीयाभ्यां पादाभ्याम्, तत् समाश्वासय हृदयम्, एषा मया मारिता ।

(ठ) विट इति । अत्याकुलम् अतीवविकलं पूर्वापरासम्बद्धमित्यर्थः । न शुध्यति संशयापगमेन न प्रसीदति सन्देहाविष्टमेव तिष्ठतीत्यर्थः ।

বিট। (বিতর্কের সহিত) সে ত সে দিকে যায় নাই।

(ঝ) শকার। আপনি কোন্ দিক্ দিয়া গিয়াছিলেন ?।

বিট। পূর্ব্ব দিক্ দিয়া।

(ঞ) শকার। সেও দক্ষিণ দিক্ দিয়া গিয়াছে।

বিট। আমি দক্ষিণ দিক্ দিয়া গিয়াছিলাম।

(ট) শকার। সেও উত্তর দিক্ দিয়া গিয়াছে।

(ঠ) বিট। তুমি বড়ই পূর্ব্বাপর অসংলগ্ন কথা বলিতেছ। আমার অন্তঃকরণ শুদ্ধ হইতেছে না। অতএব সত্য বল।

विटः। सविषादम्। सत्यं त्वया व्यापादिता ?।

शकारः। जइ मम वअणे ण पत्तिआअसि, ता पेक्ख पढम' लट्ठिअ-शालसण्ठाणाह शूलत्तणं। इति दर्शयति। (ट)

विटः। हा ! हतोऽस्मि मन्दभाग्यः। इति मूर्च्छितः पतति।

शकारः। ही ही ! उवलदे भावे। (ण)

(ट) यदि मम वचने न प्रत्ययसे, तत् प्रेक्षस्व प्रथम राष्ट्रिय श्याल संस्थानस्य शूरत्वम्। (ण) ही ही। उपरतो भावः।

(ड) शकार इति। आत्मीयाभ्यां स्वकीयाभ्यां पादाभ्याम्, भावस्य विटस्य तवेत्यर्थः, शीर्षं मस्तकम्, शपे इति शेषः, शपे शपथं करोमि। इदं लोकविरुद्ध न्यायविरुद्धयोक्त शकारत्वात्, तत् तस्मात्, हृदयं संस्थापय स्थिरीकुरु। एषा वसन्तसेना।

(ढ) शकार इति। प्रत्ययसे विश्वसिषि। दर्शयति पतितां वसन्तसेनामिति शेषः।

(ण) शकार इति। हीशब्दो विस्मये, तस्यावृत्तिः स्थिरत्वे। उपरतो मृतः। वेश्याप्रीतिर्न तु मम पाण्डित्यातिशयमिति भावः।

(ড) শকার। আমি, আপনার মস্তক এবং নিজের চরণদ্বারা শপথ করিতেছি, তা, আপনি চিত্ত স্থির করুন, আমি ইহাকে মারিয়া ফেলিয়াছি।

বিট। (বিষাদের সহিত) সত্যই তুমি মারিয়া ফেলিয়াছ ?।

(ঢ) শকার। যদি আমার কথায় বিশ্বাস না করেন, তবে রাজার শালা সংস্থানের প্রথম বীরত্ব দেখুন। (এই বলিয়া দেখাইল)

বিট। হা! মন্দভাগ্য আমি মরিয়াছি। (এই বলিয়া মূর্চ্ছিত হইয়া পড়িল)

(ণ) শকার। কি আশ্চর্য্য! কি আশ্চর্য্য! পণ্ডিতটাও মরিয়া গেল!।

चेटः। समस्ससदु समस्ससदु भावे। अविचालिअ पवहणं आणन्तेण ज्जेव मए पढमं मालिदा। (त)

विटः। समाश्वस्य सकरुणम्। हा वसन्तसेने!

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रतिः
हा हालङ्कृतभूषणे! सुवदने! क्रीड़ारसोद्भासिनि!।
हा सौजन्यनदि! प्रहासपुलिने! हा मादृशामाश्रये!
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः ॥३८॥

(त) समाश्वसितु समाश्वसितु भावः। अविचारितं प्रवहणमानयतैव मया प्रथमं मारिता।

(त) चेट इति। अविचारितम् अपरीक्षितम्। मारिता मारणनिमित्ततां प्रापितेत्यर्थः। दाक्षिण्येति। हा इति मनोविषादातिशयसम्बोधने। अलङ्कृतानि भूषितानि भूषणानि यया तत्सम्बोधनम्। एतेन त्वमीदृशसुन्दरी आसीर्येन त्वमेवालङ्काराणामलङ्कृतवती, न पुनरलङ्कारास्त्वामलङ्कृतवन्त इति व्यज्यते। हे सुवदने। क्रीडारसेन सुरतानुरागेण उद्भासते विशेषेण शोभते या तत्सम्बोधनम्। सौजन्यनदि। साधुताजलस्य नदीरूपे। प्रहासो हास्यमेव पुलिनम् उभयोरेव शोभितत्वात् सैकतं यस्यास्तत्सम्बोधनम्। आश्रीयते या सा आश्रया कर्मण्यच्प्रत्ययः। मादृशा वेश्यापरायणानां जनानाम् आश्रये। चिराश्रिते।। दाक्षिण्यमौदार्यमेव उदकं जलं तस्य वाहिनी नदी तत्स्वरूपेत्यर्थः; विगलिता विलुप्ता, रतिः साक्षात् कामप्रिया स्वदेशं स्वकीयस्वर्गलोकम्, याता गता। रतिदेवी वसन्तसेनारूपेणावतीर्य पुनः स्वर्गं गतेति भावः। सौभाग्यं नायकप्रियत्वमेव पण्यं विक्रेयद्रव्यं तस्य आकरः खनिराश्रयभूतेति यावत् मन्मथस्य मदनरूपस्य वणिजः, विपणिः पण्यवीथिकारूपा, नश्यति नष्टेत्यर्थः। अतीतसामीप्ये वर्त्तमाना।

(ত) ভৃত্য। পণ্ডিত আশ্বস্ত হউন আশ্বস্ত হউন। বিবেচনা না করিয়া গাড়ী আনিয়া আমিই প্রথম মারিয়াছি।

*বিট। (আশ্বস্ত হইয়া শোকের সহিত) হা বসন্তসেনে!*

सास्रम् । कष्टं भोः । कष्टम् ।

किं नु नाम भवेत् कार्य्यमिदं येन त्वया कृतम् ।
अपापा पापकल्पेन नगरश्रीर्निपातिता ॥३८॥

अत्र प्रथमे पादे दाक्षिण्ये उदकत्वारोपो वसन्तसेनायां नदीत्वारोपे निमित्तमिति परम्परितरूपकम्, रतिवसन्तसेनयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिश्च, तृतीये वसन्तसेनायां नदीत्वारोपे प्रहासे पुलिनत्वारोपस्य शाब्द सौजन्ये जलत्वारोपस्तु आर्थ इत्येकदेशविवर्त्तिरूपकम्, तथा चतुर्थेऽपि वसन्तसेनायां विपणित्वारोपे सौभाग्ये पण्यत्वारोपस्य शाब्द, मन्मथे वणिक्त्वारोपस्तु आर्थ इत्येकदेशविवर्त्तिरूपकान्तरम्, इत्येतेषां मिथो निरपेक्षतया संसृष्टिः ।

शार्दूलविक्रीडितं वृत्तम् ॥३८॥

किमिति । किं नु नाम कार्य्यं फलं भवेत् अनया स्त्रीहत्यया सदसि शेषः । येन कार्य्योद्देशेन त्वया इदं स्त्रीहत्याकर्म दुष्कार्य्यं कृतम् । पापकल्पेन साक्षात् पापपुरुष-तुल्येन त्वया, अपापा निर्दोषा नगरश्रीः उज्जयिन्याः लक्ष्मीरूपा वसन्तसेना निपातिता निहता । तथा च अनया वसन्तसेनाहत्यया न केवलं त्वया आत्मनः पातित्यमात्रमर्जितम् अपि तु नगरमिदमपि श्रीहीनं कृतमित्याशयः ।

अत्र पापकल्पेनेत्यार्थी उपमा नगरश्रीरिति निरङ्ग केवलरूपकञ्च अनयोरपि पूर्ववत् संसृष्टिः । तथा "अनया स्त्रीहत्यया तत्र" इत्येतेषां पदानामनुपादानेऽपि न न्यूनपदतादोषः, प्रत्युत गुणत्वमेव वक्तुर्विषादमयत्वात् "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात् ॥३८॥

হা হা সুবদনে। হা ক্রীড়ানুরাগশোভিতে। তুমি অলঙ্কারকেও অলঙ্কৃত করিতে। হায়। ঔদার্য্য-জলের নদী লুপ্ত হইয়া গেল, রতিদেবী স্বদেশে চলিয়া গেলেন। হা সৌজন্যের নদি। হা হাস্যময় পুলিনে। হায় আমাদের মত লোকের আশ্রয়স্বরূপে। হায় হায়। সৌভাগ্যরূপ বিক্রেয়দ্রব্যের আকর কামদেবের দোকানখানি নষ্ট হইয়া গেল ॥৩৮॥

(অশ্রুজলের সহিত) কি কষ্ট। হায়। কি কষ্ট।।

स्वगतम्। अये! कदाचिदयं पाप इदमकार्य्यं मयि संक्रामयेत्। भवतु, इतो गच्छामि। (थ)

शकारः। उपागम्य धारयति।

विटः। पाप! मा मा स्प्राक्षीः। अलं त्वया। गच्छाम्यहम्। (द)

शकारः। अले! वशन्तशेणिअं शअं ज्जेव मालिअ मं दुशिअ कहिं पलाअशि?। शम्पदं ईदिशे हग्गे अणाधे पाविदे। (ध)

(ध) अरे! वसन्तसेना स्वयमेव मारयित्वा मा दूषयित्वा कुत्र पलायसे?। साम्प्रतम् ईदृशोऽहमनाथः प्राप्तः।

(थ) स्वगतमिति। अय पापः पापात्मा शकारः। संक्रामयेत् मिथ्याभिधाय सञ्चारयेत्।

(द) विट इति। मा निषेधे, मा माम्, स्प्राक्षीः स्पृश। "आलापाद्गात्रसंस्पर्शात्" इत्यादिस्मृत्या पापिस्पर्शेऽपि तत्पापसञ्चारसम्भवादित्यभिप्रायः।

(ध) शकार इति। अनाथः अशरणः, प्राप्तो भूत इत्यर्थः, त्वया त्यक्तत्वादनाथोऽहमिति भावः।

ইহা দ্বারা তোমার কি ফল হইবে? যে সাক্ষাৎ পাপপুরুষরূপ তুমি, নগরের লক্ষ্মীস্বরূপা এবং নির্দ্দোষা এই বসন্তসেনাকে হত্যা করিলে ॥৩২॥

(থ) (স্বগত) এই পাপাত্মা, হয় ত কখনও এই অকার্য্য, আমার উপরে আরোপিত করিবে। হউক, এখান হইতে চলিয়া যাই।

শকার। (নিকটে যাইয়া ধরিল)

(দ) বিট। পাপিষ্ঠ! আমাকে স্পর্শ করিস্ না। তোকে দিয়া আমার কোনও প্রয়োজন নাই। আমি চলিয়া যাই।

विटः । अपध्वस्तोऽसि । (न)

शकारः । अत्थं शटं देमि शुवस्मअं दे
कहावणं देमि शवोडिअं दे ।
एशे दुशट्टाणं पलक्कमे (१) मे
शामाण्णए भोदु मणुश्शआणं ॥४०॥

अर्थान् शतं ददामि सुवर्णकं ते कार्षापणं ददामि सवोडिकं ते ।
एष दोषस्थानं पराक्रमो मे सामान्यको भवतु मनुष्यकाणाम् ॥४०॥

(न) विट इति । अपध्वस्तोऽसि अधःपातं गतोऽसि, इतः परमपि मिथ्यारोपादित्याशयः ।

अर्थानिति । शतं शतसंख्याकान्, अर्थान् धनानि, सुवर्णकं स्वर्णमुद्रात्मकम्, ते तुभ्यं ददामि, तथा वोडिना विंशत्या कपर्दकैः सहेति सवोडिकं कार्षापणं षोडशपणपरिमितकपर्दकमूल्यञ्च, ते तुभ्यं ददामि । दोषस्थानम् अपराधास्पदीभूतं, एष वसन्तसेनाहत्यारूपोऽयं, मे मम पराक्रमो वीरत्वम्, मनुष्यकाणां सर्वेषामेव मनुष्याणामस्माकमित्यर्थः सामान्यकः साधारणो भवतु । तथा च हे विट । त्वं मत्तो धनादिकं प्राप्य एतदेव प्रतिपादय यत् वयं त्रय एव वसन्तसेनां हतवन्त इति, एवञ्च कस्यापि न प्राणदण्डो भवेत एकवधे प्रायेण बहूनां प्राणदण्डस्यादर्शनादिति भावः ।

(ধ) শকার। ওরে! নিজেই বসন্তসেনাকে হত্যা করিয়া, আমাকে নিন্দা করিয়া, কোথায় পলাইতেছ ?। এখন আমি এইরূপ রক্ষকহীন হইয়া পড়িলাম।

(ন) বিট। একেবারে অধঃপাতে গিয়াছ।।

শকার। তোমাকে এক শত টাকা দিব, একখানা মোহর দিব এবং এক কাহন পাঁচগণ্ডা কড়ি দিব, অপরাধাত্মক আমার এই পরাক্রম, আমাদের তিন জনেরই সমান হউক ॥৪০॥

(१) दुस्सट्टाण पलक्कमे ।

विटः । धिक्, तवैवास्तु ।

चेटः । शन्तं पावं । (प)

शकारः । हसति ।

विटः । अप्रीतिर्भवतु विमुच्यतां हि हासो
धिक् प्रीतिं परिभवकारिकामनार्य्याम् ।
मा भूच्च त्वयि मम सङ्गतं कदाचित्
आच्छिन्नं धनुरिव निर्गुणं त्यजामि ॥४१॥

(प) शान्तं पापम् ।

---

"वीडी विंशतिकपर्दकी गौडे प्रसिद्ध" इति पृथ्वीधरः । उपजातिवृत्तम् ॥४०॥

(प) चेट इति । शान्तं पापम् एतन्न वाच्यमित्यर्थः, "शान्तं पापमनिष्टे स्यात्" इत्यभिधानात् । अनेन त्वया कृतं दोषं कथमन्यो स्वीकरिष्यतीति भावः ।

अप्रीतिरिति । हि निश्चितं हासो हास्यमिदं विमुच्यतां परित्यज्यताम्, नात्र किमपि हास्यकारणमस्तीति भावः । अप्रीतिस्त्वया साकमसौहार्द्दं भवतु, परित्यागादित्याशयः । प्रीतौ को दोष इत्याह अनार्य्यां दुर्जनेन सह जातत्वादसाधुरूपाम्, अतएव परिभवकारिकां लोकतिरस्कारजनिकां प्रीतिं त्वया सह प्रणयं धिक् निन्दामीत्यर्थः । कदाचिदपि त्वयि मम सङ्गतं सम्मेलनं मा भूच्च न भवतु च, त्वत्सम्मेलनस्य पापजनकत्वादित्यभिप्रायः । अतएव आच्छिन्नं विपक्षेण सम्यक् छिन्नं तेनैव च निर्गुणं मौर्वीहीनं धनुरिव दयादिगुणशून्यं त्वां त्यजामि ।

अत्र पूर्णोपमालङ्कारः । प्रहर्षिणी वृत्तम् ॥४१॥

---

বিট। ধিক্, তোমারই হউক।

(প) ভৃত্য। ওরূপ বলিবেন না।

শকার। (হাস্য করিল)

বিট। তুমি হাস্য ত্যাগ কর, তোমার সঙ্গে অসৌহার্দ্দ হয়, হউক; অপমানজনক ও অসৎ এই প্রণয়কে আমি নিন্দা করি। আর যেন

शकारः । भावे । पशीद पशीद । एहि णलिणीए पविशिअ कोलेम्ह । (फ)

विटः । अपतितमपि तावत् सेवमानं भवन्तं
पतितमिव जनोऽयं मन्यते मामनार्य्यम् ।
कथमहमनुयाया त्वां हतस्त्रीकमेनं
पुनरपि नगरस्त्री-शङ्किताद्धीक्षिदृष्टम् ॥४२॥

(फ) भाव । प्रसीद प्रसीद । एहि, नलिन्या प्रविश्य क्रीडाव ।

(फ) शकार इति । नलिन्या पद्मविशिष्टाया सरस्याम् ।

अपतितमिति । अत्र जन साधारणलोकः, अपतितमपि तादृशपापाभावात् पातित्यहीनमपि माम्, भवन्तं सेवमानं सौहार्द्देन भजमानम् अतएव च पतितमिव अनार्य्यम् असाधुं मन्यते । मृतगात्र अधम, हता स्त्री वसन्तसेना येन तम्, अतएव नगरस्त्रीभिः शङ्कितम् शङ्कया भयेन अर्द्धाक्षिभिः सङ्कुचितनयनैर्दृष्टम्, एनं त्वाम् पुनरपि कथम्, अनुयायाम् अनुगच्छेयम् ? कथमपि नैवेत्यर्थः, स्त्रीघातकत्वेन पतितं त्वां पतितसंसर्गं च तत्पापसञ्चारात् "शरणागतं बालं स्त्रीहिंसकान् संवसेन्न तु" इत्याद्युक्तत्वादित्याशयः ।

কখনও তোমার সঙ্গে আমার সম্মেলন না হয়। আমি ছিন্ন ধনুর ন্যায় গুণহীন তোমাকে ত্যাগ করিলাম ॥৪১॥

(ফ) শকার। পণ্ডিত! প্রসন্ন হউন প্রসন্ন হউন। আসুন, পদ্মসরোবরে প্রবেশ করিয়া খেলা করি।

বিট। আমি পাতকী না হইলেও, তোমাকে সেবা করি বলিয়া এই সকল লোক, আমাকে পাতকীর ন্যায় অসাধু মনে করে। তুমি স্ত্রীহত্যা করিয়াছ, সুতরাং নগরের স্ত্রীগণ ভয়বশতঃ তোমাকে অর্দ্ধনয়নে দেখিবে ;—এ অবস্থায় আমি পুনরায় কি করিয়া তোমার অনুসরণ করি ? ॥৪২॥

शकारः। अले चेड़े! किं भणाशि अकज्जे किदेत्ति?। भोदु, एव्वं दाव। नानाभरणान्यवतार्य। गेण्ह एदं अलङ्कालअं, मए ताव दिण्णे, जेत्तिके वेले अलङ्कलेमि, तेत्तिकं वेलं मम अस्सं तव। (ल)

चेटः। भट्टके ज्जेव एदे शोहन्ति, किं मम एदेहिं?। (व)

शकारः। ता गच्छ, एदाइं गोणाइं गेण्हिअ मम केलकाए पाशादवालग्गपादोलिआए चिट्ठ, जाव हग्गे आअच्छामि। (श)

(ल) अरे चेट। किं भणसि अकार्यं कृतमिति?। भवतु, एवं तावत्। गृहाण इममलङ्कारं मया तावद्दत्तम्, यावत्या वेलायामलङ्करोमि, तावतीं वेलां मम अन्या तव। (व) भट्टके एव एते शोभन्ते, किं मम एतैः?।

(श) तद् गच्छ, एतौ गावौ गृहीत्वा मदीयायाः प्रासाद-बालाग्रप्रतोलिकायां तिष्ठ, यावदहमागच्छामि।

(ल) शकार इति। वेला कालं यावदिति शेषः। अलङ्करोमि स्वगात्राणीत्यर्थः।

(श) शकार इति। प्रासादे प्रासादस्याभ्यन्तरे बालाः नवनिर्म्मिता या अग्रप्रतोलिका परिभ्रमणाय उत्कृष्टरथ्या तस्याम्।

(ল) শকার। ওরে ভৃত্য! 'অকার্য্য করিয়াছি' একথা বলিতেছিস্ কেন?। হউক, এইরূপ করি। (বহুতর অলঙ্কার খুলিয়া) এই অলঙ্কারগুলি গ্রহণ কর, আমি তোকে দিলাম, আমি যতকাল ইহা দ্বারা নিজের দেহ অলঙ্কৃত করিব, ততকাল আমার থাকিবে, তদ্ভিন্ন সময় তোর হইবে।

(ব) ভৃত্য। এ গুলি আপনাতেই শোভা পায়, এ গুলি দিয়া আমার কি হইবে?।

(শ) শকার। তবে যা, এই গরু দুইটা লইয়া; আমার অট্টালিকার নূতন উৎকৃষ্ট রাস্তায় যাইয়া থাক্; যতক্ষণ আমি আসি।

चेटः। जं भट्टके आणवेदि। इति निष्क्रान्तः। (य)

शकारः। अत्तपलित्ताणे भावे गदे अदंशणं, चेड' वि पाशाद-बालग्ग-पदोलिआए णिगलपूलिदं कदुअ थावइश्शं। एव्वं मन्ते लक्खिदे भोदि। ता गच्छामि। अधवा, पेक्खामि दाव एदं, किं एशा मिदा, अधवा पुणो वि मालइश्शं। अवलोक्य। कधं शुमिदा। भोदु, एदिणा पावालएण पच्छादेमि णं। अधवा, णामङ्किदे एशे, ता के वि अज्जपुलिशे पच्चहिजाणेदि। भोदु, एदिणा वादालीपुञ्जिदेण शुक्ख पण्ण-पुडेण पच्छादेमि।

(य) यद्भट्टक आज्ञापयति।

(र) आत्मपरित्राणे भावो गतः अदर्शनम्, चेटमपि प्रासादबालाग्रप्रतोलिकायां निगडपूरितं कृत्वा स्थापयिष्यामि। एवं मन्त्रो रक्षितो भवति। तद्गच्छामि। अथवा, पश्यामि तावदेनाम्, किमेषा मृता? अथवा पुनरपि मारयिष्यामि?। कथं सुमृता। भवतु, एतेन प्रावारकेण प्रच्छादयामि एनाम्। अथवा नामाङ्कित एषः, तत् कोऽपि आर्यपुरुषः प्रत्यभिजानाति। भवतु एतेन वातालीपुञ्जितेन शुष्कपर्णपुटेन प्रच्छादयामि। भवतु,

(ल) शकार इति। भावो विद्वान् विट इत्यर्थः, आत्मनः परित्राणे मदारोप्यमाण-वसन्तसेनावधापराधात् रक्षार्थं, अदर्शनं गतः पलायित इत्यर्थः। निगडपूरितम् अभ्यन्तरे पूरयित्वा निगडावद्धमिति तात्पर्यम्। एवं कृते सति शेष, मन्त्रो वसन्तसेना-हत्यारूपो गुप्तविषयः, रक्षितः अन्यत्र प्रकाशाप्रसारित, अन्यापरज्ञानाभावादिति भावः।

(য) ভৃত্য। প্রভু, যা আদেশ করেন। (এই বলিয়া চলিয়া গেল)

(র) শকার। পণ্ডিতটা আত্মরক্ষার জন্য পলাইয়া গিয়াছে, ভৃত্যটাকেও অট্টালিকার নূতন উৎকৃষ্ট রাস্তায় শৃঙ্খলাবদ্ধ করিয়া রাখিব। এইরূপ হইলেই এ ঘটনা গুপ্ত থাকিবে। তা যাই. অথবা, ইহাকে দেখি যে—এ কি মরিয়াছে, না আবারও মারিব?। (দেখিয়া) বেশ ভাল রকমই মরিয়াছে। হউক, এই চাদরখানা দিয়া ইহাকে আচ্ছাদন

शकारः। वसन्तसेने !

अन्यस्यामपि जातौ मा वेश्या भूस्त्वं हि सुन्दरि!।
चारित्रगुणसम्पन्ने! जायेथा विमले कुले ॥४२॥

शकारः। मम केलके पुप्फकलण्डक-जिण्णुय्याणे वशन्तशेणिअं मालिअ कहिं पलाअसि?। एहि, मम आवुत्तश्श अग्गदो ववहालं देहि। इति धारयति। (ब)

(ब) मदीये पुष्पकरण्डक-जीर्णोद्याने वसन्तसेनां मारयित्वा कुत्र पलायसे। एहि, मम आवुत्तस्य अग्रतो व्यवहारं देहि।

---

अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥४२॥

अन्यस्यामिति। हे सुन्दरि! अन्यस्यां जातावपि भाविनि जन्मान्तरेऽपि त्वं वेश्या मा हि भूः नैव भव; तदापि ईदृशदुर्जनसन्तापसम्भावनायाः सम्भवादिति भावः। हे चारित्र-गुणसम्पन्ने! चारित्रं वेश्यात्वेऽपि एकमात्रसत्पुरुषानुरागित्वरूपं सच्चरित्रं गुणाः दयादाक्षिण्यादयश्च तैः सम्पन्ने पूर्णे। विमले निर्दोषे कुले जायेथाः, तथात्वे च ईदृशसन्तापसम्भावना नास्तीत्यभिप्रायः ॥४२॥

(ब) शकार इति। आवुत्तस्य भगिनीपतेः राज्ञः पालकस्य। व्यवहारं मया वसन्तसेनाया वधाभियोगे उत्थापिते, विविधसन्देहहारकमुत्तरमित्यर्थः। तथा च व्यवहारतत्त्वे कात्यायनः—

"वि-नानार्थेऽव-सन्देहे हरणं हार उच्यते।
नानासन्देहहरणात् व्यवहार इति स्मृतः ॥"

"भगिनीपतिरावुत्तः" इत्यमरः।

---

(শ্লোকের সহিত) হে বসন্তসেনে! হে সুন্দরি! তুমি পর-জন্মেও, বেশ্যা হইয়া জন্মিও না। হে চরিত্র-গুণ-সম্পন্নে! তুমি নির্মল বংশে জন্ম গ্রহণ করিও ॥৪২॥

(ব) শকার। আমার পুষ্পকরণ্ডক জীর্ণোদ্যানে বসন্তসেনাকে

विटः। आः! तिष्ठ जाल्म! इति खड्गमाकर्षति। (भ)

शकारः। सभयमपसृत्य। किं ले! भीदेशि! ता गच्छ। (म)

विटः। स्वगतम्। न युक्तमवस्थातुम्। भवतु, यत्र आर्य्य-शर्व्विलक-चन्दनकप्रभृतयः सन्ति, तत्र गच्छामि। इति निष्क्रान्तः।

शकारः। णिधणं गच्छ। अले थावलका! पुत्तका! कीलिशे मए किदे?। (य)

चेटः। भट्टके! महन्ते अकज्जे किदे। (र)

(म) किं रे! भीतोऽसि? तद्गच्छ।

(य) निधनं गच्छ। अरे स्थावरक! पुत्रक! कीदृशं मया कृतम्?।

(र) भट्टक! महदकार्य्यं कृतम्।

---

(भ) विट इति। जाल्म! असमीक्ष्यकारिन्! अथवा पामर!। "जाल्मस्तु पामरे क्रूरे पुंस्यसमीक्ष्यकारिणि" इति मेदिनी।

अत्र सम्फेटो नाम विमर्शसन्धेरङ्गम्, "सम्फेटो रोषभाषणम्" इति दर्पणलक्षणात्।

---

মারিয়া কোথায় পলাইতেছ?। আইস, আমার ভগিনীপতির সম্মুখে মোকদ্দমায় উত্তর দাও। (এই বলিয়া ধরিল)

(ভ) বিট। আ পামর! দাঁড়া। (এই বলিয়া তরোয়াল আকর্ষণ করিল)

(ম) শকার। (ভয়ের সহিত সরিয়া) ওরে! তুই কি ভীত হইয়াছিস্? তা চলিয়া যা।

বিট। (স্বগত) থাকা উচিত নহে। হউক, যেখানে আর্য্য শর্ব্বিলক ও চন্দনকপ্রভৃতি রহিয়াছেন, সেইখানে যাই। (এই বলিয়া চলিয়া গেল)

(য) শকার। গোল্লায় যাও। ওরে স্থাবরক! পুত্র! আমি কেমন কার্য্য করিয়াছি?।

(র) ভৃত্য। প্রভু! গুরুতর অকার্য্য করিয়াছেন।

तथा कृत्वा विचिन्त्य । भोदु, एव्वं दाव, सम्पदं अधिअलणं गच्छिअ ववहालं लिहाविमि । जधा अत्थश्श कालणादो शत्थवाह-चालुदत्ताकेण मम केलकं पुप्फकलण्डकं जिण्णुज्जाणं पवेशिअ वशन्तशेणिआ वावादिदे त्ति । (स)

चालुदत्तविणाशाअ कलेमि कवड' णव ।
णअलीए विशुद्धाए पशुघादं व्व दालुणं ॥४४॥

एव तावत्, साम्प्रतमधिकरणं गत्वा व्यवहारं लेखयामि । यथा, अर्थस्य कारणात् सार्थवाहचारुदत्तेन मदीयं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य वसन्तसेना व्यापादितेति ।

चारुदत्तविनाशाय करोमि कपटं नवम् ।
नगर्यां विशुद्धायां पशुघातमिव दारुणम् ॥४४॥

एतेन स्वकीयेन, प्रावारकेण उत्तरीयवस्त्रेण नामाङ्किते नामलेखाचिह्नित आर्य शिक्षित लेखाभिज्ञ इति यावत्, पुरुषो जनः ज्ञाताख्यात् वायुसमूहेन पुञ्जितः राशीकृतः तेन । व्यवहारोऽत्राभियोगपत्रम् ।

चारुदत्ते ति । विशुद्धायां निर्दोषायाम् नगर्यामुज्जयिन्याम्, पशुघातमिव छागादिपशुहत्यामिव दारुणम् चारुदत्तविनाशाय नवं कपटं छद्म करोमि । शकारोक्तत्वात् हतोपमं वाक्यमिदम् । अथवा दारुणत्वांशे सादृश्यम् , पशुघाती यथा दारुणः कपटी ऽपि तथैव दारुण इति भाव ॥४४॥

করিয়া রাখি, অথবা, ইহা নামাঙ্কিত রহিয়াছে, সুতরাং কোন শিক্ষিত লোক বুঝিতে পারিবে। হউক, এই বায়ু পুঞ্জীকৃত শুষ্কপত্রসমূহ দ্বারা আচ্ছাদন করিয়া রাখি। (তাহাই করিয়া, চিন্তা করতঃ) হউক, এইরূপ করি,—এখন কোর্টে যাইয়া মোকদ্দমা লেখাই যে, ধনের জন্য বণিক্ চারুদত্ত আমার পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে প্রবেশ করাইয়া বসন্তসেনাকে হত্যা করিয়াছে।

এই পবিত্র নগরে পশুহত্যার ন্যায়, চারুদত্তের বিনাশের জন্য ভয়ঙ্কর নূতন ছল প্রয়োগ করিব ॥৪৪॥

भोदु, गच्छामि। इति निष्क्रम्य दृष्ट्वा सभयम्। अविदमादिके! जेण जेण गच्छामि मग्गेण, तेण ज्जेव एशे दुट्टशमणके गहिद-काशाओदकं चोवलं गेण्हिअ आअच्छदि। एशे मए णाशं छिदिअ वाहिदे किदवेले कदावि मं पेक्खिअ "एदेण मालिदे" त्ति पआशइश्शदि। ता कधं गच्छामि। अवलोक्य। भोदु, एदं अद्धपड़िदं पाकालखण्डं उल्लङ्घिअ गच्छामि। (ह)

एशे म्हि तुलिद-तुलिदे लङ्का-णअलीए गअणे गच्छन्ते।
भूमीए पाआले हणूमशिहले विअ महेन्दे ॥४५॥

इति निष्क्रान्तः।

---

(ह) भवतु, गच्छामि। अविदमादिके। येन येन गच्छामि मार्गेण, तेनैव एष दुष्टश्रमणकः गृहीतकाषायोदकं चीवरं गृहीत्वा आगच्छति। एष मया नासां छित्वा वाहितः कृतवैरः कदापि मां प्रेक्ष्य 'एतेन मारिता' इति प्रकाशयिष्यति। तत् कथं गच्छामि? । भवतु, एतदर्द्धपतितं प्राकारखण्डमुल्लङ्घ्य गच्छामि।

---

(ह) भवत्विति। अविदमादिके इत्येतदनिपातयत् प्रकारात्मभाषायां भय विषाद-विस्मयद्योतकम्। मार्गेण पथा। वाहितो बहिष्कृतः अतएव कृतवैरः। अतएव "एतेन मारिता" इति मदीयं प्रकाशयिष्यतीति भावः।

---

(ह) হউক, যাই। (এই বলিয়া নির্গত হইয়া, দেখিয়া, ভয়ের সহিত) কি আশ্চর্য্য! আমি যে যে পথে যাই, সেই সেই পথেই এই দুষ্ট সন্ন্যাসীটা নির্য্যাসজলাক্ত কৌপীন লইয়া আসিয়া উপস্থিত হয়। আমি নাক কাটিয়া ইহাকে বাহির করিয়া দিয়াছিলাম, সুতরাং ইহার সঙ্গে শত্রুতা করিয়াছি, অতএব আমাকে দেখিয়া এই ব্যক্তি, হয় ত কখনও প্রকাশ করিবে যে, 'এ, বসন্তসেনাকে মারিয়া ফেলিয়াছে'। তা, কি রকমে যাই?। (দেখিয়া) হউক, এই অর্দ্ধপতিত প্রাচীরখণ্ডকে উল্লঙ্ঘন করিয়া যাই।

प्रविश्य अपटीक्षेपेण संवाहको भिक्षुः । पक्खालिदे एशे मए चीवल-खण्डे, किं णु क्खु शाहाए शुक्खावइश्शं ? । इध वाणला विलुम्पन्ति । किं णु क्खु शाहाए भूमीए ? । धूलीदोशे होदि ।

एषोऽहं त्वरित त्वरितो लङ्कानगर्यां गगने गच्छन् ।

भूम्यां पाताले हनुमच्छिखरे इव महेन्द्रे ॥४५॥

(च) प्रक्षालितमेतन्मया चीवरखण्डम्, किं नु खलु शाखायां शोषयिष्यामि ? । इह वानरा विलुम्पन्ति । किं नु खलु भूम्याम् ? । धूलिदोषो भवति । तत् कुत्र

---

एष इति । त्वरित त्वरित अतिशयेन त्वरान्वित, हनुमच्छिखरे महेन्द्रपर्व्वतशृङ्गे आदौ गच्छन्, परञ्च गगने उत्प्लवनेन गगनमार्गे गच्छन्, लङ्कानगर्यां हनूमानिव, त्वरित त्वरित एव अहम्, आदौ भूम्यां गच्छन् परञ्च महेन्द्रशिखरवत् भग्नप्राकारखण्डे गच्छन्, परमपि च पाताले पातालवन्निम्नदेशे, पतितोऽस्मीति शेषः । पुरा हनूमान् यथा भूमित उत्प्लवनेन महेन्द्रपर्व्वतं लङ्घयित्वा गगनवर्त्मना गत्वा लङ्कायां पतितः, तथा अहमपि भूमित उत्प्लवनेन प्राकारखण्डं लङ्घयित्वा गगनवर्त्मना कियद्गत्वा पातालवन्निम्नदेशे पतितोऽस्मीति भावार्थः ।

एकतो हनूमतप्रकृति प्रकारं पुनश्च नितान्तमुचितम् इति महेन्द्रशिखरे हनूमानिव इत्यादौ वक्तव्ये हनूमच्छिखरे महेन्द्रे इव इत्यादिकमाकुलोक्तत्योक्तवानिति बोध्यम् । "गाथा" इति पृथ्वीधरः ॥४५॥

(च) प्रविश्येति । शाखायां लम्बयित्वेति शेषः । विलुम्पन्ति विक्रम्य छिन्दन्ति ।

---

পূর্ব্বে হনূমান্ যেমন অত্যন্ত ত্বরান্বিত হইয়া প্রথমে মহেন্দ্রপর্ব্বতের শৃঙ্গে, পরে আকাশে গমন করিয়া, লঙ্কানগরীতে যাইয়া পড়িয়াছিলেন এই আমিও সেইরূপ প্রথমে ভূমিতে, পরে প্রাচীরখণ্ডে গমন করিয়া, পাতালের ন্যায় নীচে আসিয়া পড়িয়াছি ॥৪৫॥

(এই বলিয়া চলিয়া গেল)

(চ) সংবাহক নামক বৌদ্ধসন্ন্যাসী, যবনিকা অপসারণ না করিয়া প্রবেশ করিয়া। আমি এই কৌপীনখণ্ড প্রক্ষালন করিয়াছি; এখন

ता कहिं पशालिअ शुक्खावइश्शं। इत्य। भोदु, इध वादालीपुञ्जिदे शुक्ख-वत्त-शञ्चए पशालइश्शं। तथा कृत्वा। णमो बुद्धश्श इत्युपविशति। भोदु, धम्मक्खलाइं उदाहलामि। "पञ्च जण जेण मालिदा" इत्यादि पूर्व्वोक्तं पठति। अधवा, अलं मम एदेण शग्गेण। जाव ताए बुद्धोवाशिआए पच्चुवकालं ण कलेमि, जाए दशाणं शुवण्णकाणं किदे जूदिकलेहिं णिक्कीदे, तदो तदो पहुदि ताए किदं विअ अत्ताणअं अवगच्छामि। इत्य। किं णु क्खु पण्णोदले शमुश्शशदि?। अधवा—(च)

प्रसार्य शोषयिष्यामि?। भवतु इह वातालीपुञ्जिते शुष्कपत्रसञ्चये प्रसारयिष्यामि। नमो बुद्धाय। भवतु, धर्माक्षराणि उदाहरामि। अथवा अलं ममैतेन स्वर्गेण। यावत्तस्या बुद्धोपासिकाया प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृते द्यूतकराभ्यां निष्क्रीत, तत प्रभृति तया क्रीतमिवात्मानमवगच्छामि। किं नु खलु पर्णोदरे समुच्छ्वसिति?। अथवा—

अतएव शाखायां लम्बनं न कर्त्तव्यमिति भावः। भूम्यां प्रसार्य शुष्कं करिष्यामीति पूर्वेणान्वयः। एतेन धर्माचरणोदाहरणजन्यपुण्योत्पादितेन। बुद्धोपासिकाया सम्भाव्यमानया बुद्धोपासनया प्रज्ञाया वसन्तसेनाया इति तात्पर्यम्। सुवर्णकानां स्वर्णमुद्राणां कृते निमित्ते द्यूतकराभ्यां द्वितीयाङ्कदर्शिताभ्यां निरुद्धमाथ इति शेषः, निष्क्रीत तानि दत्त्वा निस्तारित इत्यर्थः।

গাছের ডালে কি ইহা শুকাইব?। (না) এখানে বানরে ছিঁড়িয়া ফেলিবে। তবে কি মাটীতে শুকাইব? (না) ধূলা লাগিয়া যাইবে। তা কোথায় মেলিয়া শুকাই? (দেখিয়া) হউক, বায়ু-পুঞ্জীকৃত এই পাতাগুলির উপরে মেলিয়া দিব। (তাহা করিয়া) বুদ্ধকে নমস্কার। (এই বলিয়া বসিল)। হউক, ধর্ম্মকথার উল্লেখ করি। ("যে পাঁচ জনকে মারিয়াছে" ইত্যাদি পূর্ব্বোক্ত পড়িতে লাগিল)। অথবা, আমার এই স্বর্গে

वादादवेण तत्ता चीवल-तोएण तिम्मिदा पत्ता ।
एदे वित्थिण्णपत्ता मण्णे पत्ता विअ फुलन्ति ॥४६॥

वसन्तसेना संज्ञां लब्ध्वा हस्तं दर्शयति ।

भिक्षु. । हा हा ! शुद्धालङ्कालभूशिदे इत्थिआ-हत्थे णिक्कमदि । कधं दुदिए वि हत्थे । बहुविधं निर्वर्ण्य । पच्चभिजाणामि विअ एदं हत्थं । अधवा, किं विचालेण ? शच्चं शे

वातातपेन तप्तानि चीवरतोयेन स्तिमितानि पत्राणि ।
एतानि विस्तीर्णपत्राणि मन्ये पत्राणीव स्फुरन्ति ॥४६॥

(भि) हा हा शुद्धालङ्कारभूषित स्त्रीहस्तो निष्क्रामति । कथं द्वितीयोऽपि हस्तः ? ।

---

वातेति । वातयुक्त आतपो वातातपस्तेन मध्यपदलोपी समासः । तप्तानि वातेन शोषितानि आतपेन च तप्तानीत्यर्थः चीवरतोयेन कौपीनार्द्रजलक्षरणेन स्तिमितानि आर्द्रीकृतानि एतानि पत्राणि राशीकृतपर्णानि, विस्तीर्णपत्राणि प्रसारितपक्षाणि, पत्राणि विष्णुप्रभृतेर्वाहनानि गरुडादयः पक्षिण इवेत्यर्थः स्फुरन्ति सञ्चलन्ति, इति मन्ये ।

अत्र श्रौतोपमालङ्कारः । "पत्रं स्यात् वाहने पर्णे पक्षे च शरपक्षिणाम्" इति विश्वः ।

आर्य्या जातिः ॥४६॥

---

প্রয়োজন নাই। যে পর্য্যন্ত সেই বুদ্ধোপাসিকার (বসন্তসেনার) প্রত্যুপকার না করিব, যিনি দশখানি মোহরের জন্য দ্যূতকরদিগের নির্যাতন হইতে আমাকে উদ্ধার করিয়াছিলেন, তদবধি তিনি যেন আমাকে কিনিয়া রাখিয়াছেন বলিয়া মনে করি। (দেখিয়া) পাতাগুলির ভিতরে নড়িতেছে কি ? অথবা—

পাতাগুলি প্রথমে বায়ুতে শুকাইয়াছে, রৌদ্রে গরম হইয়াছে, পরে কৌপীনের জলে ভিজিয়াছে, এখন বিস্তৃতপক্ষ বিষ্ণুপ্রভৃতির বাহন গরুড়াদির ন্যায় স্পন্দিত হইতেছে, ইহা আমি মনে করি ॥৪৬॥

(বসন্তসেনা চৈতন্য লাভ করিয়া, হস্ত প্রদর্শন করিল)।

ज्जेव हत्थे, जेण मे अभअं दिस्रं। भोदु, पेक्खिस्सं। नाट्येनोद्घाट्य दृष्ट्वा प्रत्यभिज्ञाय च। शा ज्जेव बुद्धोवाशिआ। (क)

वसन्तसेना पानीयमाकाङ्क्षति।

भिक्षुः। कधं उदअं मग्गेदि, दूले च दिग्घिआ। किं दाणिं एत्थ कलइश्शं?। भोदु, एदं चीवलं शे उवलि गालइश्शं। तथा करोति। (ख)

वसन्तसेना संज्ञां लब्ध्वा उत्तिष्ठति। भिक्षुः पटान्तेन वीजयति।

---

प्रत्यभिजानामीव एतं हस्तम्। अथवा, सत्य स एव हस्तः, येन मे अभयं दत्तम्। भवतु प्रेक्षिष्ये। सैव बुद्धोपासिका।

(ख) कथमुदकं मार्गति, दूरे च दीर्घिका। किमिदानीमत्र करिष्यामि?। भवतु एतच्चीवरमस्या उपरि गालयिष्यामि।

---

(क) भिक्षुरिति। यहं स्त्रीयोऽनलङ्कारादक्षिणि अलङ्कारे भूषित।

(ख) भिक्षुरिति। गालयिष्यामि निपीडयिष्यामि। तथा च सति चीवरात् जलं निर्गत्य अस्या पिपासां निवर्त्तयिष्यतीति भाव।

---

(क) ভিক্ষু। হায়! হায়! বিভূষ অনকাৰে অলঙ্কৃত স্ত্ৰীলোকের একখানি হাত বাহির হইতেছে। দ্বিতীয় হাতও যে দেখিতেছি। (নানারকমে দেখিয়া) এই হাত আমি চিনি, অথবা, বিচারের প্রয়োজন কি? সেই হাতই সত্য, যে আমাকে অভয় দিয়াছিল। হউক, দেখি। (অভিনয়ের দ্বারা উদ্ঘাটন করিয়া এবং চিনিয়া) সেই বুদ্ধোপাসিকাই (বসন্তসেনাই)।

(বসন্তসেনা জল প্রার্থনা করিল।)

(খ) ভিক্ষু। ইনি যে জল চাহিতেছেন, দীর্ঘীটাও দূরে, এক্ষেত্রে করি কি?। হউক, ইঁহার মুখের উপরে কৌপীনখানা নিঙড়াই। (তাহাই করিল)

वसन्त। अज्ज। को तुमं ?। (ग)

भिक्षुः। किं मं ण सुमरेदि बुद्धोवासिआ दस-सुवण्ण-णिक्कीदं ?। (घ)

वसन्त। सुमरामि, ण उण जधा अज्जो भणादि। वरं अहं उवरदा ज्जेव। (ङ)

भिक्षुः। बुद्धोवासिए। किं ण्णेदं ?। (च)

(ग) आर्य। कस्त्वम् ?।

(घ) किं मां न स्मरति बुद्धोपासिका दश सुवर्ण निष्क्रीतम् ?।

(ङ) स्मरामि, न पुनर्यथा आर्यो भणति। वरमहमुपरतैव।

(च) बुद्धोपासिके। किं न्विदम् ?।

---

(घ) भिक्षुरिति। दशसुवर्णनिष्क्रीतमिति। एतत्प्रस्तावस्तु द्वितीयाङ्केऽनुसन्धेय।

(ङ) वसन्त इति। आर्यो भवान्, यथा—दशसुवर्णनिष्क्रीतत्वेन आत्मानं भणति, न पुनरहं तथा भवन्तं आगमीत्यर्थं, अपि तु निःस्वार्थपरोपकारिभावेन कश्चित् साधुमेवाहमज्ञासीति भावः। वरम् एतदात्मकृततत्प्राप्त्युपश्रवणापेक्षया ईषत्प्रियम्। उपरतैव मृतैव। तस्मात् मन्त्रश्रवणापेक्षया मरणमेव श्रेयोऽर्थः। एतेनास्यनो मह औदार्यं ध्वनितम्।

---

(বসন্তসেনা চৈতন্য লাভ করিয়া উঠিল। ভিক্ষু বস্ত্রাঞ্চল দ্বারা বাতাস করিতে লাগিল।)

(গ) বসন্তসেনা। আর্য্য! আপনি কে?।

(ঘ) ভিক্ষু। বুদ্ধোপাসিকা, দশ খানি মোহরের কেনা আমাকে কি স্মরণ করিতে পারিতেছেন না?।

(ঙ) বসন্তসেনা। স্মরণ করিতে পারিতেছি বটে, কিন্তু আপনি যে ভাবে বলিলেন, সে ভাবে নহে। ইহা শোনা অপেক্ষা আমার মরণই ভাল ছিল।

वसन्त। सनिर्वेदम्। जं सरिसं वेसभावस्स। (छ)

भिक्षुः। उट्ठेदु उट्ठेदु बुद्धोवासिआ एदं पादव-समीव-जादं लदं ओलम्बिअ। इति लतां नामयति। (ज)

वसन्तसेना गृहीत्वा उत्तिष्ठति।

भिक्षुः। एदश्शिं विहाले मम धम्मबहिणिआ चिट्ठदि, तहिं शमश्शशिदमणा भविअ उवाशिआ गेहं गमिश्शदि। ता शेणं शेणं गच्छदु बुद्धोवाशिआ। इति परिक्रामति। दृष्ट्वा। ओशलध अज्जा! ओशलध। एशा तलुणी इत्थिआ, एगो भिक्खु त्ति शुद्धे मम एशे धम्मे। (झ)

(छ) यत् सदृशं वेशभावस्य।

(ज) उत्तिष्ठतु उत्तिष्ठतु बुद्धोपासिका एतां पादप समीपजातां लतामवलम्ब्य।

(झ) एतस्मिन् विहारे मम धर्म्मभगिनी तिष्ठति, तस्मिन् समाश्वस्तमना भूत्वा

(च) भिक्षुरिति। इह उद्याने पवनप्राप्त्यन्तरे सर्वं तत्समक्षमवस्थम, किम्।

(छ) वसन्त इति। निर्वेदेन आत्मावमाननया सहेति सनिर्वेदम्। यथा वेश्यालय-वासिनीत्यर्थः सद्भावस्य वेश्याजनधर्मस्यानर्हेति तात्पर्यम्, यत् सदृशं योग्यम् तदिद-मन्यदित्यर्थः। केनचित् लम्पटदुर्जनेन कृतमिदमित्याशयः।

(ज) भिक्षुरिति। गौरवयुक्ता स्त्रियाः शरीरस्पर्शो लोकन्यायविरुद्ध इति स्वयमनुत्थाप्य लतावलम्बनेनोत्थानमुपदिष्टमिति बोध्यम्।

(চ) ভিক্ষু। বুদ্ধোপাসিকে! এ ব্যাপারটা কি?।

(ছ) বসন্তসেনা। (নিজের অবজ্ঞার সহিত) বেশ্যালয়ে বাস করার যাহা উপযুক্ত।

(জ) ভিক্ষু। উঠুন, বৃক্ষের নিকটে উৎপন্ন এই লতাটী ধরিয়া বুদ্ধোপাসিকা উঠুন। (এই বলিয়া লতাটী নামাইল)

(বসন্তসেনা সেই লতা ধরিয়া উঠিল।)

हत्थसञ्जदो मुहसञ्जदो इन्दिअसञ्जदो शे क्खु माणुशे।
किं कलेदि लाअउले तश्श पललोओ हत्थे णिच्चले ॥४७॥

उपासिका गेहं गमिष्यति। तत् शनैः शनैः गच्छतु बुद्धोपासिका। अपसरत आर्याः। अपसरत। एषा तरुणी स्त्री, एष भिक्षुरिति शुद्धो मम एष धर्मः।

हस्तसंयतो मुखसंयत इन्द्रियसंयतः स खलु मानुषः।
किं करोति राजकुलं तस्य परलोको हस्ते निश्चलः ॥४७॥

(क) भिक्षुरिति। एतस्मिन् अदूरवर्तिनि, विहारे बौद्धाश्रमे। "विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी। समाश्वस्तमना विश्रामलाभेन सुस्थचित्ता। उपासिका भवती अस्मत्सेना। भिक्षुरपि परनिस्पृहः सन्यासी इति हेतोः शुद्धो निर्दोषः कामदोषरहितः। तथा चास्मिन् तरुणीसहचरत्वे दयाभावमेव प्रयोजकं न पुनः कामुकत्वं मत्वाशयः।

हस्तेति। परस्व स्वहस्तेनादानात् पूर्वं यो जनः इत्यर्थादायातम्। तथा च यो जनः हस्तयोः संयतः परद्रव्यापहरणराहित्येन नियतः मुखे संयतः असत्कथाशून्यतया नियतः तथा इन्द्रियेषु संयतः रूपादिषु असक्तिहीनतया नियतः स खलु स एव जनो मानुषः प्रशस्तमनुष्यः न पुनः हस्तसंयमादिरहितोऽपीति भावः। तस्य जनस्य राजकुलं राजा किं दण्डादिकं करोति किमपि नेत्यर्थः अपराधस्यैवाभावादित्याशयः। तथा तस्य हस्ते परलोकः स्वर्गादिः निश्चलः सुस्थिरः पापाभावात् केवलपुण्यसञ्चयाच्चेत्यभिप्रायः।

अत्र स खलु मानुषः इत्यनेन न पुनरन्य इत्यन्यव्यपोहनादार्थी परिसंख्या अर्थापत्तिश्च, अनयोः परस्परनिरपेक्षतया संसृष्टिः।

गाथाविशेषोऽयमिति प्राञ्चः। अथवा आर्योदाहरणमिदमिति बोध्यम् ॥४७॥

(ক) ভিক্ষু। বৌদ্ধদিগের এই আশ্রমে আমার ধর্ম্মভগিনী আছেন, সেখানে আশ্বস্তচিত্ত হইয়া, আপনি বাড়ী যাইবেন। তা আপনি আস্তে আস্তে চলুন। (এই বলিয়া পদক্ষেপ করিতে লাগিল। পরে দেখিয়া) সরুন, আর্য্যগণ। সরুন, ইনি যুবতি স্ত্রী, আর আমি সন্ন্যাসী, সুতরাং আমার এটী নির্দ্দোষ ধর্ম্ম।

इति निष्क्रान्ता । (ञ)

## इति वसन्तसेनामोटनो नामाष्टमोऽङ्कः ॥०॥ (ट)

(ञ) इतीति । पूर्वनिष्क्रान्तैर्विटादिभिः सह भिक्षुवसन्तसेनयोर्ग्रहणात् निष्क्रान्ता इति बहुवचनम् ।

(ट) इतीति । वसन्तसेनाया मोटनं गलनिपीडनं यस्मिन् सः ।

इति महामहोपाध्याय श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यविरचितायां मृच्छकटिक-टीकायां वसन्तसुषमा समाख्यायामष्टमाङ्कविवरणं समाप्तम् ॥०॥

---

যাহার হস্ত, মুখ ও ইন্দ্রিয় সংযত থাকে, সেই মানুষ। রাজকুল তাহার কি করিতে পারে? এবং পরলোক তাহার হস্তে নিশ্চল থাকে ॥৪৭॥

(ঞ) (এই বলিয়া চলিয়া গেল)

(ট) বসন্তসেনামোটন নামে অষ্টম অঙ্ক সমাপ্ত ॥০॥

# नवमोऽङ्कः ।

—:०:—

ततः प्रविशति शोधनकः । (क)

शोधनकः । आणत्तम्हि अधिअरणभोइएहिं—"अरे सोहणआ ! ववहारमण्डवं गदुअ आसणाइं सज्जीकरेहि" त्ति । ता जाव अधिअरणमण्डवं सज्जिदुं गच्छामि । परिक्रम्यावलोक्य च । एदं अधिअरणमण्डवं, एस पविसामि । प्रविश्य सम्मार्ज्य आसनमाधाय । विवित्तं कारिदं मए अधिअरणमण्डवं, विरइदा मए आसणा, ता जाव अधिअरणिआणं उण णिवेदेमि । परिक्रम्यावलोक्य च ।

(ख) आज्ञप्तोऽस्मि अधिकरणभोजकैः—"अरे शोधनक ! व्यवहारमण्डपं गत्वा आसनानि सज्जीकुरु" इति । तत् यावदधिकरणमण्डपं सज्जितुं गच्छामि । इदमधिकरणमण्डपम्, एष प्रविशामि । विविक्तं कारितं मया अधिकरणमण्डपम्, विरचितानि

(क) तत इति । शोधयति सम्मार्जन्या परिष्करोति गृहादिकमिति शोधनकः सदाख्यः कश्चिद्विचारालयभृत्यः । ण्यन्तशुधधातोर्नन्द्यादित्वाद्युप्रत्ययः, सञ्ज्ञायाञ्च कप्रत्ययः ।

(ख) शोधेति । अधिक्रियते वादिप्रतिवादिनोर्विवादमीमांसा अनुवर्त्त्य क्रियते

(क) তদনন্তর শোধনকের প্রবেশ ।

(খ) শোধনক । বিচারকপ্রভৃতি আমাকে আদেশ করিয়াছেন যে, "ওরে শোধনক ! বিচারালয়ে যাইয়া আসনগুলি সজ্জিত কর ।" সুতরাং বিচারালয় সজ্জিত করিবার জন্য যাই । (পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই বিচারালয়, এই আমি প্রবেশ করিলাম । (প্রবেশপূর্ব্বক মার্জ্জন ও আসন স্থাপন করিয়া) আমি বিচারালয় পরিষ্কার করিয়াছি, আসনও

कधं एसो रट्ठिअस्सालो दुट्ठ दुज्जण-मणुस्सो इदो एव्व आअच्छदि, ता दिट्ठिपधं परिहरिअ गमिस्सं । इत्येकान्ते स्थितः । (ख)

ततः प्रविशति उज्ज्वलवेशधारी शकारः ।

शकारः । ण्हादोऽहं सलिलजलेहि पाणिएहि
उज्जाणे उववणकाणणे णिसण्णे ।

मया आसनानि । तद् यावदधिकरणिकानां निवेदयामि । कथमेष राष्ट्रिय श्यालो दुष्ट दुर्जन मनुष्य इत एव आगच्छति । तत् दृष्टिपथं परिहृत्य गमिष्यामि ।

---

अस्मिन्निति अधिकरणे विचारालये, तस्य भोजकैर्भोगकारिभिः प्राड्विवाकप्रभृतिभिः । व्यवहारो विवादनिर्णयः तस्य मण्डपं गृहविशेषम् । तथा च व्यवहारतत्त्वे कात्यायनः—

"वि नानार्थेऽव सन्देहे हरणं हार उच्यते ।
नानासन्देहहरणात् व्यवहार इति स्मृतः ॥"

मिताक्षरायान्तु अन्यथा दर्शितम् । यथा—

"परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु ।
वाक्यात् न्यायात् व्यवस्थानं व्यवहार उदाहृतः ॥"

विविक्तं पवित्रं सम्मार्जनेन धूलितृणाद्यपगमात् परिष्कृतम् कारितं सम्मार्जनया इति शेषः । अधिकरणिकानां प्राड्विवाकादीनां समीपे, निवेदयामि एतत् परिष्कारकरणादिकृतान्तमिति शेषः । राष्ट्रं राज्यमर्हतीति राष्ट्रियो राजा तस्य श्यालः, दुष्टः अन्याय्याचरणादिनानादोषविशिष्टः दुर्जनः स्वभावत एव खलस्तदुभयरूपी मनुष्य इत्यर्थः । तदिति । अन्यथा यदि मां प्रत्यपि किञ्चिदन्याय्यमाचरेदिति भावः ।

---

সজ্জিত করিয়াছি। তা এখন যাইয়া বিচারকপ্রভৃতিকে জানাই। (পদক্ষেপপূর্ব্বক দর্শন করিয়া) দুষ্ট অথচ খলস্বভাব রাজার শালা এই যে এই দিকেই আসিতেছে। তা উহার দৃষ্টিপথ পরিত্যাগ করিয়া যাই। (এই বলিয়া এক দিকে থাকিল)

তাহার পর উজ্জ্বলবেশধারী শকারের প্রবেশ।

णालीहिं सह जुवदीहि इत्थिआहि
गन्धव्वे विअ सुहिदेहि अङ्गकेहिं ॥१॥ †

खणेण गण्ठी खणजूलके मे खणेण वाला खणकुन्तला वा । (१)
खणेण मुक्के खण उद्धचूड़े चित्ते विचित्ते हगे लाअशाले ॥२॥

---

स्नातोऽहं सलिलजलैः पानीयैः उद्याने उपवनकानने निषण्णः ।
नारीभिः सह युवतीभिः स्त्रीभिः गन्धर्व इव सुहितैरङ्गकैः ॥१॥
क्षणेन ग्रन्थिः क्षणजूटको मे क्षणेन वाला क्षणकुन्तला वा ।
क्षणेन मुक्ताः क्षण ऊर्द्ध्वचूडा चित्रो विचित्रोऽहं राजश्यालः ॥२॥

---

स्नात इति । सुहितैः सुसम्बद्धैः, अङ्गकैः स्वपदाद्यवयवैः विशिष्ट इत्यर्थः । अहम् उद्याने निषण्णः स्थितः सन्, गन्धर्व इव, युवतीभिः स्त्रीभिः सह, पानीयैः सलिलैः स्नातः स्नानं कृतवानस्मि ।

सलिलेत्यादिकं पुनरुक्तम् । प्रहर्षिणी वृत्तम् ॥१॥

क्षणेनेति । क्षणेन ग्रन्थिः केशानां बन्धनम्, क्षणं जूटकम् उपरि स्तूपीकृत्य बन्धनं यस्य स तादृशो मे मम केशपाश इति शेषः । क्षणेन वाला स्वाभाविका एव केशाः । क्षणकुन्तला वा इत्यस्यापि अयमेवार्थः इति पौनरुक्त्यम् । क्षणेन मुक्ताः परितः स्खलिताः, क्षणे कदाचित् ऊर्द्ध्वे उपरिभागे चूडा दीर्घवर्त्तीबद्धः केशपाश इत्यर्थः, अतएव राजश्यालोऽहम्, चित्रः बहुरूपत्वादाश्चर्यः । विचित्रोऽपि स एवेति पुनरुक्तमेतत् पदम् ।

उपजातिर्वृत्तम् ॥२॥

---

আমার অঙ্গসকল, দৃঢ় সম্বদ্ধ, আমি উদ্যানে বসিয়া, জলদ্বারা যুবতি স্ত্রী কর্ত্তৃক, গন্ধর্ব্বের ন্যায় স্নান করিয়াছি ॥১॥

আমার চুল ক্ষণকাল নীচের দিকে বাঁধা থাকে, ক্ষণকাল মাথার

---

† अलिअ जणेहिं जुवदीहिं अङ्गवदि अविहि द एहि ।

(१) खणेण मे चञ्चलकुन्तला वा ।

अवि अ। बिश-गण्ठि-गब्भं पविट्ठेण विअ कीडएण अन्तलं मग्गमाणेण पाविदं मए महदन्तलं। ता कश्श एदं किविण-चेट्ठिअं पाडइश्शं?। स्मृत्वा। आ श्रुमलिदं मए,—दलिद्द-चालुदत्तश्श एदं किविण-चेट्ठिअं पाडइश्शं। अण्णं च, दलिद्दे क्खु शे, तश्श शव्वं शम्भावीअदि। भोदु, अधिअलण-मण्डवं गदुअ अग्गदो ववहालं लिहावइश्शं। जधा चालुदत्ताकेण वशन्तशेणिआ मोडिअ मालिदा। ता जाव अधिअलण-मण्डवं ज्जेव गच्छामि। परिक्रम्यावलोक्य च। एदं तं अधिअलण-

अपि च। बिस ग्रन्थि गर्भं प्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम्। तत् कस्येदं कृपणचेष्टितं पातयिष्यामि?। आः, स्मृतं मया, दरिद्रचारुदत्तस्येदं कृपणचेष्टितं पातयिष्यामि। अन्यच्च, दरिद्रः खलु सः, तस्य सर्वं सम्भाव्यते। भवतु अधिकरणमण्डपं गत्वा अग्रतो व्यवहारं लेखयिष्यामि। यथा चारुदत्तेन मोटयित्वा

(३) अपि चेति। बिसस्य मृणालस्य ग्रन्थेः पर्वदेशस्य गर्भे अभ्यन्तरे प्रविष्टेन, कीटकेन क्षुद्रकीटेनेव मया, अन्तरं बहिर्गमनच्छिद्रम् अपराधञ्च मार्गमाणेन अन्विष्यता सता, महदन्तरं छिद्रं वसन्तसेनाहत्यात्मकोऽपराध इत्यर्थः प्राप्तम्। कस्य जनस्य उपरीति शेषः, इदं वसन्तसेनाया हत्यारूपम्, कृपणस्य क्षुद्रस्य चेष्टितं व्यवहारम्, पातयिष्यामि आरोपयिष्यामि। तस्य चारुदत्तस्य सर्वं स्त्रीहत्यथापि धनग्रहणादिकम्।

উপরে বাঁধা থাকে, ক্ষণকাল চুলই থাকে, ক্ষণকাল খুলিয়া দেওয়া হয় এবং ক্ষণকাল উপরে চূড়া বাঁধা হয়। সুতরাং আমি রাজার শালা বিচিত্ররূপী ॥২॥

আরও, মৃণালের গিঁটের ভিতরে প্রবিষ্ট কীট যেমন বাহির হইবার জন্য ফাঁক খোঁজে, আমিও সেইরূপ খুঁজিতে থাকিয়া, গুরুতর ফাঁক পাইয়াছি। তা, এই নিকৃষ্ট ব্যবহারের দোষ, কাহার উপরে আরোপিত করিব?। স্মরণ( করিয়া )ও। আমার স্মরণ হইয়াছে, দরিদ্র চারুদত্তের উপরে এই

मण्डवं एव्व पविशामि। प्रविश्यावलोक्य च। कधं आशणाइं दिस्साइं चिट्ठन्ति। जाव आअच्छन्ति अधिअलणभोइआ, दाव एदश्शिं दुव्वचत्तले मुहुत्तअं उवविशिअ पड़िवालइश्शं। तथा स्थित। (ग)

शोधनकः। अन्यतः परिक्रम्य पुरो दृष्ट्वा। एदे अधिकरणिआ आअच्छन्ति। ता जाव उवसप्पामि। इत्युपसर्पति। (घ)

ततः प्रविशति श्रेष्ठि-कायस्थादि-परिवृतोऽधिकरणिकः। (ङ)

---

वसन्तसेना मारिता। तद्यावदधिकरणमण्डपमेव गच्छामि। एतत्तदधिकरणमण्डपम्, अत्र प्रविशामि। कथमासनानि दत्तानि तिष्ठन्ति। यावदागच्छन्ति अधिकरणभोजकाः, तावदेतस्मिन् दूर्वाचत्वरे मुहूर्त्तमुपविश्य प्रतिपालयिष्यामि।

(घ) एते आधिकरणिका आगच्छन्ति। तद् यावदुपसर्पामि।

---

व्यवहारं विवादविषयम्। मोटयित्वा गले पीडयित्वा। दूर्वाचत्वरे दूर्वान्वितप्राङ्गणे। प्रतिपालयिष्ये प्रतीक्षां करिष्ये।

(ङ) ततः इति। श्रेष्ठी वणिक्, तत्प्रवेशो द्रव्यमूल्यादिनिर्द्धारणार्थः। कायस्थः

---

নিকৃষ্ট ব্যবহারের দোষ আরোপিত করিব। আরও সে দরিদ্র, সুতরাং তাহার সকলই সম্ভবপর হয়। হউক, বিচারালয়ে যাইয়া প্রথমেই মোকদ্দমা লেখাই যে, চারুদত্ত গলায় টিপিয়া বসন্তসেনাকে মারিয়া ফেলিয়াছে। তা' বিচারালয়েই যাই। (পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই সেই বিচারালয়, ইহাতে প্রবেশ করি। (পদক্ষেপপূর্ব্বক দর্শন করিয়া) আসনগুলি যে দেওয়া রহিয়াছে। যাবৎ বিচারকপ্রভৃতি আইসেন, তাবৎ এই দূর্বাময় উঠানে কিছুকাল বসিয়া তাঁহাদের প্রতীক্ষা করি। (সেই ভাবে থাকিল)

(ঘ) শোধনক। (অন্য দিকে পাদক্ষেপ করিয়া, সম্মুখে দৃষ্টিপাত করিয়া) এই বিচারকপ্রভৃতি আসিতেছেন, তা উঁহাদের নিকট যাই। (এই বলিয়া নিকটে গেল)

अधि । भो भोः श्रेष्ठि-कायस्थौ ! ।

श्रेष्ठि-कायस्थौ (१) । आणवेदु अज्जो । (च)

अधि । अहो ! व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः । (छ)

छन्नं कार्य्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
स्वान् दोषान् कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्ष-वर्द्धितबलैर्दोषैर्नृपः स्पृश्यते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥३॥

(च) आज्ञापयतु आर्य्य ।

---

स्वनामख्यातो जातिविशेषः, तत्प्रवेशश्च वादप्रतिवादादिलेखनार्थं । आदिशब्दात् विविधदेशभाषाभिज्ञादिपरिग्रहः ।

(छ) अधीति । अधिकरणिकैर्मादृशैः प्राड्विवाकैर्विचारकैरिति यावत्, व्यवहारपराधीनतया प्राक्प्रस्तुतविवादमीमांसाया तत्त्वनिर्णयव्यग्रचित्ततया, परयोस्तदानीमुपस्थितयोर्वादिप्रतिवादिनोः, चित्तग्रहणं मनोभावज्ञानम्, दुष्करम् ।

छन्न इत्याह छन्नमिति । पुरुषा वादिनः प्रतिवादिनश्च जनाः, न्यायेन सत्यतत्त्वेन, दूरीकृतं परित्यक्तम् अन्याय्यमपीत्यर्थः, कार्य्यमभियोगादिकम् छन्नं न्यायेनावृतं यथा स्यात् तथा, उपक्षिपन्ति अधिकरणे उपस्थापयन्ति । तथा रागेण आत्मनो निर्दोषत्वप्रति-

---

(ঙ) তদনন্তর বণিক্ ও কায়স্থাদি পরিবেষ্টিত অবস্থায় বিচারকের প্রবেশ।

অধিকরণিক। হে শ্রেষ্ঠি কায়স্থ!

(চ) শ্রেষ্ঠী ও কায়স্থ। আর্য্য! আদেশ করুন।

(ছ) অধিকরণিক। হায়! তত্ত্বনির্ণয়ে নিবিষ্টচিত্ত থাকেন বলিয়া, বিচারকদিগের পক্ষে অন্যের অভিপ্রায় বোঝা বড়ই দুষ্কর। কারণ—

---

(१) सौ।

अपि च।

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान् दोषान् कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम्।
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्वते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥४॥

पादनेच्छया अभिभूता आक्रान्ता सन्तः, पुरुषा इति पूर्वेणान्वयः, स्वयम्, अधिकरणे विचारालये, स्वान् स्वकीयान् दोषान्, न कथयन्ति। अतएव च परचित्तग्रहणं दुष्करमित्याशयः। तेन चाधिकरणिकानां यथार्थविचारासामर्थ्यं दोषान्तरमप्याह सन्तीति। पक्षौ वादिपक्षः अपरपक्षः प्रतिवादिपक्षः ताभ्यां वर्द्धितं बलम् अपकारजननसामर्थ्यं येषां ते, तैरयथार्थनिर्णयकृद्भिः, दोषैः पापैः, नृपः स्पृश्यते सम्बध्यते। राजप्रतिनिधिभूतानामधिकरणिकानां अधर्मेण मूलस्य राज्ञोऽपि अधर्मसम्भवादिति भावः। तथा सङ्क्षेपात् पराजितपक्षेण दोषारोपात्, द्रष्टुर्व्यवहारदर्शिनो विचारकस्य, अपवाद एव सुलभः, किन्तु गुणो यशः, दूरत एव तिष्ठतीति शेषः। पराजितपक्षेण सर्वत्र दोषप्रख्यापनात् विजयिपक्षेण च सहसा गुणाप्रकाशनादित्यभिप्रायः।

अत्र निन्दाप्रशंसारूपयोरपवादगुणयोरेकत्र सङ्घटनया विषमालङ्कारः।

शार्दूलविक्रीडितं वृत्तम् ॥४॥

उक्तप्रायमेवार्थं किञ्चित्प्रकारान्तरेणाह छन्नमिति। कुपिताः परस्परं क्रुद्धाः जनाः, न्यायेन दूरीकृताः हीनाः अन्यायपरायणाः सन्तः, दोषं स्वस्वापराधम्, छन्नं गुणेनावृतं यथा स्यात्तथा उदाहरन्ति अधिकरणे प्रकाशयन्ति। परन्तु न दोषं अपवादादिभिरूपमेव एवेति

লোক সকল, অন্যায় কার্য্যকেও ন্যায়ের আবরণে আবৃতভাবে উপস্থিত করে এবং নিজেদের নির্দ্দোষিতা প্রতিপাদন করিবার ইচ্ছায় নিজেরা নিজেদের দোষ, বিচারালয়ে প্রকাশ করে না। বাদি ও প্রতিবাদি-পক্ষকর্তৃক পাপের প্রভাব বর্দ্ধিত হয়, সেই পাপ রাজাকে যাইয়া স্পর্শ করে ;—এদিকে পরাজিতপক্ষ দোষারোপ করে বলিয়া, বিচারকের পক্ষে নিন্দাই সুলভ হয়, কিন্তু প্রশংসা দূরে যায় ॥৪

यतः । अधिकरणिकः खलु—

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधनः
तुल्यो मित्र-पर-स्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः ।
क्लीवान् पालयिता शठान् व्यथयिता धर्म्योऽतिलोभान्वितो
द्वार्भावे परतत्त्व-बद्ध हृदयो राज्ञश्च कोपापहः ॥५॥

भावः। तथा सन्तः सज्जना अपि, स्वान् दोषान्, अधिकरणे न कथयन्ति ; अतएव ते ध्रुवं निश्चितमेव नष्टा अधःपातं गताः, भवन्तीति शेषः, अन्यापकारणलम्पटा अपि मिथ्यावाद-तुल्यत्वादित्याशयः। तादृशाः के इत्याह—स्वपक्षापरपक्षयोर्दोषैश्च दुरभिसन्ध्यादिना सहिताः समन्विता ये जनाः, पापानि मिथ्याभाषणादिजनितानि, सङ्कुर्वन्ते सम्यग् विदधति, ते नष्टा इति पूर्वेणान्वयः। तेन च सर्वत्र तत्त्वनिर्णयासमर्थतया विचारकस्य निन्दैव सुलभा इत्याह सङ्क्षेपात् पराजितपक्षेण आरोपात्, द्रष्टुर्व्यवहारदर्शिनो विचारकस्येति यावत्, अपवाद एव सुलभः, किन्तु गुणः प्रशंसा, दूरत एव तिष्ठतीति शेषः।

अत्र चतुर्थचरणार्थं प्रति पूर्ववाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गं पूर्व-वर्णियमालङ्कारस्य, अनयोरङ्गाङ्गिभावेन सङ्करः। ये इति यच्छब्दस्य उत्तरवाक्यगतत्वेन न तच्छब्दापेक्षा।

सङ्कुर्वन्त इति भूषणाभावात् "सुड्भूषणे सम्पर्य्युपात्" इति न सुडागमः।

शार्दूलविक्रीडितं वृत्तम् ॥४॥

আরও, পরস্পর ক্রুদ্ধ লোক সকল, অন্যায় পরায়ণ হইয়া দোষকে গুণের আবরণে আবৃত করিয়া উল্লেখ করে; আর, সাধু লোকেরাও, বিচারালয়ে নিজ দোষ বলেন না, সেই পাপে তাঁহারা নিশ্চয়ই অধঃপাতে যান। যাহারা স্বপক্ষ ও পরপক্ষের দুরভিসন্ধিপ্রভৃতি দোষযুক্ত হইয়া, মিথ্যা কথা দ্বারা পাপ করে, তাহারাও পূর্ব্ববৎ অধঃপাতে যায়। ইহাতেও, পরাজিতপক্ষ দোষারোপ করে বলিয়া, বিচারকের নিন্দাই সুলভ হয়, প্রশংসা দূরে যায় ॥৪॥

श्रेष्ठि कायस्थौ। अज्जस्स वि णाम गुणे दोसो त्ति वुच्चदि। जइ एव्वं ता चन्दालोएवि अन्धआरो त्ति वुच्चदि। (ज)

शास्त्रज्ञ इति। शास्त्रज्ञः धर्मनीत्यादिशास्त्राभिज्ञः कपटस्य वादिप्रतिवादिप्रयुक्तस्य छलस्य अनुसारे अवधारणे कुशलो दक्षः, कथमन्यथा न्याय्यं विचारयेदिति भावः। वक्ता वाक्पटुः, इतरथा कथं वादिप्रतिवादिनौ सकाशात् वाचा यथार्थमर्थमाविष्कुर्यादित्याशयः। किन्तु क्रोधनः क्रोधशीलो न च भवेत्, क्रोधस्य बुद्धिवैपरीत्यजनकतया विचारस्य अन्याय्यतासम्भवादित्यभिप्रायः। मित्रे सुहृत्पक्षे परे शत्रुपक्षे स्वके च पुत्रादिषु तुल्यः तुल्यदर्शी, अन्यथा विचारस्यान्याय्यता स्यादिति भावः। चरितं वादिप्रतिवादिनोर्व्यवहारम् दृष्ट्वैव सम्यगवधार्य्यैव दत्तमुत्तरं जयपराजययोर्निर्द्धारणवाक्यं येन सः। क्लीबान् विक्रमरहितान् दुर्बलानित्यर्थः पालयिता सत्पालनशीलः शठान् धूर्तान् व्यथयिता दण्डेन तत्पीडनशीलः धर्म्यो धर्मादनपेतः धार्मिके जने अतिलोभान्वितः तत्संसर्गोत्का वतीवाभिलाषान्वितः द्वारे उपायस्य परकीयवाक्यच्छलादेः भावे विद्यमानत्वे सति परस्य वादिनः प्रतिवादिनो वा तत्त्वे याथार्थ्यावबोधे यत्नम् अभिनिवेशितं हृदयं यस्य सः तथा राज्ञः स्वनियोगकर्त्तुर्नृपतेः कोपम् अपहन्ति सुविचारेण निवर्त्तयतीति सः तथाविधश्च भवेदित्याशयः।

"क्लीबो विक्रमहीनेऽपि" इति हलायुधः। "उपाये निर्गमे द्वारम्" इति त्रिकाण्डशेषः, द्वारार्थोऽयं न्यायान्तरम्।

शार्दूलविक्रीडितं वृत्तम् ॥५॥

যে হেতু, বিচারক শাস্ত্রজ্ঞ, ছল বুঝিতে সক্ষম এবং বক্তা হইবেন, কিন্তু ক্রোধী হইবেন না, মিত্র, শত্রু ও স্বজনের প্রতি সমানদর্শী হইবেন, লোকের আচরণ দেখিয়াই উত্তর দিবেন, দুর্বলদের রক্ষা করিবেন, দণ্ড করিয়া ধূর্ত্তকে ব্যথিত করিবেন, ধার্ম্মিকের প্রতি প্রলোভিত হইবেন, উপায় থাকিলে পরের তত্ত্ব নির্ণয় করিবার জন্য মনকে অভিনিবিষ্ট রাখিবেন এবং রাজার ক্রোধ পরিত্যাগ করিয়া চলিবেন ॥৫॥

अधि । भद्र ! शोधनक ! अधिकरणमण्डपस्य मार्गमादेशय ।

शोधनकः । एदु एदु अधिअरणभोइओ एदु । (झ)

इति परिक्रामन्ति । (ञ)

शोध । एदं अधिअरणमण्डवं, ता पविसन्तु अधिअरणभोइआ । (ट)

सर्व्वे च प्रविशन्ति ।

अधि । भद्र शोधनक ! वहिर्निष्क्रम्य ज्ञायताम्—कः कः कार्य्यार्थी इति । (ठ)

---

(ज) आर्य्यस्यापि नाम गुणे दोष इत्युच्यते, यद्येवं, तदा चन्द्रालोकेऽपि अन्धकार इत्युच्यते ।

(झ) एतु एतु अधिकरणभोजक एतु ।

(ट) एतदधिकरणमण्डपम्, तत्प्रविशन्तु अधिकरणभोजकाः ।

---

(ज) गृहीति । तथा च चन्द्रालोके अन्धकार इव भवतो गुणेऽपि कथमपि दोषो न सम्भवतीति भावः । अतएवात्र अवस्तुसम्बन्धा निदर्शनालङ्कारः ।

(ञ) इतीति । परिक्रामन्ति अधिकरणमण्डपप्रवेशाय पादक्षेपं कुर्व्वन्ति सर्व्वे इति शेषः ।

(ठ) अधीति । कार्य्यार्थी उद्देश्यभूतविचारप्रार्थी ।

---

(জ) শ্রেষ্ঠী ও কায়স্থ । লোক যদি আপনারও গুণের বেলায় দোষ বলে, তবে চন্দ্রলোকেও অন্ধকার আছে ইহা বলিবে ।

অধিকরণিক । ভদ্র । শোধনক । বিচারালয়ের পথ বলিয়া দাও ।

(ঝ) শোধনক । আসুন আসুন, বিচারক আসুন ।

(ঞ) (ইহার পরে সকলে পদক্ষেপ করিতে লাগিল)

(ট) শোধনক । এই বিচারালয়, তা বিচারক প্রবেশ করুন ।

(সকলে প্রবেশ করিল।

शोध। जं अज्जो आणवेदि। इति निष्क्रम्य। अज्जा! अधिअरणिआ भणन्ति—"को को इध कज्जत्थी" त्ति। (ड)

शकारः। सहर्षम्। उवत्थिए अधिअलणिए। साटोपं परिक्रम्य। हग्गे वलपुलिशे मणुश्शे वाशुदेवे लट्ठिअशाले लाअशाले कज्जत्थी। (ढ)

शोध। ससम्भ्रमम्। हीमादिके! पढ़मं ज्जेव रट्ठिअशाले कज्जत्थी। भोदु, अज्ज! मुहुत्तं चिट्ठ, दाव अधिअरणिआणं णिवेदेमि। उपगम्य। अज्ज! एसो क्खु रट्ठिअशालो कज्जत्थी ववहारं उवत्थिदो। (ण)

(ड) यदार्य्य आज्ञापयति। आर्य्याः! अधिकरणिका भणन्ति—"कः क इह कार्य्यार्थी" इति।

(ढ) उपस्थितः अधिकरणिकः। अहं वरपुरुषः मनुष्यः वासुदेवः राष्ट्रियश्यालः राजश्यालः कार्य्यार्थी।

(ण) कष्ट! प्रथममेव राष्ट्रियश्यालः कार्य्यार्थी। भवतु, आर्य्य! मुहूर्त्तं तिष्ठ,

(ङ) शकार इति। साटोपं सदम्भम्, परिक्रम्य कियन्तं पदक्षेपं कृत्वा।

(ঠ) অধিকরণিক। ভদ্র! শোধনক! বাহিরে যাইয়া জান—"কে কে বিচারার্থী আছে।"

(ড) শোধনক। আর্য্য যাহা আদেশ করেন। (ইহার পর বাহিরে যাইয়া) মহাশয়গণ! বিচারক বলিতেছেন—"এখানে কে কে বিচারার্থী আছেন।"

(ঢ) শকার। (আনন্দের সহিত) বিচারক উপস্থিত হইয়াছে। (গর্ব্বের সহিত পদক্ষেপ করিয়া) প্রধান পুরুষ, মনুষ্য, বাসুদেব, রাষ্ট্রিয়শ্যালক, রাজার শালা আমি বিচারার্থী।

अधि। कथं प्रथममेव राष्ट्रियश्यालः कार्य्यार्थी। यथा— सूर्य्योदये उपरागो महापुरुषविनिपातमेव कथयति। शोधनक! व्याकुलेनाद्य व्यवहारेण भवितव्यम्। भद्र! निष्क्रम्य उच्यताम्—गच्छ, अद्य न दृश्यते तव व्यवहार इति। (त)

तावदधिकरणिकाना निवेदयामि। आर्य्याः! एष खलु राष्ट्रियश्यालः कार्य्यार्थी व्यवहारे उपस्थितः।

---

(थ) शोध इति। हीमादिकं इति देशीयभाषायां विस्मयविषादसूचकमव्ययम्। उदरम्भरैरखिलकार्य्यरहितस्यापि शकारस्य कार्य्यार्थितेति विस्मयः, नितान्तदुर्जनस्य किमनिष्टं विधास्यतीत्याशङ्कया च विषाद इति बोध्यम्। आर्य्येति शकारस्यैव सम्बोधनम्। उपगम्य अधिकरणिकाना समीपं इति शेषः। व्यवहारे विचारार्थं।

(त) अधि इति। उपरागो राहुणा सूर्य्यस्येव ग्रहणम्। महापुरुषस्य प्रधानजनस्य विनिपातं विध्वंसम्, कथयति कथनवत् स्पष्टं सूचयति। तथा अत्यन्तदुर्जनस्य प्रथममेव व्यवहारप्रार्थना कस्यचित् महापुरुषस्य विनिपातमेव कथयतीति वाक्यार्थः। व्यवहारेण विचारेण, व्याकुलेन अस्यैव शकारस्य दुर्व्यवहारात् विषमेण। यथेत्याद्युक्तार्थे प्रमाणं यथा ज्यौतिषम्—

"प्रातर्य्य इ सूचयति विनाशं रवेरुपरागस्य जनस्य सद्यः।"

---

(থ) শোধনক। (ব্যস্ততার সহিত) হায়! প্রথমেই রাজার শালা বিচারার্থী। হউক, মহাশয়! একটু কাল থাকুন, আমি বিচারককে জানাইয়া আসি। (বিচারকের নিকট যাইয়া) আর্য্য! এই রাজার শালা বিচারার্থী হইয়া বিচারালয়ে উপস্থিত হইয়াছেন।

(ত) অধিকরণিক। হায়! প্রথমেই রাজার শালা বিচারার্থী!। উদয়কালীন সূর্য্যগ্রহণ মহাপুরুষের ধ্বংস সূচনা করে। শোধনক! অদ্যকার বিচার বিষম হইবে। সুতরাং ভদ্র! (শোধনক!) তুমি নির্গত হইয়া বল যে,—'যান, আজ আপনার বিচার্য্য বিষয়ের আলোচনা করা হইবে না।"

शोध। जं अज्जो आणवेदि। निष्क्रम्य शकारमुपगम्य। अज्ज! अधिअरणिआ भणन्ति—"अज्ज गच्छ, ण दीशदि तव ववहारो।" (ध)

शकारः। सक्रोधम्। किं ण दीशदि मम ववहाले?। जइ ण दीशदि, तदो आवुत्तं लाआणं पालअं बहिणीवदिं विण्णविअ बहिणिं अत्तिकं च विण्णविअ एदं अधिअलणिअं दूले फेलिअ एत्थ अण्णं अधिअलणिअं ठावइश्शं। इति गन्तुमिच्छति। (द)

शोध। अज्ज! रट्ठिअशालअ! मुहुत्तअं चिट्ठ, दाव

(ध) यदार्य आज्ञापयति। आर्य। अधिकरणिका भणन्ति—"आर्य गच्छ, न दृश्यते तव व्यवहारः।"

(द) किं न दृश्यते मम व्यवहारः?। यदि न दृश्यते तदा आवुत्तं राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीं मातरञ्च विज्ञाप्य एतमधिकरणिकं दूरीकृत्य अत्र, अन्यमधिकरणिकं स्थापयिष्यामि।

(द) शकार इति। आवुत्त भगिनीपतिम्। "भगिनीपतिरावुत्त" इत्यमरः। अत्र विभक्ति शकारस्वभावादुपपन्ना।

(ध) শোধনক। আর্য্য যাহা আদেশ করেন। (নির্গত হইয়া, শকারের নিকট যাইয়া) মহাশয়! বিচারক বলিলেন যে, "আজ যান, আজ আপনার বিচার্য্য বিষয়ের আলোচনা করা হইবে না।"

(দ) শকার। (ক্রোধের সহিত) কি! আমার বিচার্য্য বিষয়ের আলোচনা করিবে না?। যদি আলোচনা না করে, তবে ভগিনীপতি রাজা পালককে জানাইয়া এবং ভগিনীকে ও মাতাকে জানাইয়া, এই বিচারককে দূর করিয়া দিয়া, এখানে অন্য বিচারক স্থাপন করিব। (এই বলিয়া যাইতে ইচ্ছা করিল)

अधिअरणिआणं णिवेदेमि। अधिकरणिकमुपगम्य। एसो रट्ठिअ-शालो कुविदो भणादि। इति तदुक्तं भणति। (ध)

अधि। सर्व्वमस्य मूर्खस्य सम्भाव्यते। भद्र! उच्यताम्— आगच्छ, दृश्यते तव व्यवहारः। (न)

शोध। शकारमुपगम्य। अज्ज! अधिअरणिआ भणन्ति— आअच्छ दीशदि तव ववहारो। ता पविशदु अज्जो। (१) (प)

शकारः। पढमं भणन्ति—"ण दीशदि, शम्पदं दीशदि" त्ति। ता णाम भीदभीदा अधिअलणभोइआ। जेत्तिअं हग्गे

(ध) आर्य्य। राष्ट्रियश्याल! मुहूर्त्तकं तिष्ठ, तावदधिकरणिकानां निवेदयामि। एष राष्ट्रियश्यालः कुपितो भणति।

(प) आर्य्य! अधिकरणिका भणन्ति—"आगच्छ, दृश्यते तव व्यवहारः"। तत् प्रविशतु आर्य्यः।

(फ) प्रथमं भणन्ति—"न दृश्यते साम्प्रतं दृश्यते" इति। तत् नाम भीतभीता

(न) अधि इति। व्यवहारो व्यवहारविषय, दृश्यते पर्य्यालोच्यते।

(ধ) শোধনক। আর্য্য! রাজশ্যালক! একটু কাল থাকুন, বিচারককে জানাইয়া আসি। (বিচারকের নিকট যাইয়া) এই রাজার শালা ক্রুদ্ধ হইয়া বলিতেছেন। (এই বলিয়া শকারের উক্তিগুলি বলিল)

(ন) অধিকরণিক। এ মূর্খের সকলই সম্ভাবনা করা যায়। ভদ্র! বল যাইয়া যে,—"আইস, তোমার বিচার্য্য বিষয়ের আলোচনা করা হইবে।"

(প) শোধনক। (শকারের নিকট যাইয়া) আর্য্য! বিচারক বলিলেন—"আসুন, আপনার বিচার্য্য বিষয়ের আলোচনা করিব।" সুতরাং আপনি প্রবেশ করুন।

(१) अन्य। अधिअरणिआ भणन्ति—आअच्छ इतिमात्र, पाठ. क्वचित्।

भणिश्शं तेत्तिअं पत्तिआवइश्शं । भोदु, पविशामि । प्रविश्योपसृत्य शुशुहं अम्हाणं, तुम्हाणं पि शुहं देमि ण देमि अ । (फ)

अधि । स्वगतम् । अहो ! स्थिरसंस्कारता व्यवहारार्थिनः । प्रकाशम् । उपविश्यताम् । (ब)

शकारः । आ ! अत्तणकेलका एशे भूमी । ता जहिं मे लोअदि तहिं उवविशामि । श्रेष्ठिनं प्रति । एशे उवविशामि । शोधनकं प्रति । णं एत्थ उवविशामि । इत्यधिकरणिकमस्तके हस्तं दत्त्वा । एशे उवविशामि । इति भूमौ उपविशति । (भ)

---

अधिकरणभोजका ! यावदहं भणिष्यामि, तावत् प्रत्याययिष्यामि । सुसुखमस्माकम्, युष्माकमपि सुखं ददामि न ददामि च ।

---

(फ) शकार इति । प्रथममित्यादिकं स्वगतमदुक्तम्, प्रत्याययिष्यामि विश्वासयिष्यामि विश्वस्तवदेव कारयिष्यामीत्यर्थः । ददामि मन्मतानुसरणे दातुमर्हामि, न ददामि च मन्मताननुसरणे नापि दातुमर्हामीत्यर्थः । एतेनात्मनः प्रभुत्वातिशयसूचनेन स्वमताननुसरणे युष्माकं महाविपत्तिरिति सूच्यते ।

(ब) अधि इति । अहो आश्चर्यं । व्यवहारार्थिनो विचारप्रार्थिनः अस्य शकारस्येति शेषः, स्थिरसंस्कारता सर्वथा सुखदुःखविधानाय आत्मन एव सर्वतोमुखी क्षमतास्तीति विषये दृढधारणा । सर्वथैवासम्भवेयमिति भावः ।

---

(ফ) শকার। প্রথমে বলিল, "আলোচনা করিব না" এখন বলিতেছে "আলোচনা করিব"। সুতরাং আমি মনে করি যে, বিচারক অত্যন্ত ভীত হইয়াছে। অতএব আমি যাহা বলিব, তাহাই বিশ্বাস করাইব। হউক, প্রবেশ করি। (প্রবেশ করিয়া, নিকটে যাইয়া) আমাদের খুব সুখই আছে, তোমাদের সুখ দিতেও পারি, নাও দিতে পারি।

(ব) অধিকরণিক। বিচারার্থীর কি দৃঢ়সংস্কার!। (প্রকাশ্যে) বসুন।

अधि । भवान् कार्य्यार्थी ? । (म)

शकारः । अधइ । (य)

अधि । तत् कार्य्यं कथय ।

शकारः । कस्से कज्जं कधइश्शं । एवं वड्डके गल्लक्कपमाणाह कुले हग्गे जादे । (र)

लाअशशुले मम पिदा लाआ तादश्श होइ जामादा ।
लाअशिआले हग्गे ममावि बहिणीवदी लाआ ॥६॥

(भ) आः । आत्मीया एषा भूमिः, तद् यस्मिन् मे रोचते, तस्मिन् प्रविशामि । एष उपविशामि । नन्वेव उपविशामि । एष उपविशामि ।

(य) अथकिम् ।

(र) कर्णे कार्य्यं कथयिष्यामि । एवं वृहति गल्लर्कप्रमाणस्य कुले अहं जातः ।

---

(म) अधि इति । कार्य्यार्थी विचारप्रार्थी किमिति काकुः ।

(र) शकार इति । एवमनुपदमुच्यमानप्रकारेण । गल्लर्कप्रमाणस्य कुलं तत्तुल्यस्य पितुरिति शेषः । इदमत्त प्रागप्राकाम् । हलीपममिदम् ।

---

(भ) शकार । आः, এ জায়গা ত আমার নিজের । তা আমার যেখানে ইচ্ছা হইবে, সেইখানে বসিব । (বণিকের প্রতি) এই বসি ? । (শোধনকের প্রতি) ওহে । এইখানে বসি ? (এই বলিয়া বিচারকের মাথায় হাত দিয়া) এই বসিলাম । (এই বলিয়া মাটীতে বসিল)

(ম) অধিকরণিক । আপনি বিচারার্থী ? ।

(য) শকার । হাঁ ।

অধিকরণিক । তা হইলে বিচার্য্য বিষয় বলুন ।

(র) শকার । বিচার্য্য বিষয়টা আপনার কাণে বলিব । হুহুর্ম্মতুল্য পিতার এইরূপ বৃহৎ কুলে আমি জন্মিয়াছি ।

अधि। सर्वं ज्ञायते।

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥७॥

तदुच्यतां कार्य्यम्।

शकारः। एव्वं भणामि—अवलद्धाह वि ण अ मे किं पि कलइश्शदि। तदो तेण वहिणीवदिणा पलितुट्ठेण मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवलं पुप्फकलण्डकं जिण्णुज्जाणं दिण्णे। तहिं च पेक्खिदुं अणुदिअहं शोशावेदुं शोधावेदुं पोश्टावेदुं लुणावेदुं गच्छामि। देव्वजोएण पेक्खामि ण पेक्खामि वा, इत्थिआशलीलं णिवडिदं। (ल)

राजश्वशुरो मम पिता राजा तातस्य भवति जामाता।
राजश्यालोऽहं ममापि भगिनीपती राजा ॥६॥

(ल) एवं भणामि—अपराध्यस्यापि न च मे किमपि करिष्यति। ततस्तेन भगिनी-

इत्थीपमया सूचित स्वाभिमत पितु श्लाघ्या प्रमाणयितुमाह राजेति। मम पिता राज्ञ श्वशुर। अतएवासौ गणकप्रमाण इति प्रथम एवेति भाव। अतएवाहमसौव-गौरवित इति समुदायार्थ। आर्या जाति ॥६॥

किमिति। स्पष्टमाह त्रिगतमेतत् ॥७॥

আমার পিতা রাজার শ্বশুর হন, রাজা আমার পিতার জামাতা হন। আমি, রাজার শালা হই এবং রাজাও আমার ভগিনীপতি হন ॥৬॥

অধিকরণিক। সকলই জানি।

কুলের উল্লেখ করিয়া কি হইবে? উৎকর্ষের প্রতি স্বভাবই কারণ। যে হেতু, অতিশয় বৃদ্ধিপ্রাপ্ত কণ্টকীবৃক্ষও, সুক্ষেত্রে জন্মিয়া থাকে ॥৭॥

সুতরাং বিচার্য্য বিষয়টা বলুন।

अधि। अथ ज्ञायते का स्त्री विपन्नेति ?।

शकारः। हंहो अधिअलणभोइआ ! किं त्ति ण जाणामि तं तादिशिं णअलमण्डणं कञ्चणशदभूशणिअं। केण वि कुपुत्तेण अत्थकल्लवत्तस्स कालणादो शुस्सं पुप्फकलण्डकं जिस्सुज्जाणं पवेशिअ बाहुपाश-बलक्कालेण वशन्तशेणिआ मालिदा, ण मए। इत्यर्द्धोक्ते मुखमावृणोति। (ब)

पतिना परितुष्टेन मे क्रीडितुं रक्षितुं सर्वोद्यानानां प्रवरं पुष्पकरण्डकं जीर्णोद्यानं दत्तम्। तत्र च प्रेक्षितुमनुदिवसं शोधयितुं शोषयितुं पोषयितुं लावयितुं गच्छामि। दैवयोगेन प्रेक्षे न प्रेक्षे वा, स्त्रीशरीरं निपतितम्।

(ब) हंहो अधिकरणभोजका ! किमिति न जानामि तां तादृशीं नगरमण्डन

(ल) शकार इति। एव 'बहुक' इत्याद्युक्तेन हेतुना अपराद्धस्यापि कृतापराधस्यापि च मे, किमपि दण्डादिकं न करिष्यति राजेति भावः। एतेन मम मतानुसरणे युष्माभिर्मम प्रहारभयमपि कार्णीयमिति सूचितम्। ततस्तस्मात् [illegible] ज्ञातवान्। क्रीडितुं विहर्तुम्। एतेन तदुद्यानस्य विजनत्वं ध्वनितम्। शोधयितुं तोलनादिना दुष्टजनम्। शोषयितुम् अपसारणादिना दुष्टघासादिकम्। पोषयितुं जलदानादिना शोषितवृक्षादिकं वर्द्धयितुम्। लावयितुं कर्त्तर्यादिना गुच्छतृणादिकं छेदयितुम्। न प्रेक्षे वेति अपार्थमुक्तम्।

(ল) শকার। বলিতেছি—এই কারণে আমি অপরাধ করিলেও, রাজা আমার কিছুই করিবেন না। তাহার পর, সেই ভগিনীপতি রাজা, সন্তুষ্ট হইয়া, বিহার করা ও রক্ষা করার জন্য সকল উদ্যানের মধ্যে শ্রেষ্ঠ পুষ্পকরণ্ডকনামে জীর্ণোদ্যান আমাকে দিয়াছিলেন। আমি সেখানে দেখিবার জন্য, শুকাইবার জন্য, পরিষ্কার করিবার জন্য, পুষ্ট করিবার জন্য এবং ছেদন করিবার জন্য প্রত্যহ যাইয়া থাকি। দৈবযোগে দেখিলাম, অথবা দেখিলাম না, যে একটা স্ত্রীলোকের শরীর পড়িয়া রহিয়াছে।

অধিকরণিক। কোন্ স্ত্রীলোক মরিয়াছে, তাহা জানিয়াছেন কি ?।

अधि। अहो नगररक्षिणां प्रमादः!। भोः श्रेष्ठिकायस्थौ! न मयेति व्यवहारपदं प्रथममभिलिख्यताम्। (ग)

कायस्थः। जं अज्जो आणवेदि। तथा कृत्वा। अज्ज! लिहिदं। (घ)

शकारः। स्वगतम्। हीमादिके! उत्तलाअन्तेण विअ

काञ्चनशतभूषणाम्। केनापि कुपुरुषेण अर्थकल्यवर्त्तस्य कारणात् शून्यं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता, न मया।

(घ) यदार्य्य आज्ञापयति। आर्य्य। लिखितम्।

(ख) शकार इति। नगरस्य मण्डनम् उज्जयिन्या भूषणभूताम्, काञ्चनशत बहुतर-स्वर्णं बहुतरस्वर्णालङ्कारो भूषणं यस्यास्ताम्। अर्थकल्यवर्त्तस्य प्रातर्भोज्यस्थानात् अचिर-स्थायिनो धनस्य। शून्यं विजनम्। बाहुपाशाभ्यां बलात्कारो बलपूर्वकः प्रहारस्तेन। मुखावरणं न मयेत्यविस्पष्टभाषितद्योतनार्थम्।

(ग) अधि इति। प्रमादः अनवधानता। तथा च यदि नगररक्षिणा प्रमादो न स्यात्तदेदृशी हत्या न स्यादिति भावः। व्यवहारपदं विचारास्पदीभूतः शब्दः। तथा चात्मनो हननकर्त्तृत्वप्रसङ्गाभावेऽपि कथं न मयेति निषेध इत्याशयः।

(ख) শকার। ওহে বিচারকমহাশয়! নগরের অলঙ্কারস্বরূপা এবং বহুতর স্বর্ণালঙ্কারে অলঙ্কৃতা সেইরূপ রমণীকে কি আমি চিনি না?। কোনও দুর্জ্জন, অচিরস্থায়ী ধনের জন্য, নির্জন পুষ্পকরণ্ডক জীর্ণোদ্যানে প্রবেশ করাইয়া, বাহুপাশদ্বারা বসন্তসেনাকে বলপূর্ব্বক মারিয়া ফেলিয়াছে, আমি নহে। (এই অর্দ্ধোক্তির পর মুখ আবৃত করিল)

(গ) অধিকরণিক। হায়! নগররক্ষকদিগের কি অনবধানতা!। শ্রেষ্ঠি ও কায়স্থ। 'আমি নহে' এই বিচার্য্য বিষয়টী প্রথম লিখুন।

(ঘ) কায়স্থ। আর্য্য। যাহা আদেশ করেন। (সেইরূপ করিয়া) আর্য্য। লিখিয়াছি।

याग्रगपिण्डालकेण अज्ज मए अत्ता एव्व णिम्माशिदो। भोदु, एव्वं दाव। प्रकाशम्। अहो अधिअलणभोइआ! णं भणामि, मए ज्जेव दिट्टा, किं कोलाहलं कलेध?। इति पादेन लिखितं प्रोञ्छति। (स)

अधि। कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं बाहुपाशेन व्यापादिता?।

शकारः। हंहो! णूणं पड़िगुत्ताए (१) सोवण्णाशाए गीवालिश्राए णिश्शवस्सकेहिं श्राहलणट्ठाणेहिं तक्केमि। (ह)

(स) हन्त! उत्ताम्यतैव पायसपिण्डारकेण अद्य मया आत्मैव निर्नाशित.। भवतु, एवं तावत्, अहो अधिकरणभोजकाः! ननु भणामि—मयैव दृष्टा। किं कोलाहलं कुरुत?।

(ह) शकार इति। पायसपिण्डं परमान्नपिण्डम् ऋच्छति खीभेन प्राप्नोतीति पायसपिण्डारकेणैव परमान्नलोभिना जनेनेव, उत्ताम्यता अस्तचित्तेन मया, आत्मैव निर्नाशितो नियमेन नाश प्रापितः, न सर्वत्वभिधानेन मा प्रथं व सन्देहोदयेन सर्वं व हत्यापराध-प्रवृत्तिसम्भवादिति भावः। पूर्वं 'न मया' इत्यस्य।

(स) शकार। (स्वगত) হায়! পরমান্নলোভী লোকের ন্যায় আমি, উতলা হইয়া, আজ আপনিই আপনাকে নষ্ট করিলাম। হউক, এইরূপ করিয়া (প্রকাশ্যে) ওহে বিচারক! ঠিক্ বলিতেছি আমিই দেখিয়াছি। কেন তোমরা কোলাহল করিতেছ। (এই বলিয়া চরণদ্বারা লেখা-টুকু মুছিয়া ফেলিল)

অধিকরণিক। ধনের জন্য বাহুপাশদ্বারা মারিয়াছে, ইহা আপনি কি প্রকারে জানিলেন?।

(१)…गूढ़गुप्ताए।

श्रेष्ठिकायस्थौ। युज्जदि विअ। (च)

शकारः। स्वगतम्। दिट्टिआ पच्चुज्जीविदम्हि। अविद-मादिके।। (क)

श्रेष्ठिकायस्थौ। भो। कस्स एसो ववहारो अव-लम्बदि ?। (ख)

(ह) अहो। ननु परिशून्यया मोघस्थानया ग्रीवालिकया निःसुवर्णकैराभरणस्थानैस्तर्कयामि।

(च) युज्यत इव। (क) दिष्ट्या प्रत्युज्जीवितोऽस्मि।

---

(ह) शकार इति। परिशून्यया सर्वत स्वर्णगुटिकारहितया अतएव मोघ शौन्दर्य जननाभावात् व्यर्थं स्थानं स्थितिर्यस्यास्तया ग्रीवाया आलिका हारस्तावली तया तर्क-यामीति परेणान्वय। तथा निःसुवर्णकैः स्वर्णाभरणरहितैः, आभरणस्थानैः कर्णनासिका-प्रभृतिभिः, तर्कयामि अयं निमित्तमेव सा बाहुपाशेनैव व्यापादितेति सम्भावयामि, कथ-मन्यथा तादृशी महाधनवती स्वर्णाभरणहीना सती मृता स्यात् कथं वा शरीरे चिह्नमात्र-मपि न स्यादित्याशय।

अत्र अनुमितिर्नाम नाट्यलक्षणम्—

"अनुमा केनचिदर्थेन किञ्चिदर्थस्यानुमीयते" इति दर्पणलक्षणात्।

(च) श्रेष्ठि इति। युज्यत इव, वयमुक्तिरिति शेष। अत्रापि पूर्व एव भाव।

(क) शकार इति। दिष्ट्या भाग्येन, प्रत्युज्जीवितोऽस्मि ममैवापराधनिश्चयेन प्राणदण्डसम्भावनायामिति भाव। अविदमादिके इति हर्षसूचकमव्ययं शकारादिभाषायाम्।

---

(হ) শকার। অহে। গলার হারের গুটিগুলি নিরর্থক রহিয়াছে, তাহাতে একটী গুটীও নাই এবং অলঙ্কারের স্থানগুলি স্বর্ণবিহীন রহি-য়াছে, ইহা দ্বারা আমি (ঐরূপ) মনেকরিয়াছি।

(চ) শ্রেষ্ঠী ও কায়স্থ। ইহা যেন সঙ্গত [বলিয়া মনে হয়]।

(ক) শকার। [স্বগত] ভাগ্যবশতঃ বাঁচিলাম। বেশ।।

अधि । इह हि द्विविधो व्यवहारः । (ग)

श्रेष्ठिकायस्थौ । केरिसो ? । (घ)

अधि । वाक्यानुसारेण अर्थानुसारेण च । यस्तावत् वाक्यानुसारेण, स खल्वर्थिप्रत्यर्थिभ्यः, यश्चार्थानुसारेण, स चाधिकरणिकबुद्धिनिष्पाद्यः । (ङ)

श्रेष्ठिकायस्थौ । ता वसन्तसेणामादरं अवलम्बदि ववहारो ? । (च)

(ख) भो ! कमेष व्यवहारोऽवलम्बते ? । (घ) कीदृशौ ? ।

(च) तत् वसन्तसेनामातरमवलम्बते व्यवहारः ।

(ख) श्रेष्ठि इति । भो इत्यधिकरणिकसम्बोधनम् । व्यवहारो विवादनिर्णयः, कं जनम् अवलम्बते अपेक्षते, प्रमाणत्वेनेति शेषः ।

(ग) अधि इति । व्यवहारो विवादनिर्णयः ।

(ङ) अधि इति । अर्थिप्रत्यर्थिभ्यो वादिप्रतिवादिभ्यः, निर्णयात्मको व्यवहारो इति शेषः, तेषां वाक्यानुसारेणैव विवादनिर्णयः कर्त्तव्य इत्यर्थः । अधिकरणिकबुद्धि-निष्पाद्य विचारकबुद्धिसम्पाद्य विचारकः स्वबुद्ध्या प्रमाणत्वेन यदपेक्षते तदुपस्थाप्य तेन सम्पाद्य इत्यर्थः । सुतरामयं व्यवहारो द्वितीयविध एवेति भावः ।

(च) श्रेष्ठि इति । वसन्तसेनाया परिचायकप्रमाणत्वेनेति भावः ।

(খ) শ্রেষ্ঠী ও কায়স্থ। মহাশয়! এ বিচার কাহাকে অবলম্বন করিতেছে ? ।

(গ) অধিকরণিক। এই জগতে বিবাদ নির্ণয় দুই রকম।

(ঘ) শ্রেষ্ঠী ও কায়স্থ। কি কি রকম ? ।

(ঙ) অধিকরণিক। বাক্যানুসারে এবং অর্থানুসারে। যেটা বাক্যানুসারে হয়, তাহা বাদী ও প্রতিবাদী হইতেই হইয়া থাকে, আর যেটা অর্থানুসারে হয়, তাহা বিচারকের বুদ্ধিনিষ্পাদ্য হইয়া থাকে।

अधि। एवमिदम्। भद्र! शोधनक! वसन्तसेना-मातरमनुद्वेजयन्नाह्वय। (छ)

शोध। तह। इति निष्क्रम्य गणिकामात्रा सह प्रविश्य। एदु एदु अज्जा। (ज)

वृद्धा। गदा मे दारिआ मित्तघरअं अत्तणो जोव्वणं अणुभविदुं। एसो उण दीहाउ भणादि—"आअच्छ, अधिअरणिओ सद्दावेदि।" ता मोहपरवसमिव अत्ताणअं अवगच्छामि, हिअअं मे थरथरेदि। अज्ज! आदेसेहि मे अधिअरणमण्डवस्स मग्गं। (झ)

(ज) तथा। एतु एतु आर्य्या।

(झ) गता मे दारिका मित्रगृहमात्मनो यौवनमनुभवितुम्। एष पुनर्दीर्घायुर्भणति—"आगच्छ, अधिकरणिकः शब्दापयति।" तन्मोहपरवशमिवात्मानमवगच्छामि, हृदयं थरथरायते। आर्य्य! आदिश मे अधिकरणमण्डपस्य मार्गम्।

(छ) अधि इति। अनुद्वेजयन् काचिदपि विपदमभिधाय उद्वेगमजनयन्; तथात्वे आकुलचित्ततया किमपि सत्यं वक्तुं न शक्नुयादिति भावः।

(झ) वृद्धेति। यौवनं यौवनकालीनं सुरतसुखम्। चारुदत्तदर्शनादिवोद्वेगी जात इति भावः। पुनरेष दीर्घायुरायुष्मान् शोधनक इत्यर्थः। शब्दापयति आह्वयति।

(চ) শ্রেষ্ঠী ও কায়স্থ। তা হইলে এই বিচার, বসন্তসেনার মাতাকে আশ্রয় করিতেছে?।

(ছ) অধিকরণিক। ইহা এইরূপই বটে। ভদ্র! শোধনক! তুমি উদ্বিগ্ন না করিয়া বসন্তসেনার মাতাকে ডাক।

(জ) শোধনক। তাহাই। (এই বলিয়া নির্গত হইয়া, বসন্তসেনার মাতার সহিত প্রবেশ করিয়া) আর্য্যা! আসুন আসুন!

शोध । एदु एदु अज्जा । (ञ)

उभौ परिक्रामतः ।

शोध । एदं अधिअरणमण्डवं, एत्थ पविसदु अज्जा । (ट)

इत्युभौ प्रविशतः ।

वृद्धा । उपसृत्य । सुहं तुम्हाणं भोदु भावमिस्साणं । (ठ)

अधि । भद्रे ! स्वागतम् ? आस्यताम् ।

वृद्धा । तधा । इत्युपविष्टा । (ड)

(ञ) एतु एतु आर्या । (ट) एतदधिकरणमण्डपम्, अत्र प्रविशतु आर्या ।

(ठ) सुखं युष्माकं भवतु भावमिश्राणाम् ।

ततश्चादुभयकारणाद्वैयग्र्यात्, आत्मानं मोहपरवशमिव मूर्च्छितमिव । थरथरायते 'थर-थर' इत्येवं कम्पते ।

(ठ) उपसृत्येति । भावा विद्वांसः, मिश्राश्च प्रधानास्तेषाम् अधिकरणोपस्थितानां युष्माकमित्यर्थः । "भावो विद्वान्" इत्यमरः । "मिश्रः (पु) श्रेष्ठ" इति शब्दकल्पद्रुमः ।

(ঝ) বৃদ্ধা। আমার কন্যা, যৌবনের সুখ অনুভব করিবার জন্য, প্রণয়ীর বাড়ী গিয়াছেন, এদিকে আবার এই দীর্ঘায়ু বলিতেছেন—"আসুন, বিচারক ডাকিতেছেন।" সুতরাং আমি আপনাকে যেন মূর্চ্ছিত বলিয়া বোধ করিতেছি এবং হৃদয়, থর থর করিয়া কাঁপিতেছে। আর্য্য! আমাকে বিচারালয়ের পথ বলিয়া দিন।

(ঞ) শোধনক। আর্য্যা! আসুন আসুন।

দুই জনেই পাদক্ষেপ করিতে লাগিল।

(ট) শোধনক। এই বিচারালয়, আর্য্যা! এইখানে প্রবেশ করুন।

ইহার পর দুই জনেই প্রবেশ করিল।

(ঠ) বৃদ্ধা। (নিকটে যাইয়া) অভিজ্ঞপ্রবর আপনাদের সুখ হউক।

অধিকরণিক। ভদ্রে! আপনার শুভাগমন ত? বসুন।

शकारः। सावेगम्। आगदाशि वुड्डकुट्टणि! आगदाशि! (ढ)

अधि। अये! त्वं किल वसन्तसेनाया माता?।

वृद्धा। अधइ'। (ण)

अधि। अथेदानीं वसन्तसेना क्व गता?।

वृद्धा। मित्तघरअ'। (त)

अधि। किं नामधेयं तस्या मित्रम्?।

वृद्धा। स्वगतम्। हद्धी हद्धी अदिलज्जणीअ' क्खु एदं। प्रकाशम्। जणस्स पुच्छणीओ अअ' अत्थो, ण उण अधिअरणिअस्स। (थ)

(ढ) तथा। (ढ) आगतासि वृद्धकुट्टनि। आगतासि?।

(ण) अथकिम्। (त) मित्रगृहम्।

(थ) हा धिक् हा धिक्, अतिलज्जनीयं खल्वेतत्। जनस्य पृच्छनीयोऽयमर्थः, न पुनरधिकरणिकस्य।

(ढ) शकार इति। वृद्धा चासौ कुट्टनी परपुरुषेण सह परस्त्रीसंयोगकारिणी चेति वा तत्सम्बोधनम्।' "कुट्टनी शम्भली समे" इत्यमरः।

(ড) বৃদ্ধা। তাহা। (এই বলিয়া বসিল)

(ঢ) শকার। (আক্রোশের সহিত) আসিয়াছ? বৃদ্ধকুট্টনি! আসিয়াছ?।

অধিকরণিক। ওহে! আপনি বসন্তসেনার মাতা?।

(ণ) বৃদ্ধা। হাঁ।

অধিকরণিক। বসন্তসেনা এখন কোথায় গিয়াছেন?।

(ত) বৃদ্ধা। প্রণয়ীর বাড়ী।

অধিকরণিক। তাঁহার প্রণয়ীর নাম কি?।

अधि। अलं लज्जया, व्यवहारस्त्वां पृच्छति। (द)
श्रेष्ठिकायस्थौ। ववहारो पुच्छदि, णत्थि दोसो, कधेहि।
(ध)

(ध) व्यवहारः पृच्छति, नास्ति दोषः, कथय।

---

(ष) वृद्धेति। एतत्—अधिकरण एव स्वयमधिकरणिककर्त्तृकमप्रकरणम्, अतिलज्जनीयमत्यन्तलज्जाकरम्, विशिष्टप्रभुत्वशालि परमगौरविताधिकरणिककर्त्तृकमप्रकरणेन तदुत्तरस्याप्यवश्यदेयत्वात् नितान्तगोपनीयविषयस्य जनस्यैव प्रकाश्यत्वात् अधिकरण एव प्रकाशेन च सर्व्वत्रैव प्रकाशसम्भवादिति भावः। अयम् अर्थः मम दारिकाया "किं नामधेयमित्रम्" इति विषयः, जनस्य साधारणस्यैव। न पुनरधिकरणिकस्य पृच्छनीय इत्यन्वयः। उभयत्रापि "वा कर्त्तरि कृत्ये" इति कर्त्तरि षष्ठी। तथा च ईदृशविषये प्रश्नकर्त्तुरपि लघुत्वापत्त्या गौरवितजनस्यापि लघुत्वापत्तिरित्याशयः।

अतिलज्जनीयमिति "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तर्यनीयः।

(द) अधि इति। व्यवहारः कार्य्यचिद्विवादस्य निर्णयः, त्वं तव साक्षिणीत्यर्थः। तथा च कार्य्यचिद्विवादस्य निर्णयार्थमेवाहमीदृशं पृच्छामि, न पुनः साधारणजनवत् कौतुकपरतयेति कृतौ नेऽधिकरणिकस्य लघुत्वापत्तिरित्यभिप्रायः।

(ध) श्रेष्ठि इति। दोषः अधिकरणिकस्य लघुत्वापत्तिरूपः प्रकाशने जनस्याय निर्ल्लज्जत्वरूपः, नास्ति, उक्तादेव हेतोरित्याशयः।

---

(ष) वृद्धा। (স্বগত) হায়! হায়! ইহা ত অত্যন্ত লজ্জাজনক। (প্রকাশ্যে) সামান্য লোকেরই এ বিষয় জিজ্ঞাসা করা উচিত, কিন্তু বিচারকের নহে।

(द) অধিকরণিক। লজ্জা করিবেন না, বিচার আপনাকে জিজ্ঞাসা করিতেছে।

(ध) শ্রেষ্ঠী ও কায়স্থ। বিচার জিজ্ঞাসা করিতেছে, ইহাতে দোষ নাই, বলুন।

वृद्धा । कधं ववहारो ! । जइ एव्वं, ता सुणन्तु अज्जमिस्सा । सो क्खु सत्थवाह-विणअदत्तस्स णत्तिओ, साअरदत्तस्स तणओ, सुगहिदणामहेओ अज्जचारुदत्तो णाम सेट्ठिचत्तरे पडिवसदि, तहिं मे दारिआ जोव्वणसुहं अणुभवदि । (न)

शकारः । शुदं अज्जेहिं ? । लिहीअदु एदे अक्खला । चालुदत्तेण शह मम विवादे । (प)

श्रेष्ठिकायस्थौ । चारुदत्तो मित्तो त्ति णत्थि दोसो । (फ)

---

(न) कथं व्यवहारः ? यद्येवं तदा शृण्वन्तु आर्यमिश्राः । स खलु सार्थवाह-विनयदत्तस्य नप्ता, सागरदत्तस्य तनयः, सुगृहीतनामधेय आर्यचारुदत्तो नाम श्रेष्ठिचत्वरे प्रतिवसति, तत्र मे दारिका यौवनसुखमनुभवति ।

(प) श्रुतमार्यैः ? । लिख्यन्तामेतान्यक्षराणि । चारुदत्तेन सह मम विवादः ।

(फ) चारुदत्तो मित्रमिति नास्ति दोषः ।

---

(न) कथमिति । विस्मये कथशब्दः, अतर्कितभावेन सहसा व्यवहार एवोपस्थितत्वाद् विस्मयः । नप्ता पौत्रः । सुगृहीत नितान्तपुण्यचरित्रत्वात् सर्वैरेव प्रातरुच्चारित नामधेयं यस्य सः । श्रेष्ठिचत्वरे वणिकपल्ल्याम् ।

(फ) श्रेष्ठि इति । मित्रं रतिबन्धुः । इति हेतौ । तथा च चारुदत्त स्खलितमहान् पुरुषचरितो नितान्तदरिद्रश्च, गुणग्राहितावशादेव च तस्मिन्नासक्तचित्तवती वसन्तसेनाया गत एव न पुनर्निर्गतेति नास्ति ते तस्मात् किमपि लज्जाकारणमिति भावः ।

---

(ন) বৃদ্ধা। হায় ! এটা বিচার ! । যদি এইরূপই হয়, তবে অভিজ্ঞপ্রবরগণ শুনুন,—তিনি, বণিক্ বিনয়দত্তের পৌত্র, সাগরদত্তের পুত্র, প্রাতঃস্মরণীয়নামা আর্য্যচারুদত্তনামক, বণিক্‌পাড়ায় বাস করেন। আমার কন্যা সেইখানে যৌবনসুখ অনুভব করেন।

(প) শকার। আপনারা শুনিলেন ? । এই অক্ষরগুলি লিখুন। চারুদত্তের সঙ্গে আমার বিবাদ।

अधि। व्यवहारोऽयं चारुदत्तमवलम्बते। (ब)

श्रेष्ठिकायस्थौ। एवं विय। (भ)

अधि। धनदत्त। वसन्तसेना आर्य्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः। कथमार्य्यचारुदत्तोऽपि अस्माभिराह्वाययितव्यः। अथवा व्यवहारस्तमाह्वयति। भद्र। शोधनक। गच्छ, आर्य्यचारुदत्तं स्वैरमसम्भ्रान्तमनुद्विग्नं सादरमाह्वय, प्रस्तावेनाधिकरणिकस्त्वां द्रष्टुमिच्छति इति। (म)

(भ) एवमिव।

(ब) अधि इति। अवलम्बते आश्रितत्वेन अपराधित्वेन वा अपेक्षते चारुदत्तगृहगमनात् परमेव हि वसन्तसेनायाः व्यापत्तेः सम्भवादिति भावः।

अत्र। बौद्धीय तदानीन्तनी व्यवहारपद्धतिः, यत्र मौर्ख्यस्यापि नितान्तप्रकटस्य प्रकारस्य अभियोगमात्रादेव "वसन्तसेना मृता न वा, सैव न वा" इत्यादिकमविचार्य्यैव विचारमारभत इति।

(म) अधि इति। धनदत्त इति भाषा कायस्थस्य सम्बोधनम्। "अयीदानीं वसन्तसेना क्व गता" इति प्रश्नानन्तरम् "मित्रगृहम्" "अस्मच्चारुदत्तो नाम" इति च तन्मात्रा उक्ते "वसन्तसेना आर्य्यचारुदत्तस्य गृहं गता" इति लिखत इति बोध्यम्। चारु दत्तम्। तथा च सति वसन्तसेनाहत्यायां चारुदत्तस्यापि सम्बन्धः सुनिर्णेयः स्यादिति भावः। कथमिति। साक्षात्सम्बद्धजनेन तादृशस्य महत आह्वाने तद्गौरवहानिः स्यादित्याशयः। अथवेति। अन्यथा व्यवहारनिर्णयासम्भवात्प्राप्तिदोष इत्यभिप्रायः। स्वैरं मन्दमनुसत्वरमित्यर्थः, अन्यथा तज्जनप्रतीत्या चारुदत्तस्य गौरवहानिसम्भव इति भावः। असम्भ्रान्तमसत्वरम्, सत्वराह्वानेऽपि तद्गौरवनाशः स्यादित्याशयः। अनु

(ফ) শ্রেষ্ঠি ও কায়স্থ। চারুদত্তপ্রণয়ী—ইহাতে দোষ নাই।

(ব) অধিকরণিক। এই মোকদ্দমা চারুদত্তকে আশ্রয় করিতেছে।

(ভ) শ্রেষ্ঠী ও কায়স্থ। এইরূপই বোধ হয়।

शोध। जं अज्जो आणवेदि। इति निष्क्रम्य चारुदत्तेन सह प्रविश्य च। एदु एदु अज्जो। (घ)

चारु। विचिन्त्य।

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च।
यत्सत्यमिदमाह्वानमवस्थामभिशङ्कते ॥८॥

(घ) यदार्य्य आज्ञापयति। एतु एतु आर्य्यः।

---

स्थिरमिति। अन्यथा सद्वेगसम्भवे हृदयस्य व्यस्ततया यथायथोत्तरप्रदानासम्भव इत्यभिप्रायः। सादरमिति। तथात्वे च तस्य गौरवं रक्षितं स्यादिति भावः। प्रस्तावेन व्यवहार-प्रकरणेन तन्निर्णयाद्यावश्यकत्वेनेत्यर्थः। एतेनात्मन औद्धत्यं परिहृतमिति बोध्यम्।

(घ) शोध इति। निष्क्रम्य भूत्वेति शेषः।

परीति। राज्ञा प्रतिनिधितया राजस्थानपातिना अधिकरणिकेनेत्यर्थः, शीलेन स्वभावेन, कुलेन वंशेन च, परिज्ञातस्य सर्वतोभावेनावगतस्य मे मम, इदमाह्वानम्, यत्सत्यं ध्रुवमेव, अवस्था दारिद्र्यदशाम्, अभि लक्ष्यीकृत्य शङ्कते शङ्कां जनयतीत्यर्थः। निरपराधस्यापि दरिद्रस्य प्रभुजनेनाह्वाने स्वत एवात्मदोषाशङ्का जायत इति भावः। यत्सत्यमित्येकमेव पदमिति प्रागप्युक्तम् ॥८॥

---

(ग) अধিকরণিক। ধনদত্ত! "বসন্তসেনা আর্য্য চারুদত্তের বাড়ী গিয়াছিলেন" মোকদ্দমায় এই প্রথম পাদ লেখ। হায়! আর্য্য চারুদত্ত-কেও আমাদের ডাকাইতে হইল। অথবা, মোকদ্দমাই তাহাকে ডাকি-তেছে। ভদ্র! শোধনক! যাও, আর্য্য চারুদত্তকে অস্বচ্ছন্দরে আস্তে আস্তে, অস্থিরভাবে এবং আদরের সহিত ডাক (এবং বল যে) "বিচারক আবশ্যকবশতঃ আপনাকে দেখিতে ইচ্ছা করেন।"

(ঘ) শোধনক। আর্য্য যাহা আদেশ করেন। (এই বলিয়া নির্গত হইয়া, চারুদত্তের সহিত পুনরায় প্রবেশ করিয়া) আর্য্য আসুন আসুন।

চারুদত্ত। (চিন্তা করিয়া) রাজপ্রতিনিধি বিচারক, স্বভাব অনুসারে

सवितर्कं स्वगतम् ।

ज्ञातो हि किन्नु खलु बन्धनविप्रयुक्तो
मार्गागत: प्रवहणेन मयापनीत: ।
चारेक्षणस्य नृपते: श्रुतिमागतो वा
येनाहमेवमभियुक्त इव प्रयामि ॥८॥

ज्ञात इति । बन्धनात् कारागारे आवद्धीभावात् विप्रयुक्तो विभ्रष्ट, मार्गेण मद्भवन-समीपवर्त्तिना पथा आगत, अनन्तरञ्च मया, प्रवहणेन स्वकीयेनैव गोशकटेन, अपनीत कुत्राप्यपसारित, आर्य्यक इति शेष, किन्नु खलु ज्ञातो राज्ञा पालकेन कुतोऽपि स्वचक्षुषैव विदित । वा अथवा, चारो गुप्तचर एव ईक्षणं चक्षुर्यस्य तस्य नृपते पालकस्य, श्रुतिमागत श्रवणं प्राप्त तेन चारेणैव ज्ञापित इत्यर्थ । येन हेतुना, अहम्, अभियुक्त इव अपराधित्वेन अधिकरणे उपस्थापित इव, एवं प्रयामि राजानुचरेण सह तदाहूत सन् गच्छामि । आर्य्यकापसारणमेव किमेतदाह्वानस्य कारणमिति समुदायार्थ ।

अत्र चारेक्षणस्येति निरङ्ग केवलरूपकम्, अभियुक्त इवेति क्रियोत्प्रेक्षा च, अनयो परस्परनिरपेक्षतया संसृष्टि । तथा केवलज्ञप्तिपूरणार्थमेव हिशब्दप्रयोगात् निरर्थकत्वदोष, आर्य्यकशब्दस्यानुल्लेखात् न्यूनपदतादोषश्च । "हन्तार्य्यक स विदित किमु बन्धमुक्त" इति पाठे तु तयो परिहार ।

वसन्ततिलका वृत्तम् ॥८॥

এবং বংশমর্য্যাদায় আমাকে চিনেন, তথাপি এই আহ্বান, আমার অবস্থা অনুসারে নিশ্চয়ই আশঙ্কা জন্মাইতেছে ॥৮॥

(বিতর্কের সহিত স্বগত) বন্ধন হইতে বিমুক্ত হইয়া পথে উপস্থিত আর্য্যককে আমি গাড়ীতে করিয়া সরাইয়া দিয়াছি, ইহা কি রাজা দেখিতে পাইয়াছেন ? অথবা, গুপ্তচরই রাজাদের চক্ষু, তাই উক্ত ঘটনা রাজার কাণে আসিয়াছে ? । যে হেতু, আমি অভিযুক্তের ন্যায় এই ভাবে যাইতেছি ॥৯॥

अथवा, किं विचारितेन, अधिकरणमण्डपमेव गच्छामि। भद्र! शोधनक! अधिकरणस्य मार्गमादेशय।

शोध। एदु एदु अज्जो। (१)

इति परिक्रामतः।

चारु। सशङ्कम्। तत् किमपरम्। (ख)

रूक्षस्वरं वाशति वायसोऽयममात्यभृत्या मुहुराह्वयन्ति।
सव्यञ्च नेत्रं स्फुरति प्रसह्य ममानिमित्तानि हि खेदयन्ति॥१०॥

(१) एतु एतु आर्य्यः।

शोध । एदु एदु अज्जो स्वैरं असम्भन्तं । (व)

चारु । परिक्रम्याग्रतोऽवलोक्य च ।

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
मयि चोदयते वामं चक्षुर्घोरमसंशयम् ॥११॥

(व) एतु एतु आर्य्य स्वैरमसम्भ्रान्तम् ।

---

प्रतीत्यस्य कर्मानभिधानात् न्यूनपदत्वादोष, "ममानिमित्तानि मनस्तुदन्ति" इति पाठेन समाधेय । उपजातिर्वृत्तम् ॥१०॥

(व) शोध इति । स्वैरं मन्दम्, असम्भ्रान्तमव्यग्रञ्च यथा स्यात्तथा एतु आगच्छतु । भवतस्त्वराव्यग्रतयोर्न किञ्चित् कारणमस्तीति भाव ।

शुष्केति । शुष्कवृक्षस्थित, तथा आदित्याभिमुख, ध्वाङ्क्ष, काक घोर भयङ्करम्, वाम चक्षु, मयि मा प्रतीत्यर्थं, चोदयते प्रेरयति, अनायासय मा मत्येव वाम चक्षुश्चोदयते, नान्यमेतदर्थं समयी नास्तीत्यर्थं । असंशयमिति अभावार्थेऽव्ययीभाव ।

इदञ्चातीवभयसूचकम् । यथा वृहत्संहितायां वराह—

"छिन्नाग्रेऽभ्युच्छेद कलह शुष्कद्रुमस्थिते ध्वाङ्क्षे ।
पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्ति ॥
ऐन्द्रादिदिग्वलोकी सूर्य्याभिमुखो रुते रुवन् गर्हित ।
राजभय-चौर बन्धन कलहा स्यु पशुभयञ्च ॥"

अत्र ध्वाङ्क्ष इत्यस्य दुःश्रवत्वेऽपि भयानकभावाद् गुणत्वमेव "वक्तरि क्रोधसंयुक्ते" इत्यादिसाहित्यदर्पणोक्ते ॥११॥

---

এই কাক রুক্ষস্বরে শব্দ করিতেছে, রাজসচিব বিচারকের ভৃত্য বার বার ডাকিতেছে এবং বামনেত্র স্পন্দিত হইতেছে, সুতরাং এই সকল দুর্লক্ষণ আমার চিত্তকে উৎপীড়িত করিতেছে ॥১০॥

(ব) শোধনক। আর্য্য! আসুন, আপনি ধীরে ধীরে ও অব্যস্ত-ভাবে আসুন।

চারুদত্ত। (পদক্ষেপপূর্ব্বক সম্মুখে দৃষ্টিপাত করিয়া)

पुनरन्यतोऽवलोक्य। अये! कथमयं सर्पः।

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः
स्फुरित-विततजिह्वः शुक्लदंष्ट्राचतुष्कः।
अभिपतति सरोषो जिह्मिताध्मातकुक्षि-
र्भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः ॥१२॥

अपि च। इदम्—(अ)

मयीति। मयि विनिहिता निक्षिप्ता दृष्टिर्येन सः, भिन्नं गलितं नीलञ्च यदञ्जनं कज्जलं तस्य आभा इव आभा देहद्युतिर्यस्य सः, स्फुरिता स्पन्दिता वितता लम्बिता च जिह्वा यस्य सः, शुक्लं शुभ्रवर्णं दंष्ट्राचतुष्कं दन्तचतुष्टयं यस्य सः, जिह्मितं वक्रीकृतम् आध्मातं वायुपूरितञ्च कुक्षिः उदरं यस्य सः, तथा मे मम मार्गं गमनपथम् आक्रम्य व्याप्य, सुप्तः सुप्तवत् पातितदेहः, अयं भुजगपतिर्वृहत्सर्पः सरोषः सन् अभिपतति ममाभिमुखमागच्छति।

अत्र प्रथमपादे लुप्तोपमालङ्कारः।

सर्पस्याभिमुखागमनमपि गन्तुरनाविधमत्र सूचयति। यथा वसन्तराजः—

"फणिनोऽभिमुखागमनमीऽरिसङ्ग कथयति मध्ये वधञ्च यातु।"

मालिनी वृत्तम् ॥१२॥

(अ) अपि चेति। इदं वक्ष्यमाणं सकलमपि अशुभसूचकमित्यर्थः।

শুষ্কবৃক্ষস্থিত এবং সূর্য্যাভিমুখ কাক, ভয়ঙ্কর বামনয়ন, আমার প্রতি নিক্ষিপ্ত করিতেছে, ইহাতে সংশয় নাই ॥১১॥

(পুনরায় অন্যদিক্ দেখিয়া) ওহে! এই যে আর একটা সাপ।।

এই বৃহৎ সর্প ক্রোধের সহিত আমার অভিমুখে আসিতেছে, এ, আমার প্রতি দৃষ্টিনিক্ষেপ করিতেছে, গলিত নীল কজ্জলের ন্যায় ইহার বর্ণ, ইহার লম্বিত জিহ্বা স্পন্দিত হইতেছে, দন্তচতুষ্টয় শুভ্রবর্ণ, উদর বায়ুপূর্ণ এবং বক্রীকৃত এবং এ, পূর্ব্বে পথ আক্রমণ করিয়া শয়ন করিয়াছিল ॥১২॥

सर्व्वथा देवताः स्वस्ति करिष्यन्ति। (य)

शोध। एदु एदु अज्जो। इमं अधिअरणमण्डवं पविसदु अज्जो। (स)

चारु। प्रविश्य समन्तादवलोक्य। अहो। अधिकरणमण्डपस्य परा श्रीः। इह हि—(ह)

चिन्तासक्त-निमग्न-मन्त्रि-सलिलं दूतोर्म्मिशङ्खाकुलं
पर्य्यन्त-स्थित-चार-नक्र-मकरं नागाश्व-हिंस्राश्रयम्।

(स) एतु एतु आर्य्य। इममधिकरणमण्डपं प्रविशतु आर्य्य।

नैकस्य इति "सन्निकर्षाक्रान्तत्वं कर्णोत्पलता" इत्यादिवत् अभावार्थकेन न शब्देन समासात् "स्वरितस्वरविपर्य्यय" इति न भवति। रुचिरा वृत्तम् ॥१३॥

(य) सर्व्वथेति। स्वस्ति मङ्गलम्, दैवतानां चिराराधनेन सन्तोषितत्वादिति भावः।

(ह) चारु इति। परा उत्तमा श्रीः शोभा। "दूरानात्मोत्तमा परा" इत्यमरः। हि यस्मात्, इह अधिकरणमण्डपे।

ভূতলে পদক্ষেপ করিবামাত্র তাহা স্খলিত হইতেছে, কিন্তু সে ভূতল অত্যন্ত আর্দ্র নহে। বামনয়ন স্ফুরিত হইতেছে, বামবাহু বার বার কাঁপিতেছে এবং এই আর একটা পক্ষী বহুবার বিরুদ্ধ রব করিতেছে। অতএব এই সকল দুর্লক্ষণ, ভয়ঙ্কর মৃত্যু সূচনা করিতেছে, ইহাতে কোন সন্দেহ নাই ॥১৩॥

(য) নিশ্চয়ই দেবতারা মঙ্গল করিবেন।

(স) শোধনক। আসুন আর্য্য আসুন, এই বিচারালয়ে প্রবেশ করুন।

(হ) চারুদত্ত। (প্রবেশপূর্ব্বক সকলদিকে দৃষ্টিপাত করিয়া) বিচারালয়ের কি উৎকৃষ্ট শোভা হইয়াছে। কারণ, এখানে—

नाना-वाशक-कङ्क-पक्षि-रुचिरं (१) कायस्थ-सर्पास्पदं
नीति-क्षुण्ण-तटञ्च राज-करणं (२) हिंस्रैः समुद्रायते ॥१४॥

चिन्तेति। चिन्तायां राज्यविषयकविविधभावनायाम् आसक्ता निविष्टाः निमग्ना निमग्नवत् निश्चलमवस्थिता मन्त्रिणो नानाविधमन्त्रणादायका इदानीन्तनव्यवहाराजीव-नामानो जना सलिलानीव यत्र तत्, उभयोरपि तादृशमन्त्रिसलिलयोरगाधस्वभावत्वादिति भाव। दूता, ऊर्मयस्तरङ्गा शङ्खाश्च ते इवेति दूतोर्मिशङ्खास्तैराकुलं व्याप्तम्, दूतानामूर्मिशङ्खानाञ्च उभयेषामपि जङ्गमत्वादित्याशय। पर्यन्ते प्रान्तदेशे स्थिताश्चारा गुप्तचरा, नक्रा कुम्भीरा मकराश्च स्वनामख्याता जलजन्तुविशेषा इव यत्र तत्, नक्रमकराणामिव गुप्तचराणामपि प्रथमं गुप्तभावगतावस्थाय पश्चात् सहसैवाक्रमणादित्यभिप्राय। नागाश्च हस्तिघोटका हिंस्रा व्याघ्रादिजलजन्तुविशेषा इव तैराश्रीयत इति तत्; उभयेषामपि विश्वासाक्रान्तत्वादिति भाव। नाना विविधं वाशन्ति शब्दायन्त इति नानावाशका वादिप्रतिवादिनो जना, कङ्कपक्षिण (काङ्खिल्ला इति ख्याता) पक्षिविशेषा इव अविरतरवकारित्वादित्याशय, तै रुचिरं मनोहरम्। कायस्था लेखकजना सर्पा इव कुटिलस्वभावत्वादित्यभिप्राय, तेषामास्पदं प्रतिष्ठास्थानम्। तथा नीतिर्नय क्षुण्णतटं अप्रतीरमिव यत्र तत्, उभयोरपि विषमत्वात् दुर्गमत्वाच्चेति भाव। राज्ञ करणं कर्म विचारालयकार्यस्थलमित्यर्थ, हिंस्रै हिंसास्वभावैराजपुरुषै प्रकृत नैतप्रहारादिभि अन्यत्र तत्प्रहारकताडनादिभि, समुद्रायते समुद्र इवाचरति।

अत्र समुद्रायत इत्युपमानुसारात् सर्वत्रैव उक्तविध उपमितसमास एव व्याख्य इति मतेन लुप्तोपमा समुद्रायत इति काङ्गतोपमा च इत्येतासामङ्गाङ्गिभावेन सङ्कर। अमरकोषटीकादिषु रघुनाथादिभिर्विशेषणेनैव विशिष्टोपस्थापकत्वाङ्गीकारात् प्रथमहि स-पदेन वाशकपदेन च व्याघ्रादिजलजन्तुना वादिप्रतिवादिनाञ्चोपस्थापनात् स्पष्टतत्तदनभि धानेऽपि न न्यूनपदत्वदोष।

রাজার বিচারকার্য্যের গৃহটী, হিংস্রাচরণ দ্বারা সমুদ্রের ন্যায় আচরণ করিতেছে। কারণ, নানাবিধ চিন্তায় আসক্ত ও নিশ্চলভাবে অবস্থিত

(१) रचितम्। (२) राजभवनम्।

भवतु । प्रविशन् शिरोघातमभिनीय सवितर्कम् । अहह ! इदमपरम् । (च)

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा ।
पन्था सर्पेण रुद्धोऽयं स्वस्ति चास्मासु दैवतः ॥१५॥

तावत् प्रविशामि । इति प्रविशति ।

नागान्वहि स्वाश्रयमिति हतामभिधानसम्बन्धादस्य च्छायामपि कर्मण्यत्र प्रत्ययः । अथवा नागान्वहि नागानामाश्रयोऽवस्थितिर्यस्मिन्निति गत्यन्तराभावात् व्यधिकरणबहुव्रीहिरेवाश्रयणीयः । अन्यथा पुंलिङ्गत्वापत्तिरिति ध्येयम् ।

अधिकरणमण्डपान्तर्गतं किञ्चिदग्रकमेव विचारस्थानं तस्यैव चेयं वर्णनेति न "इह हि" इति प्रागुक्तगद्येन सह विरोधः ।

"करणं हेतुकर्म्मणोः" इत्यादि मेदिनी । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

(च) भवत्विति । अपरं दुर्लक्षणमित्यर्थः । एतत्प्रमाणन्तु "सपादे"त्याद्युक्तमेव ।

सव्यमिति । मे मम सव्यं वाम चक्षुः स्पन्दते, तथा वायसः काको विरौति शब्दायते ; अयं पन्था, सर्पेण रुद्धः, आसीदिति शेषः । अथ शिरोघातश्च अपरं दुर्लक्षणमित्याशयः । इदानीन्तु दैवत आराधितो दैव एव अस्मासु स्वस्ति मङ्गलं करिष्यति एभिः सूचितेऽनिष्टेऽपीति शेषः ।

উকিলগণ, অগাধ জলরাশির ন্যায় রহিয়াছেন, তরঙ্গ ও শঙ্খের ন্যায় দূতগণে ইহা ব্যাপ্ত রহিয়াছে, কুম্ভীর ও মকরগণের ন্যায় গুপ্তচরগণ, প্রান্তভাগে অবস্থান করিতেছে, হস্তী ও ঘোটকের ন্যায় হিংসকগণের ইহা আশ্রয়, কঙ্কপক্ষী-(হাড়গিলা) সমূহের ন্যায় নানাবিধ শব্দকারী বাদিপ্রতিবাদিগণ দ্বারা ইহা মনোহর হইয়াছে, সর্পের ন্যায় কায়স্থগণের ইহা আশ্রয় এবং ভগ্ন তীরের ন্যায় ইহার নীতি অত্যন্ত দুর্গম ॥১৪॥

(ক) হউক। (প্রবেশ করতঃ, মস্তকে আঘাত অভিনয় করিয়া, বিতর্কের সহিত) অহহ ! এই আর একটা দুর্লক্ষণ।

अधि । अयममौ चारुदत्तः । य एषः—(क)

घोणोन्नतं मुखमपाङ्गविशालनेत्रं
नैतद्धि भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु
नह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥१६॥

अत्र करिष्यतीत्यादीनां पदानामनुक्ततया प्रसक्तोऽपि न्यूनपदत्वादीषः अनुविषाद-सम्पत्त्या प्रत्युत गुण एव, "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्य-दर्पणात् । पूर्वं क्रमेणैकैकं दुर्लक्षणमभिधाय केवलमनिष्टमाशङ्कितम् इदानीन्तु तत् सकलं युगपदुक्त्वा आशङ्कितस्य तस्यानिष्टस्य अवश्यम्भाविता प्रतिपादितेति न पौन-रुक्त्यम् ॥१५॥

(क) अधि इति । अत्र अमावित्यदःशब्दस्य अदःशब्दसमानार्थं । तथा च अयं स चारुदत्त इत्यर्थः । यथा दर्पणे—"इदमेतददःशब्दानामदःशब्दसमानार्थं तया विधेया एव भवितुं युक्ता" इति ।

घोणोन्नतमिति । घोणा नासिका उन्नता यत्र तत्, तथा अपाङ्गयोः प्रान्तयोः विशाले प्रान्तपर्यन्तविस्तृते इत्यर्थः नेत्रे नयनद्वयं यत्र तत् तादृशं मुखम्, य एष बिभर्तीति शेषः । हि तस्मात्, एतत् चारुदत्तरूपं वस्तु, अकारणदूषणानां निष्कारणदोषारोपणानाम्, न भाजनं न पात्रं न विषय इत्यर्थः । तथा च नागेषु हस्तिषु गोषु, तुरगेषु अश्वेषु, तथा नरेषु मनुष्येषु च, आकृतिः शुभः अशुभो वा आकारः, सुसदृशं सर्वथा योग्यं शुभत्वे सत् अशुभत्वे चासदित्यर्थः, वृत्तं चरित्रम्, नहि विजहाति न खलु परित्यजति । अतएवा-स्यापि शुभलक्षणा आकृतिरियं न सद्वृत्तमतिक्रामेदिति भावः ।

---

বামনয়ন স্পন্দিত হইয়াছিল, কাক ডাকিয়াছিল এবং সেই পথ সর্পাব-রুদ্ধ ছিল। যাহা হউক, ইষ্ট দেবতাই আমাদের মঙ্গল করিবেন ॥১৫॥

প্রবেশ করি। (এই বলিয়া প্রবেশ করিলেন)

(ক) অধিকরণিক। এই সেই চারুদত্ত। যে ইনি—

चारु। 'भोः! अधिकृतेभ्यः स्वस्ति ?। हंहो नियुक्ताः! अपि कुशलं भवताम् ?। (ख)

अधि। ससम्भ्रमम्। स्वागतमार्य्यस्य ?। भद्र! शोधनक! आर्य्यस्यासनमुपनय।

शोध। आसनमुपनीय। एदं आसणं, एत्थ उवविसदु अज्जो। (ग)

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः नरेष्विति प्रस्तुतेन सह अप्रस्तुतानां नागादीनां वृत्तरूपैकधर्माभिसम्बन्धात् दीपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः।

घोणोन्नतमिति "आहिताग्न्यादिषु वा परम्" इत्युन्नतशब्दस्य परनिपातः।

वसन्ततिलका वृत्तम् ॥१६॥

(ख) चारु इति। अधिकृतेभ्यः व्यवहारदर्शने राज्ञा अधिकारीकृतेभ्यः अधिकरणिकेभ्य इत्यर्थः, "नमः स्वस्ति —" इत्यादिना चतुर्थी। स्वस्ति मङ्गलं किम्। हंहो इत्येतदेव सम्बोधनसूचकमव्ययम्। नियुक्ताः व्यवहारसम्पादने राज्ञा व्यापारिताः कायस्थादयः॥

---

উন্নত নাসিকাযুক্ত এবং অপাঙ্গপর্য্যন্ত-বিস্তৃত-নয়নযুগল-সমন্বিত মুখমণ্ডল ধারণ করিতেছেন। ইনি, অকারণ দোষারোপের পাত্র হইতে পারেন না। কারণ, হস্তী, গো, অশ্ব এবং মনুষ্য—ইহাদের আকৃতি, স্বযোগ্য চরিত্রকে পরিত্যাগ করে না॥১৬॥

(খ) চারুদত্ত। বিচারকমহাশয়ের মঙ্গল ত ?। (কার্য্যবিশেষে) নিযুক্ত মহাশয়গণ। আপনাদেরও কুশল ত ?।

অধিকরণিক। (সম্ভ্রমের সহিত) আর্য্যের শুভাগমন ত ?। ভদ্র! শোধনক। আর্য্যের নিমিত্ত আসন আনয়ন কর।

(গ) শোধনক। (আসন আনয়ন করিয়া) এই আসন, আর্য্য! ইহাতে উপবেশন করুন।

चारु। उपविशति।

शकारः। सक्रोधम्। आगदेशि ले इत्थिआघादआ! आगदेशि?। अहो! णाए ववहाले! अहो! धम्मे ववहाले! जं एअदाह—इत्थिआघादकाह आशणे दीअदि। सगर्व्वम्। भोदु, णं दाअदु। (घ)

अधि। आर्य्यचारुदत्त! अस्ति भवतोऽस्या आर्य्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा?। (ङ)

---

(ग) इदमासनम्, अत्रोपविशतु आर्य्यः।

(घ) आगतोऽसि स्त्रीघातक! आगतोऽसि?। अहो! न्याय्यो व्यवहारः! अहो! धर्म्म्यो व्यवहारः। यदेतस्मै स्त्रीघातकाय आसनं दीयते। भवतु, ननु दीयताम्।

---

(घ) शकार इति। अहो इत्यादिकं सोल्लुण्ठोक्तिद्वयम्। न न्याय्यो नापि धर्म्य इत्याशयः। तत्र कारणमाह यदिति। तथा च स्त्रीघातकतया पापिनो दण्डार्हस्य च अधिकरण एव आसनदानेन गौरवसूचनादन्याय्यः अधर्म्म्यश्च व्यवहार इति भावः। ननु दीयतामिति अचिरादेवास्य दुराचरणस्य फलं प्राप्स्यसीति भावः।

(ङ) अधि इति। प्रसक्तिः—सम्पर्क एव रमणसंसर्गः; प्रणयः—परस्परोपकारनिबन्धना आन्तरिकी च प्रगाढमत्रता; प्रीतिः—मधुरालापादिमात्रेण बहिर्मात्रमेव सौहार्द्दम्। अस्तीति काकुः, अस्ति किमित्यर्थः।

अत्रार्य्याया इत्यभिधानादेतदेव प्रतीयते यत् इदानीमिव तदानीं वेश्याप्रतिभावेषेव वेश्यासु भावत्राभीत्, प्रत्युत कलाचारस्य साधुत्वे तासां सम्मानगौरवमेवासीदिति।

---

चारुदत्त। (উপবেশন করিলেন।

(ঘ) শকার। (ক্রোধের সহিত) আসিয়াছিস্? ওরে স্ত্রীহত্যাকারী! আসিয়াছিস্?। ওহে! কি ন্যায়সঙ্গত বিচারালয়! কি ধর্ম্মসঙ্গত বিচারালয়! যে, এই স্ত্রীহত্যাকারীকে আসন দেওয়া হইতেছে!। (গর্ব্বের সহিত) হউক, ওহে! দাও।

चारु। कस्याः ?।

अधि। अस्याः। इति वसन्तसेनामातरं दर्शयति।

चारु। उत्थाय। आर्य्ये! अभिवादये। (च)

वृद्धा। जाद! चिरं मे जीव। स्वगतम्। अअं सो चारुदत्तो। सुणिक्खित्तं क्खु दारिआए जोव्वणं। (छ)

अधि। आर्य्य! गणिका तव मित्रम् ?। (ज)

(छ) जात! चिरं मे जीव। अयं स चारुदत्तः। सुनिक्षिप्तं खलु दारिकया यौवनम्।

---

(च) चारु इति। परोक्षस्थानवर्त्तिन्या वसन्तसेनाया मातृत्वं न ज्ञाता, अन्यस्थानवर्त्तित्वादेवेदमभिवादनमिति बोध्यम्।

(छ) इडे इति। "अयं स चारुदत्तः" इत्यनेन पूर्वं न दृष्ट इति प्रतीयते। दारिकया कन्यकया वसन्तसेनया, यौवनं सुनिक्षिप्तं साध्वेवार्पितम्, अविच्छिन्नत्वात् अस्य च विनयशीलत्वसौन्दर्य्यादिना महापुरुषेणैव भवितव्यत्वादिति भावः।

---

(ঙ) অধিকরণিক। আর্য্যচারুদত্ত! এই আর্য্যার কন্যার সহিত আপনার আসক্তি, উপকারনিবন্ধন প্রণয়, কিংবা আলাপমাত্রের ভালবাসা আছে কি ?।

চারুদত্ত। কাহার ?।

অধিকরণিক। ইহার। (এই বলিয়া বসন্তসেনার মাতাকে দেখাইলেন)

(চ) চারুদত্ত। (উঠিয়া) আর্য্যে! নমস্কার করি।

(ছ) বৃদ্ধা। বৎস! তুমি আমার চিরজীবী হও। (স্বগত) এই সেই চারুদত্ত। আমার কন্যা নিজের যৌবনকে ভাল স্থানেই নিক্ষেপ করিয়াছেন।

(জ) অধিকরণিক। আর্য্য! বেশ্যা আপনার প্রণয়িনী ?

चारु। लज्जां नाटयति। (झ)

शकारः। लज्जाए भीलुदाए वा
चालित्तं अलिए! णिगूहिदुं।
सअं मालिअ अत्थकालणा
दाणिं गूहदि ण तं हि भद्दके ॥१७॥

श्रेष्ठिकायस्थौ। अज्जचारुदत्त! भणाहि, अलं लज्जाए, ववहारो क्खु एसो। (ञ)

लज्जया भीरुतया वा चारित्रमलीक! निगूहितुम्।
स्वयं मारयित्वा अर्थकारणादिदानीं गूहति न तद्धि भद्रकम् ॥१७॥

---

(ञ) अधि इति। गणिका प्रकरणात् वसन्तसेना, तव मित्रं भवितुम्; किमिति काकुः।

(झ) चारु इति। नाटयति मुखावनमनादिनेति शेषः।

लज्जयेति। हे अलीक। असत्कार्यकरणादेव अलीकनामप्रिय। लज्जया भीरुतया वा, चारित्रम् आत्मचरित्रम्, निगूहितुं सम्वरीतुम्, इच्छसीति शेषः। नैतत् कदापि शक्यमिति भावः। अथ व्यवहारोऽपि न साधुरित्याह स्वयमिति। अर्थकारणात् धननिमित्तम्, स्वयं मारयित्वा स्त्रियं हत्वा, इदानीं गूहति तत्कारणं सम्वृणोति गोपायति भवानिति शेषः; तत् गूहनं न भद्रकं न भद्रजनोचितं न साधुजनयोग्यमित्यर्थः।

वैतालीयं छन्दः ॥१७॥

---

(ঝ) চারুদত্ত। (লজ্জা অভিনয় করিলেন)

শকার। হে অপ্রিয়! তুমি লজ্জা কিংবা ভয়বশতঃ চরিত্র গোপন করিতে ইচ্ছা করিয়াছ। ধনের জন্য নিজে স্ত্রী হত্যা করিয়া, এখন গোপন করিতেছ; তাহা ভাল হইবে না ॥১৭॥

(ঞ) শ্রেষ্ঠী ও কায়স্থ। আর্য্য চারুদত্ত! বলুন, লজ্জা করিবেন না; এটা মোকদ্দমা।

चारु । सलज्जम् । भो अधिकृताः ! मया कथमीदृशं वक्तव्यम्, यथा गणिका मम मित्रमिति । अथवा यौवनमत्रापराध्यति, न चारित्रम् । (ट)

अधि । व्यवहारः सविघ्नोऽयं त्यज लज्जा हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्य्यं छलमत्र न गृह्यते ॥१८॥

अलं लज्जया, व्यवहारस्त्वां पृच्छति । (ठ)

(ञ) आर्य्यचारुदत्त ! भण अल लज्जया, व्यवहार खल्वेष ।

(ट) चारु इति । अधिकृता । व्यवहारदर्शनाधिकारिणः ।। मयेति । ईदृशवृत्तान्तस्य आत्मनैव प्रकाशने गुरुतरलज्जाविर्भावात् तेनैव च वाच्यमानत्वादिति भावः । अत्र गणिकाया मित्रत्वे । चारित्रं स्वभावः । तथा च उद्दामयौवनावेगवशादेव गणिका मित्रीकृता न पुनः स्वभावदोषादित्याशयः ।

व्यवेति । अयं व्यवहारः सविघ्नः, महामूर्खेणापि अन्यन्तरेण प्रकर्णोपस्थापितत्वादिति भावः । अतएव हृदि स्थितां लज्जां त्यज, सत्यं ब्रूहि, धैर्य्यमवलम्ब्य अलं धैर्य्यमवलम्ब्य तूष्णीमवस्थानेनालमित्यर्थः, तथा अत्र व्यवहारे छलं कपटाचरणं न गृह्यते, मयेति शेषः ।

अत्र अवलम्ब्येत्यनभिधानेन प्रसक्तोऽपि न्यूनपदतादोषः, वक्तुः सम्भ्रमाभियोगदर्शनेन दुःखमपत्वात् प्रत्युत गुण एव, "क्वचिदानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात् ॥१८॥

(ট) চারুদত্ত। (লজ্জার সহিত) বিচারকমহাশয়! আমি (নিজ মুখেই) এরূপ বলিব কি করিয়া যে, বেশ্যা আমার প্রণয়িনী। অথবা, এ বিষয়ে যৌবনই অপরাধী, কিন্তু চরিত্র নহে।

অধিকরণিক। এই মোকদ্দমা স্বভাবতই বিঘ্নমণ্ডিত, সুতরাং আপনি হৃদয়স্থিত লজ্জা পরিত্যাগ করুন, সত্য বলুন, ধীর হইয়া থাকিবেন না, ইহাতে কপটতা গ্রহণ করা হয় না।১৮।

चारु । अधिकृत ! केन सह मम व्यवहारः ? ।

शकारः । साटोपम् । अले । मए शह ववहाले । (ड)

चारु । त्वया सह मम व्यवहारः सुदुःसहः । (ढ)

शकारः । अले । इत्थिआघादआ ! तं तादिशिं लअण-शद-भूशणिअं वशन्तशेणिअं मालिअ, शम्पदं कवड़-कावड़िके भविअ णिगूहेशि ? । (ण)

---

(ड) अरे । मया सह व्यवहारः ।

(ण) अरे स्त्रीघातक ! तां तादृशीं रत्नशत-भूषणिकां वसन्तसेनिकां मारयित्वा, साम्प्रतं कपट-कापटिको भूत्वा निगूहसि ? ।

---

(ठ) अलज्जितेति । व्यवहार एव त्वां पृच्छति, न पुनः कौतुकम्, येन तदभिधानमनावश्यकं स्यादिति भावः ।

(ड) शकार इति । साटोपं सगर्वम् ।

(ढ) चारु इति । सुदुःसहः अतीवदुःसह इत्यर्थः, "समे विरोधो मैत्री च" इत्यादि महाभारतोक्त्या दुर्जनेन सह सज्जनव्यवहारस्य नितान्तदुःखकरत्वादिति भावः ।

(ण) शकार इति । रत्नशत स्वर्णादिबहुरत्न भूषणं यस्यास्ताम् । कपटेन छलेन कापटिको वञ्चकः । निगूहसि तं हननं गोपयसि । मैतत् न्याय्यं न वा स्त्रीहारकमिति भावः ।

---

(ঠ) লজ্জা করিবেন না, মোকদ্দমাই আপনাকে জিজ্ঞাসা করিতেছে ।

চারুদত্ত । বিচারকমহাশয় ! কাহার সহিত আমার মোকদ্দমা ? ।

(ড) শকার । (গর্ব্বের সহিত) ওরে ! আমার সহিত মোকদ্দমা ।

(ঢ) চারুদত্ত । তোমার সহিত আমার মোকদ্দমা যে বড়ই দুঃসহ ।

(ণ) শকার । ওরে স্ত্রীঘাতক ! শত রত্নালঙ্কারে অলঙ্কৃত এবং

चारु। असम्बद्धः खल्वसि। (त)

अधि। आर्य्यचारुदत्त! अलमनेन। ब्रूहि सत्यम्। अपि गणिका तव मित्रम्?। (थ)

चारु। एवमेव।

अधि। आर्य्य! वसन्तसेना क्व?।

चारु। गृहं गता।

श्रेष्ठिकायस्थौ। कध गदा? कदा गदा? गच्छन्ती वा केण अणुगदा?। (द)

---

(द) कथ गता? कदा गता? गच्छन्ती वा केन अनुगता?।

---

(त) चारु इति। असम्बद्ध खल्वसि, त्वं वसन्तसेनया सह सर्व्वथैव सम्बन्धरहित मया सह च मत्सम्बन्धरहितोऽसीत्यर्थं, तथापि मामिममभियोगमुपस्थापयसीति भाव। केचित्तु अस्याभियोगस्य मिथ्यात्वेऽसम्बद्धप्रलापी असीत्यर्थं ब्रुवते।

(थ) अधि इति। अनेन प्रकारेण प्रलापेन अलम् निष्फलत्वादिति भाव।

(द) श्रेष्ठि इति। केण जनेन। केन जनेन सह गतेत्यर्थं।

---

তাদৃশ সুন্দরী সেই বসন্তসেনাকে হত্যা করিয়া, এখন কপটাচারী হইয়া, তাহা গোপন করিতেছ?।

(ত) চারুদত্ত। এ ঘটনায় তুমি সম্পূর্ণ সম্পর্কবিহীন রহিয়াছ।

(থ) অধিকরণিক। আর্য্যচারুদত্ত। উহার সহিত আলাপে প্রয়োজন নাই। আপনি সত্য বলুন,—বেশ্যা কি আপনার প্রণয়িনী?।

চারুদত্ত। এইরূপই বটে।

অধিকরণিক। আর্য্য। বসন্তসেনা কোথায়?।

চারুদত্ত। বাড়ী গিয়াছেন।

चारु । स्वगतम् । किं प्रच्छन्नं गतेति ब्रवीमि ? (ध)

श्रेष्ठिकायस्थौ । अज्ज । कधेहि । (न)

चारु । गृहं गता । किमन्यत् ब्रवीमि ।

शकारः । मम केलकं पुप्फकलण्डक-जिण्णुज्जाणं पवेशिअ, अत्थणिमित्तं बाहु-पाश-बलक्कालेण मालिदा । अए ! शम्पदं वदशि घलं गदेत्ति । (प)

चारु । आः, असम्बद्धप्रलापिन् ! ।

(न) आर्य ! कथय ।

(प) मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य अर्थनिमित्तं बाहुपाशबलात्कारेण मारिता । अरे ! साम्प्रतं वदसि—गृहं गतेति ।

(ध) चारु इति । प्रच्छन्नं गुप्तं यथा स्यात्तथा । प्रच्छन्नगमने "कथमस्मदया सह रथको न गत" इति सन्देह, तथा सह कश्चिद्गत इत्युक्तौ तु सा मिथ्येति, समर्थयितुमप्यशक्येति किमिदानीं ब्रवीमीति भाव ।

(प) शकार इति । अर्थनिमित्तं धनार्थं तदीयभूषणग्रहणार्थमित्यर्थः । बाहु एव पाशौ ताभ्यां यो बलात्कारो बलप्रयोगस्तेन ।

(द) শ্রেষ্ঠী ও কায়স্থ। কি ভাবে গিয়াছেন ? কখন গিয়াছেন ? যাইবার সময়ই বা কে তাঁহার সঙ্গে গিয়াছে ?।

(ধ) চারুদত্ত। (স্বগত) 'গোপনে গিয়াছেন' ইহাই কি বলিব ?।

(ন) শ্রেষ্ঠী ও কায়স্থ। আর্য্য। বলুন।

চারুদত্ত। বাড়ী গিয়াছেন। আর কি বলিব ?।

(প) শকার। আমার পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে প্রবেশ করাইয়া, ধনের নিমিত্ত, বলপূর্ব্বক বাহুপাশদ্বারা মারিয়া ফেলিয়াছ, ওরে ! এখন বলিতেছ—'বাড়ী গিয়াছেন।'

চারুদত্ত। আঃ। অসম্বদ্ধপ্রলাপী।

अभ्युच्चितोऽसि सलिलैर्न बलाहकानां
चाषाग्रपक्षसदृशं भृशमन्तराले ।
मिथ्यै तदाननमिदं भवतस्तथापि (१)
हैमन्तपद्ममिव निष्प्रभतामुपैति ॥१८॥

अभ्युच्चित इति । बलाहकानां मेघानाम्, सलिलैर्जलैः, अन्तराले मेघपदवीभूतलयोर्मध्यभागे आकाशे इत्यर्थः, चाषः स्वर्णचातक इति ख्यातः पक्षिविशेषस्तस्य अग्रपक्षः पक्षाग्रदेशस्तस्य सदृशं तुल्यम्, भृशमत्यन्तञ्च यथा स्यात्तथा, न अभ्युच्चितोऽसि न सिक्तोऽसि ; तथापि इदं भवत आननं मुखं कर्त्तृ, हैमन्तपद्ममिव, निष्प्रभतां द्युतिहीनतां मालिन्यमिति यावत्, उपैति प्राप्नोति ; अतएव एतत् तव उक्तिजातम्, मिथ्या । तथा च वृष्टिजलसेके चाषपक्षिणः पक्षाग्रदेशो मलिनीभवतीति प्रसिद्धिः, तव तु मुखमालिन्यं प्रति तादृशं किञ्चिदपि विशिष्टकारणं नोपलभ्यते ; तथापि इदं तवाननं हिमन्तकालीनं पद्ममिव, मलिनं जातम्, सुतरां त्वदेवमुक्तिजातं मिथ्या ; मिथ्यावाक्यकथनसमये प्रायेण सर्वेषामेव दुश्चिन्तया उद्वेगेन च मुखमालिन्यदर्शनादिति सरलार्थो भावार्थश्च ।

अत्र कारणाभावेऽपि निष्प्रभताप्राप्तिरूपकार्योत्पत्तेर्विभावना, चाषाग्रपक्षसदृशमित्यत्र आर्थी समासगतोपमा, हैमन्तपद्ममिव इत्यत्र श्रौती समासगतोपमा च, इत्येतासामङ्गाङ्गिभावेन सङ्करः । अत्र मुखनिष्प्रभतादर्शनेन "वचनजातं मिथ्या" इत्यनुमातव्यमिति व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ।

वसन्ततिलका वृत्तम् ॥१८॥

মেঘপথ ও ভূতল ইহার মধ্য স্থানে চাষপক্ষীর পক্ষাগ্রের ন্যায় তুমি, মেঘের জলে অত্যন্ত সিক্ত হও নাই ; তথাপি তোমার এ মুখমণ্ডল, হেমন্তকালের পদ্মের ন্যায় নিষ্প্রভতা প্রাপ্ত হইতেছে ; সুতরাং তোমার এই সকল উক্তি মিথ্যা ॥১৮॥

(१) तथाहि ।

अधि । अनान्तिकम् ।

तुलनञ्चाद्रिराजस्य समुद्रस्य च तारणम् ।
ग्रहणञ्चानिलस्येव चारुदत्तस्य दूषणम् ॥२०॥

प्रकाशम् । आर्य्यचारुदत्तः खल्वसौ कथमिदमकार्य्यं करिष्यति । घोणोन्नत्यादि पठति । (फ)

शकारः । किं पक्खवादेण ववहाले दोशदि ? । (ब)

(ब) किं पक्षपातेन व्यवहारो दृश्यते ? ।

---

तुलनमिति । अद्रिराजस्य हिमाचलस्य, तुलनमुत्तोलनमिव, समुद्रस्य तारणं हस्ताभ्यामुत्तीर्य्य परपारगमनमिव तथा अनिलस्य वायो, ग्रहणं वस्त्रादिना आवद्धीकरणमिव च चारुदत्तस्य दूषणं तदुपरि स्त्रीहत्यादोषारोपणम्, सर्व्वथं वासम्भवमिति भाव ।

अत्र इवशब्दस्य सर्व्वत्रान्वये तात्पर्य्यात् मालोपमालङ्कार प्रत्येकप्राधान्यसूचनार्थं प्रत्येकचकारोपादानमिति न दोष ॥२०॥

(फ) प्रकाशमिति । एतेन चारुदत्तस्यातिसज्जनत्वप्रसिद्धिर्व्यज्यते ।

(ब) शकार इति । पक्षपातेन चारुदत्तपक्षग्रहणेन, व्यवहारो दृश्यते विवादविषयो निर्णीयते किम् ? । कथमन्यथा विना कारणं सत्प्रश्नः सा, विना प्रमाणञ्च तन्निर्दोषत्वनिरूपणमिति भाव ।

अत्र द्युतिर्नाम विमर्शसन्धेरङ्गम्, "तर्जनोद्वेजने प्रोक्ता द्युतिः" इति लक्षणात् ।

---

অধিকরণিক। (শ্রেষ্ঠী ও কায়স্থের প্রতি চুপি চুপি।

হিমালয়ের উত্তোলন, হস্তসন্তরণে সমুদ্রের পরপারে গমন এবং বস্ত্রদ্বারা বায়ুর বন্ধন,—এই সমস্তের ন্যায় চারুদত্তের দূষণও অসম্ভব ॥২০॥

(ফ) (প্রকাশ্যে) উনি, প্রসিদ্ধ সেই চারুদত্ত, সুতরাং এই অকার্য্য কি করিয়া করিবেন। ("ঘোণোন্নতং" ইত্যাদি শ্লোক পাঠ করিলেন)

(ব) শকার। আপনি কি পক্ষপাতপূর্ব্বক বিবাদের পর্য্যালোচনা করিতেছেন ? ।

अयि। अपेहि मूर्ख।।

वेदार्थान् प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता
मध्याह्ने वीक्षसेऽर्कं न तव सहसा दृष्टिर्विचलिता।
दीप्ताग्नौ पाणिमन्तः क्षिपसि स च ते दग्धो भवति नो
चारित्र्याच्चारुदत्तं चलयसि न ते देहं हरति भूः ॥२१॥

वेदार्थानिति। त्वं प्राकृतः पामरः शूद्रादिरूपो नीचलोकः सन्नपीत्यर्थः वेदार्थान् वदसि विवृणोषि, तथापि ते तव जिह्वा, न च न तु, निपतिता स्खलिता। शूद्रादिनीचलोकस्य वेदार्थविवरणं निषिद्धं तद्विवरणे च जिह्वास्खलनमवश्यं भावितया अभिहितम्, सुतरां च तव जिह्वास्खलनमुचितमेवासीदिति भावः। मध्याह्ने काले, अर्कं सूर्यम्, वीक्षसे अभिपश्यसि, तथापि तव दृष्टिर्नयनम्, सहसा तत्क्षणादेव, न विचलिता न विकलीभूता। मध्याह्ने आभिमुख्येन सूर्यदर्शने दृष्टिवैकल्यं प्रत्यक्षसिद्धम्, तच्च तवाप्युपयुक्तमासीदित्याशयः। दीप्ताग्नौ अन्तः प्रज्वलितवह्निमध्ये, पाणिं हस्तम् क्षिपसि अर्पयसि, तथापि ते तव, स च स तु पाणिः, दग्धो नो न भवति। प्रज्वलितवह्निमध्ये हस्तार्पणे तस्य दाहः प्रत्यक्षसिद्ध एव, स च तवाप्युचित एवासीदित्यभिप्रायः। तथा चारित्र्यात् सत्स्वभावात्, चारुदत्तं चलयसि भ्रंशयसि मिथ्यादोषारोपणेन भ्रंशयितुमिच्छसीत्यर्थः, तथापि भूः पृथिवी, ते तव देहं न हरति गर्त्तादिना न विलुप्तीकरोति। "करोत्यभ्यन्तरं भूयः महदतिक्रमः" इति शास्त्रात् चारित्र्यतश्चारुदत्तस्य चालनं गुरुतरपापकर्मेति ततो भुवा तव देहहरणं सर्वथैवोचितमासीदिति भावः।

अत्र प्रकारे प्राकृतादिरूपः सन् न खलु तदाभौ वेदार्थवादादिकं कृतवानिति वस्तुसम्बन्धं असम्भवन् चारित्र्याच्चारुदत्तस्य चालनं प्राकृतादीनां वेदार्थवादादिकमिव नितरामसाध्यमिति सादृश्यं बोधयतीति निदर्शनालङ्कारः, स च बहुत्वान्मालारूपः, तथा वेदार्थवादादिरूपे हेतौ सत्यपि जिह्वापतनादिरूपतत्कार्यानुत्पत्तेर्विशेषोक्तिरपि मालारूपा, इत्यनयोः परस्परनिरपेक्षतया संसृष्टिः। तथापीत्यस्य अनुक्तावपि सामर्थ्या

---

अधिकमपि। मूल ह०, पूर्व।।

आर्य्यचारुदत्तः कथमकार्य्यं करिष्यति।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं
दत्तानि येन हि धनान्यनपेक्षितानि।
स श्रेयसां कथमिवैकनिधिर्महात्मा
पापं करिष्यति धनार्थमवैरिजुष्टम्? ॥२२॥

दण्डायामीनामगतिरिति न न्यूनपदत्वदोषः। तथा च साहित्यदर्पणे—"क्वचिन्न दोषो न गुणः" इति।

ज्वलयसीति मानुषस्थलाङ्गीकारात् ज्ञेयम्। तदनङ्गीकारे तु "चारित्र्याच्चारुदत्तं हरसि न तु तं" इत्येव पाठः साधीयान्।

"विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः" इत्यमरः।

शूद्रादिप्राकृतानां वेदार्थवाक्यादिनिषेधमाह तिथितत्त्वधृतं नृसिंहतापनीयम्। यथा—
"सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति।"

वीरागमश्च—"वेदवाक्य शूद्रस्य जिह्वा नश्यति वै ध्रुवम्।"

सुमधुरा वृत्तम्—"म्रौ भ्नौ नो गुरुश्चेद् सप्त-रसैश्छा सुमधुरा" इति लक्षणात्॥२१॥

आर्य्यस्याकार्य्यं समर्थयन्नाह कृत्वेति। हि तथाहि, येन चारुदत्तेन, समुद्रम्-उदकोच्छ्रयमात्रं जलोच्छ्रितमात्रं केवलजलप्राचुर्य्यमित्यर्थः शेषम् अवशिष्टं यस्य तं तादृशं कृत्वा, अनपेक्षितानि आत्मभोगार्थं निरपेक्षाणि धनानि दत्तानि निजभोगार्थं

তুমি নীচলোক হইয়া বেদার্থ বলিতেছ, কিন্তু তোমার জিহ্বা খসিয়া পড়িতেছে না, তুমি মধ্যাহ্নকালে সূর্য্যকে দেখিতেছ, কিন্তু তৎক্ষণাৎ তোমার দৃষ্টি, বিকল হইতেছে না, প্রজ্বলিত অগ্নির ভিতরে তুমি হস্তক্ষেপ করিতেছ, কিন্তু তোমার সে হস্ত দগ্ধ হইতেছে না এবং চারুদত্তকে সদাচার হইতে পরিভ্রষ্ট করিবার ইচ্ছা করিতেছ, কিন্তু পৃথিবী তোমার দেহ হরণ করিতেছেন না॥২১॥

আর্য্য চারুদত্ত কি করিয়া অকার্য্য করিবেন?।

शकारः। किं पक्खवादेण ववहाले दोअदि ?। (भ)

वृद्धा। हदास! जो दाणिं णासीकिदं सुवणभण्डअं रत्तिं चोरेहिं अवहिदं त्ति तस्स कारणादो चदुस्समुद्दसारभूदं रअणावलिं देदि, सो दाणिं अत्थकल्लवत्तस्स कारणादो इमं अकज्जं करेदि ?। हा जादे! एहि मे पुत्ति!। इति रोदिति। (म)

(भ) किं पक्षपातेन व्यवहारो दृश्यते ?।

(म) हताश। यस्तदानीं न्यासीकृतं सुवर्णभाण्डकं रात्रौ चौरैरपहृतमिति तस्य कारणात् चतुःसमुद्रसारभूतां रत्नावलीं ददाति, स इदानीमर्थकल्यवर्तस्य कारणादिदमकार्यं करोति ?। हा जाते। एहि मे पुत्रि।।

किञ्चिदपरक्षता येन सर्वाण्येव धनानि प्रार्थिभ्यो दत्तानीत्यर्थः, गोयशा महत्वानां मङ्गलजनकधर्माणामित्यर्थः, एकनिधि अद्वितीयाश्रय, महात्मा स चारुदत्त, धनार्थम् अलङ्कारमात्रहरणार्थम्, अवशिष्ट चारुदत्तस्य अनुर्वापि न सेवित न कृतमित्यर्थः, पाप स्त्रीहत्याकप पापकार्य्यम्, कथमिव करिष्यति ? कथमपि नेत्यर्थः, एकाश्रितवाद्यो दयाद्गमश्चतयीरवस्थानासम्भवादिति भाव।

अत्र समुद्रस्य उदकोच्छ्रयमात्रमेघलाभसम्भवेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः अर्थापत्तिश्च, अनयोरपि मिथो निरपेक्षतया संसृष्टिः।

हेतुर्नाम नाट्यालङ्कारश्च "हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्" इति लक्षणात्।

वसन्ततिलका वृत्तम् ॥२२॥

যিনি, সমুদ্রের জলরাশিমাত্র শেষ রাখিয়া নিজ ভোগের অপেক্ষা না করিয়া, সমস্ত ধনই দান করিয়া ফেলিয়াছেন, সৎকার্য্যের একমাত্র আধার সেই মহাত্মা চারুদত্ত, শত্রুও যাহা না করে, সেইরূপ পাপকার্য্য ধনের জন্য কি করিয়া করিবেন ? ॥২২॥

(ভ) শকার। আপনি কি পক্ষপাতপূর্ব্বক বিবাদের পর্য্যালোচনা করিতেছেন ?।

अधि। आर्य्यचारुदत्त! किमसौ पद्भ्यां गता? उत प्रवहणेनेति?।

चारु। ननु! मम प्रत्यक्षं न गता; तन्न जाने, किं पद्भ्यां गता, उत प्रवहणेनेति। (य)

प्रविश्य सामर्षो वीरकः।

पादप्पहार-परिभव-विमाणणा-बद्धगरुअ-वेरस्स।

अणुसोअन्तस्स इअं कधं पि रत्ती पभादा मे ॥२३॥

पाद प्रहार-परिभव विमानना बद्ध-गुरुक-वैरस्य।

अनुशोचत इयं कथमपि रात्रिः प्रभाता मे ॥२३॥

---

(म) हतेति। हता विधिनैव नाशिता आशा यस्य स, तत्सम्बोधनम्। प्रकारं प्रति आक्रोशोक्तिरियम्। यथा चारुदत्तः। रात्रि प्राप्येति शेषः। तस्य तत्परिशोधस्य। अयं कल्यवर्त्तस्य पूर्ववत् व्याख्यानात् अनवस्थायिनो धनस्य। करोतीति काकुवशात् करोति किमिति गम्यते, नैवेत्यर्थः।

(य) चारु इति। नन्विति सम्बोधने। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः।

---

(म) वृद्धा। হতাশ! তখন গচ্ছিত রাখা সোণার অলঙ্কার, রাত্রিতে চোরে নিয়াছিল। এই নিমিত্ত তাহার জন্য, যিনি চারি সমুদ্রের সারভূত রত্নমালা দিয়াছিলেন, তিনি এখন অচিরস্থায়ী ধনের জন্য, এই অকার্য্য করিতে পারেন কি?। হা বৎসে! আয় আমার কন্যা!। (এই বলিয়া কাঁদিতে লাগিল)

অধিকরণিক। আর্য্যচারুদত্ত। বসন্তসেনা কি পায়ে হাটিয়া গিয়াছেন, না গাড়ীতে?।

(য) চারুদত্ত। বিচারকমহাশয়। আমার সমক্ষে যান নাই, অতএব আমি জানি না যে, কি পায়ে হাটিয়া গিয়াছেন, না গাড়ীতে।

ता जाव अधिअरणमण्डवं उवसप्पामि। प्रवेष्टकेन। सुहं अज्जमिस्साणं ?। (र)

अधि। अये! नगररक्षाधिकृतो वीरकः!। वीरक! किमागमनप्रयोजनम् ?। (ल)

(र) तद् यावदधिकरणमण्डपमुपसर्पामि। सुखम् आर्य्यमिश्राणाम् ?।

पादेति। पादप्रहारेण चन्दनकक्षतपदाघातेन यः परिभवस्तिरस्कारः तेन या विमानना अपमानस्तया बद्धमुत्पादितं गुरुकं महत् वैरं चन्दनकेन सह शत्रुता यस्य तादृशस्य, अतएव अनुशोचतः "चन्दनकेन कथमित्थं कृतम्, कथं वा मया तत्प्रतिक्रिया न कृता" इत्यमनुतापं कुर्वतः, मे मम, इयं रात्रिः, कथमपि गुरुतरकष्टेन प्रभाता। स्वगतत्वेन यथावदुक्तिरियम्।

आर्य्या जातिः ॥१२॥

(र) तदिति। प्रवेष्टकेन दक्षिणभुजप्रसारणेन। तत्प्रसारणन्तु तथैव शिष्टाचारात्। "भुजः प्रवेष्टो दोर्बाहुः" इत्यमरः। आर्य्यमिश्राणां व्यवहारदर्शनेनियुक्तानामधिकरणिकादीनां सुखं किमिति काकुः।

(ल) अधि इति। नगररक्षायाम् अधिकृतो राज्ञा नियुक्तः।

প্রবেশ করিয়া ক্রোধের সহিত বীরক। পাদপ্রহারের তিরস্কার-নিবন্ধন অপমানে, চন্দনকের সহিত গুরুতর শত্রুতা জন্মাইয়া দিয়াছে, তাহাতেই আমি অনুতাপ করিতেছিলাম, এই অবস্থায় আমার এই রাত্রি, কোন রকমে প্রভাত হইয়াছে ॥২৩॥

(র) সুতরাং বিচারালয়ে যাই। (দক্ষিণবাহু প্রসারণপূর্ব্বক) অভিজ্ঞপ্রবরদিগের সুখ ত ?।

(ল) অধিকরণিক। ও! নগররক্ষাকার্য্যে নিযুক্ত বীরক!। বীরক! তোমার আসিবার প্রয়োজন কি ?।

वीरकः । ही ! बन्धण-भेअण-सम्भमे अज्जअं अखेसन्तो ओवारिदं पवहणं वज्जदि त्ति विआरं करन्तो अखेसन्तो "अरे ! तुए वि आलोइदे मए वि आलोइदव्वो" त्ति भणन्तो ज्जेव चन्दणमहत्तरएण पादेण ताड़िदो म्हि । एदं सुणिअ अज्जमिस्सा पमाणं । (व)

अधि । भद्र ! जानीषे कस्य तत् प्रवहणमिति ? ।

वीरकः । इमस्स अज्जचारुदत्तस्स । वसन्तसेणा आरुढ़ा,

(व) ही ! बन्धनभेदनसम्भ्रमे आर्यकमन्विष्यन्, अपवारितं प्रवहणं व्रजतीति विचारं कुर्वन् अन्विष्यन्—"अरे ! त्वयापि आलोकिते मयापि आलोकयितव्य" इति भणन्नेव, चन्दनमहत्तरकेण पादेन ताड़ितोऽस्मि । एतत् श्रुत्वा आर्यमिश्रा प्रमाणम् ।

(व) वीरक इति । ही इति विस्मये । बन्धनभेदनसम्भ्रमे बन्धनश‍ृङ्खलाच्छेदनकालीनत्वरायाम् । अपवारितम् आवृतम् । विचारम् "अस्मिन्नार्यको वर्त्तते न वा" इति वितर्कम् । अन्विष्यन् तस्मिन्नपवारितप्रवहणे आर्यकं मार्गयन् । तथा चन्दनकेन । महत्तरकः सुमहान् सेनानीरित्यर्थः । महत्तरकश्चासौ चन्दनश्चेति तेन । अग्निस्तोकादिवत् विशेषणस्य परनिपातः आर्यमिश्रा भवन्तः, प्रमाणं कर्त्तव्यनिर्द्धारकाः तस्य दण्डः कर्त्तव्यो न वेति निर्द्धारयितुमर्हन्तीत्यर्थः ।

(व) वीरক । আমি বন্ধনচ্ছেদনের ব্যস্ততার সময় আর্য্যককে অন্বেষণ করিতেছিলাম, তখন আবৃত একখানা গাড়ী যাইতেছিল, তাই তাহার পরীক্ষা করতঃ অন্বেষণ করিতেছিলাম, "ওহে ! তোমার দেখা হইলে, আমারও দেখা হইবে" ইহা বলিয়াছি, এমন অবস্থায় প্রধান সেনাপতি চন্দনক, আমাকে পাদপ্রহার করিয়াছে । ইহা শুনিয়া আপনারা কর্ত্তব্য নির্দ্ধারণ করিবেন ।

অধিকরণিক । ভদ্র ! সে গাড়ীখানা কাহার, তাহা জান কি ? ।

पुप्फकरण्डकजिण्णुज्जाणं कीलिदुं णीअदि त्ति पवहणवाहएण कहिदं। (श)

शकारः। पुणोवि शुदं अज्जेहिं ?। (ष)

अधि! एष भो! निर्म्मलज्योत्स्नो राहुणा ग्रस्यते शशी।
जलं कूलावपातेन प्रसन्नं कलुषायते ॥२४॥

---

(श) एतस्य आर्य्यचारुदत्तस्य, वसन्तसेना आरूढा, पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीयते इति प्रवहणवाहकेन कथितम्।

(ष) पुनरपि श्रुतमार्य्यैः ?।

---

(ष) शकार इति। एतेन च वीरकवाक्येन "मम कैतवा पुप्फकरण्डकजिण्णु-ज्जाण पवेसिय" इति पूर्व्वोक्तं प्रमाणीकृतमित्याशयः।

एष इति। भो इति दैवसम्बोधनम्। निर्म्मला ज्योत्स्ना यस्य स तादृशः शशी चन्द्रः, राहुणा एव ग्रस्यते। निर्म्मलकीर्त्तिश्चारुदत्तः खलेन स्त्रीहत्यापराधेन सम्बध्यत इति भावः। तथा प्रसन्नं निर्म्मलं जलम्, कूलस्य तीरस्य अवपातेन भग्नाम्भःपतनेन, कलुषायते आविलमिवाचरति। चिरनिर्म्मलं चारुदत्तचरित्रमिदानीं स्त्रीहत्यापवादेन मलिनीभवतीत्याशयः।

अत्र शशिरूपात् जलरूपाच्च अप्रस्तुतात् तस्मात् चारुदत्तस्य तच्चरित्रस्य च प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारद्वयम्, तयोश्च परस्परनिरपेक्षतया संसृष्टिः ॥२४॥

---

(শ) বীরক। এই আর্য্য চারুদত্তের। বসন্তসেনা আরোহণ করিয়াছিল, বিহার করিবার জন্য পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে নীত হইতেছে; গাড়ীর চালক এই কথা বলিয়াছিল।

(ষ) শকার। আপনারা পুনরায়ও শুনিলেন কি?।

অধিকরণিক। হায়! নির্ম্মল-জ্যোৎস্নাশালী এই চন্দ্রকে, রাহু গ্রাস করিতেছে এবং নির্ম্মল জল, তীর ভাঙ্গিয়া পড়ায় আবিল হইয়া উঠিয়াছে॥২৪॥

वीरक ! पश्चादिह भवतो न्यायं द्रक्ष्यामः । य एषोऽधिकरणद्वारि अश्वस्तिष्ठति, तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानं दृश्यताम्—अस्ति तत्र काचिद्विपन्ना स्त्री न वेति ? ।

वीरकः । जं अज्जो आणवेदि । इति निष्क्रम्य, प्रविश्य च । गदो ’म्हि तहिं, दिट्ठं च मए इत्थिआकलेवरं सावदेहिं विलुप्पन्तं । (ग)

श्रेष्ठिकायस्थौ । कधं तुए जाणिदं इत्थिआकलेवरं त्ति ? । (ङ)

वीरकः । सावसेसेहिं केस-हत्थ-पाणि-पादेहिं उवलक्खिदं मए । (च)

(ग) यदार्य्य आज्ञापयति । गतोऽस्मि तस्मिन्, दृष्टञ्च मया स्त्रीकलेवरं श्वापदैर्विलुप्यमानम् ।

(ङ) कथं त्वया ज्ञातं स्त्रीकलेवरमिति ? ।

(च) सावशेषैः केश-हस्त-पाणि-पादैरुपलक्षितं मया ।

(च) वीरक इति । श्वावशेषैः श्वापदभुक्तावशिष्टैः, केशैः पुरुषविलक्षणैः सुदीर्घ-

वীরক ! তোমার মোকদ্দমা পরে দেখিব। বিচারগৃহের দ্বারে এই যে ঘোড়াটা রহিয়াছে, ইহাতে আরোহণ করিয়া পুষ্পকরণ্ডকোদ্যানে যাইয়া দেখ, সেখানে কোন স্ত্রীলোক মরিয়া আছে কি না।

(গ) বীরক। আর্য্য যাহা আদেশ করেন। (এই বলিয়া নির্গত হইয়া পুনরায় প্রবেশ করিয়া) আমি সেখানে গেলাম এবং দেখিলাম একটা স্ত্রীলোকের শরীর রহিয়াছে, শ্বাপদজন্তুগণ তাহা ভক্ষণ করিতেছে।

(ঙ) শ্রেষ্ঠী ও কায়স্থ। আপনি, স্ত্রীলোকের শরীর কি করিয়া জানিলেন ?।

अधि । अहो ! धिग् वैषम्यं लोकव्यवहारस्य । (क)

यथा यथेदं निपुणं विचार्य्यते
तथा तथा सङ्कटमेव दृश्यते ।
अहो ! सुसन्ना व्यवहारनीतयो
मतिस्तु गौः पङ्कगतेव सीदति ॥२५॥

कुन्तले, हस्तपाणिपादेषु चलङ्कारचिह्नितेष्वित्याशय उपलक्षित ज्ञात स्त्रीकलेवरमिति पूर्व्वेणान्वय ।

(क) अधि इति । लोकव्यवहारस्य लोकचरितस्य वैषम्य पूर्व्वापरवैपरीत्यम् धिक् निन्दामीत्यर्थ । तथा च चारुदत्त पूर्व्वं परमसच्चरित एवासीत इदानीन्तु धनलोभेन स्त्रीहत्याकरणात् नितान्तदुश्चरित्रो जात इति चरित्रवैषम्यमेव निन्दामीति भाव ।

यथेति । यथा यथा येन येन प्रकारेण इद चारुदत्तकर्त्तृकस्त्रीहननम् निपुण सूक्ष्म विचार्य्यते तथा तथा तेन तेनैव प्रकारेण सङ्कटमेव दुर्बोधप्रकृतावस्थमेव दृश्यत ज्ञायते । अहो इति विषादे । व्यवहारनीतयो विचारनियमा सुसन्ना सुसम्पन्ना वादिकृताभियोगानुसारेणैव वीरकशकारादिसाक्षात् चारुदत्तदोष प्रति सम्यक् प्रमाणमेवोपस्थितमित्यर्थ , तु किन्तु तथापि मतिर्मम बुद्धि , पङ्कगता कर्द्दममग्ना गौरिव सीदति अवसन्ना भवति कर्त्तव्यनिश्चयाक्षमा भवतीत्यर्थ एकत्र दुर्व्वलीभूतत्वात् अन्यत्र सम्यगनुगमादिति भाव ।

अत्र मतेरवसादस्य कारणाभावेऽपि तदुत्पत्ते कि विभावना, उत व्यवहारनीतीनां सुसम्पन्नरूपकारणे सत्यपि कर्त्तव्यनिरूपणात्मककार्य्याभावरूपकार्य्यानुत्पत्ते विशेषोक्तिरिति सन्देहादनयो सन्देहसङ्करोऽलङ्कार अङ्गभूतया श्रौतोपमया पुन सङ्कीर्य्यते ।

वंशस्थविलं वृत्तम् ॥२५॥

(ক) বীরক। অবশিষ্ট কেশ, হস্ত, পাণিতল ও চরণ দর্শন করিয়া, আমি গণ্য করিতে পারিয়াছি।

(খ) অধিকরণিক। হায়! লোকচরিত্রের বৈষম্যকে আমি ধিক্কার করি।

चारु । स्वगतम् ।

यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति ।
एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति ॥२६॥

अधि । आर्य्यचारुदत्त । सत्यमभिधीयताम् ।

चारु । दुष्टात्मा परगुणमत्सरी मनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः ।

यथेति । मधुपा भ्रमरा, यथैव प्रथमे विकाशे पुष्पस्यैव विकाशारम्भ इत्यर्थः, समेत्य मिलित्वा, पातुं पुष्परसमिति शेषः, पुष्पं पतन्ति आगच्छन्ति ; एवं तथैव, विपत्तिकाले मनुष्यस्य, छिद्रेषु कार्य्यत्रुटिषु, अनर्था विपत्तयः, बहुलीभवन्ति बहुलीभूय उपस्थिता भवन्तीत्यर्थः । तथा च वसन्तसेनाया स्वर्णभाण्डरक्षाकाले तथा सह कस्यचित् सुहृदः प्रेरणाभावेन मम यत् छिद्रं जातम्, तदुपादायैव अस्मिन् विपत्तिकाले शकाराभियोगवीरकमात्यादयोऽनर्था उपस्थिता इत्याशयः ।

अत एवात्र अप्रस्तुतान्मनुष्यसामान्यात् प्रस्तुतस्य चारुदत्तरूपमनुष्यविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः श्रौतोपमया सङ्कीर्य्यते ।

उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥२६॥

---

যে যে প্রকারে সূক্ষ্মভাবে এই বিষয়ের বিচার করিতেছি, সেই সেই প্রকারেই সঙ্কট দেখিতেছি। হায়! বিচারের নিয়মগুলি সুসংলগ্নই হইতেছে, কিন্তু তথাপি আমার বুদ্ধি, কর্দ্দমমগ্ন গরুর ন্যায় অবসন্ন হইয়া পড়িতেছে ॥২৫॥

চারুদত্ত। (স্বগত) প্রথম বিকাশ আরম্ভ হইলে, মধু পান করিবার জন্য সম্মিলিত হইয়া ভ্রমরগণ যেমন পুষ্পের উপরে পতিত হয়, এইরূপ মানুষের বিপদের সময় ফাঁক পাইয়া নানা অনর্থ, সম্মিলিত হইয়া উপস্থিত হয় ॥২৬॥

অধিকরণিক। আর্য্যচারুদত্ত! সত্য বলুন।

किं यो यद्वदति मृषैव जातिदोषात्
तद्ग्राह्यं भवति ? न तद्विचारणीयम् ॥२७॥

अपि च। योऽहं लतां कुसुमितामपि पुष्पहेतोः
आकृष्य नैव कुसुमावचयं करोमि।
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि ? ॥२८॥

दुष्टात्मेति। इह जगति, दुष्टात्मा परहिंसादिना दूषितचित्त, परस्य गुणे दयादाक्षिण्यादिजनितसौजन्ये मत्सरी विद्वेषी, रागेण उत्कटविषयाभिलाषेण अन्ध कर्त्तव्यज्ञानहीन, तथा परं जनम्, हन्तु कामो यस्या सा हन्तुकामा बुद्धिर्यस्य स परोपकारचिकीर्षुरित्यर्थ, यो मनुष्य, जातिदोषात् दुर्जनजनितस्वस्वपजन्मदोषात् मृषैव मिथ्यैव, यत् वदति, तत् किं ग्राह्यम् अवलम्ब्य भवति ? कथमपि नेत्यर्थ। तर्हि तस्य किं कर्त्तव्यमित्याह नेति। तत् वदन कथनम् न विचारणीय न वितर्कणीयमेव अग्राह्यमेव कर्त्तव्यमित्यर्थ। तथा च जन्मस्वकमदोषदुष्ट अकारी यद्वदति तन्न ग्राह्यं न वा विचार्य्यमिति भाव।

अतएवात्रापि पूर्ववदेव अप्रस्तुतप्रशंसालङ्कार।

परमिति कारकसापेक्षत्वात् समास। प्रहर्षिणी छन्दम् ॥२७॥

य इति। य अहम् पुष्पहेतो, कुसुमान्यस्या सञ्जातानीति कुसुमिता तां लतामपि प्राणिनां का कथा अप्राणिनीं लतामपीत्यर्थ, आकृष्य कुसुमावचयं पुष्पचयनं नैव करोमि, आकर्षणेन तस्या व्यथा स्यादित्याशङ्कयैवेति भाव। स अहम्, भ्रमरपक्षस्येव रुचिर्दीप्तिर्यस्य तस्मिन् भ्रमरकृष्णवर्ण इत्यर्थ सुदीर्घे केशे, प्रगृह्य धृत्वा, रुदतीं प्रमदां

চারুদত্ত। দূষিতচিত্ত, পরগুণবিদ্বেষী, উৎকট বিষয়াভিলাষবশতঃ একেবারে অন্ধ এবং পরের অপকার করিবার অভিলাষী যে মানুষ, জন্ম-দোষনিবন্ধন একেবারে মিথ্যা যাহা বলিবে, এই জগতে তাহার তাহা কি গ্রাহ্য হইবে ? (কখনই নহে) এবং তাহা বিচার্য্যও নহে ॥২৭॥

शकारः । हंहो अधिअलणभोइआ । किं तुम्हे पक्खवादेण ववहालं पेक्खध ? जेण अज्जवि एशे हदाशचालुदत्ते आशणे धालीअदि । (ख)

अधि । भद्र ! शोधनक ! एवं क्रियताम् । (ग)

(ख) हंहो अधिकरणभोजकाः । किं यूयं पक्षपातेन व्यवहारं प्रेक्षध्वम् ? येन अद्यापि एष हताशचारुदत्तः आसने धार्य्यते ।

---

स्त्रियम्, कथं निहन्मि, कामपि नेत्यर्थः, तद्वधाभ्यासात् तादृशनिर्दयत्वासम्भवादिति भावः ।

अत्र पूर्वापरवस्तुसम्बन्धः सम्भवन्नेव लतायाः इव प्रमदायाः आकर्षणादौ अथवा स्यादिति सादृश्यं बोधयतीति सम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः, अर्थापत्तिश्च लुप्तोपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । तथा कुसुमशब्देन प्रक्रम्य पुनः पुष्पपदप्रयोगेण प्रक्रमभेदात् प्रकृतिविषयो भग्नप्रक्रमतादोषः, स च "तस्य हेतोः" इति पाठेन समाधेयः ।

वसन्ततिलका वृत्तम् ॥२८॥

(ख) शकार इति । धार्य्यते स्थाप्यते । तथा च वादिनः प्रतिवादिनो वा अपराधित्वनिर्णये तथोरासने स्थापनं गौरवसूचकत्वादन्याय्यमिति भावः ।

(ग) अधि इति । एवं क्रियतां चारुदत्तः आसनादवतार्य्यताम्, अपराधित्वसम्भावनादिति भावः ।

---

আবও, যে আমি, পুষ্পের জন্য পুষ্পিত লতাও আকর্ষণ করিয়া পুষ্প চয়ন করি না, সেই আমি, ভ্রমরপক্ষের ন্যায় কান্তিশালী এবং সুদীর্ঘ কেশে আকর্ষণ করিয়া, রোদনপরায়ণা অবলাকে কি হত্যা করিতে পারি ? ॥২৮॥

(খ) শকার। ওহে বিচারকগণ! আপনারা কি পক্ষপাতপূর্ব্বক বিচার করেন, যে এখনও এই হতভাগা চারুদত্তকে আসনে রাখিতেছেন।

शोधनकस्तथा करोति। (घ)

चारु। विचार्य्यतां भो अधिकृताः! विचार्य्यताम्।
इत्यासनादवतीर्य्य भूमावुपविशति।

शकारः। स्वगतम्। सहर्षं नर्त्तित्वा। ही, अशेण मए, कड़े पावे (१) अण्णश्श मत्थके णिवडिदे (२)। ता जहिं चालुदत्ताके उवविशदि, तहिं हग्गे उवविशामि। तथा कृत्वा। चालुदत्ता! पेक्ख पेक्ख मं, ता भण भण मए मालिदे त्ति। (ङ)

चारु। भो अधिकृताः!। दुरात्मा इति पूर्वोक्तं पठति। सनिश्वासं स्वगतम्।

(ङ) ही, अनेन मया कृतं पापमन्यस्य मस्तके निपातितम्। तद्यत्र चारुदत्त उपविशति, तत्राहमुपविशामि। चारुदत्त! प्रेक्षस्व प्रेक्षस्व माम्, तद्भण भण मया मारितेति।

(घ) शोध इति। तथा करोति चारुदत्तमासनादवतारयति।

(ङ) शकार इति। हीमाणी विस्मयानन्दे। तस्मिन् स्थाने उपविशामि, गुरु' किञ्चिदुपदिष्टमिति भाव तदुपदेशमेवाह चारुदत्तेत्यादि।

(ग) अधिकरणिक। ভদ্র। শোধনক। এইরূপ কর।

(ঘ) (শোধনক তাহাই করিল।)

চারুদত্ত। বিচার করুন, হে বিচারকগণ। বিচার করুন। (এই বলিয়া আসন হইতে নামিয়া ভূতলে বসিলেন)

(ঙ) শকার। (স্বগত। আনন্দের সহিত নৃত্য করিয়া) বাঃ! আমি পাপ করিয়াছিলাম, এই তাহা অন্যের মাথায় চাপাইলাম। তা, চারুদত্ত যেখানে বসিয়াছে, আমিও সেইখানে বসি। (তাহা করিয়া) চারুদত্ত। আমাকে দেখ্ দেখ্, তা, বল্ বল্ যে, "আমি মারিয়াছি।"

(१) किद पाव। (२) णिवडिदे।

मैत्रेय भोः ! किमिदमद्य ममोपघातो
हा ब्राह्मणि ! द्विजकुले विमले प्रसूता ।
हा रोहसेन ! नहि पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन नित्यम् ॥२९॥

प्रेषितश्च मया तद्वार्त्तान्वेषणाय मैत्रेयो वसन्तसेनासका-

मैत्रेयेति । भो मैत्रेय ! तदाख्यवयस्य ! अद्य इदं विपत्स्वरूपं किं कथम्, उपस्थितमिति शेषः । यतः, मम उपघातो विनाश एव आगत इति शेषः । हा ब्राह्मणि ! पत्नि ! धूते ! विमले निर्दोषतया निष्कलङ्के द्विजकुले ब्राह्मणवंशे, प्रसूता उत्पादिता, तथापीदानीं कलङ्कितासीति शेषः, अनेन मत्कलङ्केनैव तवापि कलङ्कोदयादिति भावः । हा रोहसेन ! तदाख्यपुत्र ! मे मम विपत्तिं नहि पश्यसि, किन्तु परं केवलं यद्व्यसनं बाल्यखेला तेन, मिथ्यैव निरर्थकमेव, नित्यं नन्दसि आनन्दमनुभवसि, नातःपरमपि तदनुभवितव्यमिति भावः ।

अत्र उपस्थितमित्यादिपदानामनुक्तत्वेऽपि न न्यूनपदतादोषः, प्रत्युत गुण एव वक्तुर्विषादमयत्वात् "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति दर्पणोक्तेः ।

शोकवशेन मम समुत्पन्नभ्रमात् खेदो नाम विमर्शसन्ध्यङ्गम्—"मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः" इति दर्पणलक्षणात् । आक्रन्दो नाम नाट्यालङ्कारश्च "आक्रन्दः प्रलपितं शुचा" इति तल्लक्षणात् ।

वसन्ततिलका वृत्तम् ॥२९॥

চারুদত্ত। হে বিচারকগণ। ("দুষ্টাত্মা" ইত্যাদি পূর্ব্বোক্ত শ্লোক পাঠ করিলেন, পরে নিশ্বাসের সহিত স্বগত)

হে মৈত্রেয়! আজ আমার এই কি উপস্থিত হইল। এ যে একেবারে মৃত্যুই উপস্থিত হইল।। হা ব্রাহ্মণি! তুমি নির্ম্মল ব্রাহ্মণবংশে জন্মিয়াছিলে! হা রোহসেন! আমার বিপদ দেখিলে না! তুমি কেবল বাল্যখেলায় সর্ব্বদা অনর্থক আনন্দ অনুভব করিতেছ ॥২৯॥

शम्, शकटिकानिमित्तञ्च तस्य प्रदत्तान्यलङ्करणानि प्रत्यर्पयितुम् । तत् कथं चिरयते ? । (च)

तत प्रविशति गृहीताभरणो विदूषकः ।

विदू । पेसिदो म्हि अज्जचारुदत्तेण वसन्तसेणासआसं तहिं अलङ्करणाइं गेण्हिअ, जधा—'अज्जमित्तेअ ! वसन्तसेणाए वच्छो रोहसेणो अत्तणो अलङ्कारेण अलङ्करिअ जणणीसआसं पेसिदो, इमस्स आहरणं दादव्वं, ण उण गेण्हिदव्वं, ता समप्पेहि त्ति । ता जाव वसन्तसेणासआसं ज्जेव गच्छामि । परिक्रम्यावलोक्य च आकाशे । कधं भावरेभिलो ! । भो भावरेभिल !

(छ) प्रेषितोऽस्मि आर्य्यचारुदत्तेन वसन्तसेनासकाशम्, तस्मिन्नलङ्करणानि गृहीत्वा, यथा—"आर्य्यमैत्रेय ! वसन्तसेनया वत्सो रोहसेन आत्मनोऽलङ्कारेणालङ्कृत्य जननीसकाशं प्रेषितः, अस्या आभरणं दातव्यम्, न पुनर्ग्रहीतव्यम्, तत् समर्पये"ति ।

(च) प्रेषित इति । तस्या वसन्तसेनाया एव वार्त्तान्वेषणाय कीदृगास्ते इति वृत्तान्तानुसन्धानाय । मैत्रेयनामा विदूषकः । शकटिकानिमित्तं रोहसेनस्य क्रीडनाय सुवर्णशकटनिर्म्माणार्थम्, तस्य रोहसेनस्यैव निमित्तं, प्रदत्तानि वसन्तसेनया अर्पितानि । चिरयते विलम्बते मैत्रेय इति शेषः ।

अत्र प्रथमवाक्ये वसन्तसेनापदात् पूर्वं तद्वार्त्तान्वेषणायेति तत्पदावस्थानात् "तीर्थे नदीयं गजसेतुबन्धात्" इत्यादिदर्शितोदाहरणवत् अस्थानस्थपदतादोषः, स च "प्रेषितश्च मया वसन्तसेनावार्त्तान्वेषणाय मैत्रेयस्तत्सकाशम्" इति पाठेन समाधेयः ।

(চ) গাড়ী তৈয়ারি করিবার জন্য, বসন্তসেনা রোহসেনকে যে অলঙ্কারগুলি দিয়াছিলেন, তাহা ফিরাইয়া দিবার জন্য এবং বসন্তসেনার খবর লইবার জন্য, আমি মৈত্রেয়কে বসন্তসেনার নিকট পাঠাইয়াছিলাম। তা, তিনি (মৈত্রেয়) বিলম্ব করিতেছেন কেন ? ।

তদনন্তর অলঙ্কার লইয়া বিদূষকের প্রবেশ।

किं णिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि ?। आकर्ण्य । किं भणासि ? "पिअवअस्सो चारुदत्तो अधिअरण-मण्डवे सद्दाइदो त्ति ?।" ता णहु अप्पेण कज्जेण होदव्वं । विचिन्त्य । ता पच्छा वसन्तसेणासआस गमिस्सं । अधिअरण-मण्डवं दाव गमिस्सं । परिक्रम्यावलोक्य च । इदं अधिअरणमण्डवं, ता जाव पविसामि । प्रविश्य । सुहं अधिअरणभोइआणं ?। कहिं मम पिअवअस्सो ?। (छ)

तद्यावत् वसन्तसेनासकाशमेव गच्छामि। कथं भावरेभिलः। भो भावरेभिल। किं निमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे ?। किं भणसि ? प्रियवयस्यश्चारुदत्त अधिकरणमण्डपे समाहूत इति ?। तत् न खलु अल्पेन कार्येण भवितव्यम्। ततः पश्चात् वसन्तसेनासकाशं गमिष्यामि। अधिकरणमण्डपं तावत् गमिष्यामि। अयमधिकरणमण्डपः, तद्यावत् प्रविशामि। सुखमधिकरणभोजकानाम् ?। कस्मिन् मम प्रियवयस्य ?।

(ङ) विट्ट इति। तस्मिन् वसन्तसेनासकाश एव। अथवा वसन्तसेनायाः। तत्सकाशे।

आकाशे शब्दं विना पात्रमित्यर्थः। तथा च साहित्यदर्पणे—

"किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयोज्यते।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥"

भावी विद्वान्। "भावो विद्वान्" इत्यमरः। रेभिलो गायकत्वेन प्राकपरिचित कश्चित् चारुदत्तबन्धुः। समाहूत आहूतः। कार्येण प्रयोजनेन।

(छ) বিদূষক। আর্য্যচারুদত্ত আমাকে বসন্তসেনার নিকট পাঠাইয়াছেন এবং বলিয়াছেন যে, "আর্য্যমৈত্রেয়! বসন্তসেনা, বৎস রোহসেনকে নিজের অলঙ্কার দিয়া অলঙ্কৃত করিয়া জননীর নিকট পাঠাইয়াছিলেন। ইহার অলঙ্কার ফিরাইয়া দিতে হইবে, কিন্তু গ্রহণ করা হইবে না, অত-

अधि । नन्वेष तिष्ठति ।

विदू । वअस्स ! सोत्थि दे ? । (ज)

चारु । भविष्यति । (झ)

विदू । अवि क्खेमं दे ? । (ञ)

चारु । एतदपि भविष्यति । (ट)

(ज) वयस्य ! स्वस्ति ते ।  (ञ) अपि क्षेमं ते ? ।

(ज) विदू इति । स्वस्ति मङ्गलं ते इति काकुवशेन प्रश्नः ।

(झ) चारु इति । भविष्यतीत्यनेन वर्त्तमाने अस्वस्ति वर्त्तत इति ध्वनितम् ।

(ञ) विदू इति । क्षेमं सर्वतो रक्षा, न काचिदपि विपत्तिरित्यर्थः । "क्षेमं कल्याणरक्षयोः । क्षेमा चण्डा" इति त्रिकाण्डशेषः ।

এব অলঙ্কারগুলি লইয়া, সেইখানে গিয়া সমর্পণ করি।" তা, বসন্তসেনার নিকটেই যাই। (পাদক্ষেপপূর্ব্বক দর্শন করিয়া, শূন্যে) বিদ্বান্ রেভিল যে!। হে বিদ্বন্ রেভিল! আপনাকে অত্যন্ত উদ্বিগ্নের ন্যায় লক্ষ্য করিতেছি কেন ?। (শুনিয়া) কি বলিলেন—"প্রিয়বয়স্য চারুদত্তকে বিচারালয়ে ডাকান হইয়াছে, এই জন্য।" তা, অল্প ঘটনা হইবে না। (চিন্তা করিয়া) সুতরাং বসন্তসেনার নিকট পরে যাইব, (আগে) বিচারালয়েই যাই। (পাদক্ষেপপূর্ব্বক দর্শন করিয়া) এই বিচারালয়, তা, প্রবেশ করি। (প্রবেশ করিয়া) বিচারকমহাশয়দিগের মঙ্গল ত ?। আমার প্রিয়বয়স্য কোথায় ?।

অধিকরণিক। এই যে রহিয়াছেন।

(জ) বিদূষক। বয়স্য! আপনার মঙ্গল ত ?।

(ঝ) চারুদত্ত। হইবে।

(ঞ) বিদূষক। আপনার সব দিক্ রক্ষা আছে ত ?।

(ট) চারুদত্ত। ইহাও হইবে।

विदू । भो वअस्स ! किं णिमित्तं उव्विग्गो उव्विग्गो विअ लक्खोअसि ? कुदो वा मद्दाइदो ? । (ठ)

चारु । वयस्य !

मया खलु नृशंसेन परलोकमजानता ।
स्त्री रतिर्वाविशेषेण शेषमेषोऽभिधास्यति ॥३०॥

(ठ) भो वयस्य ! किं निमित्तमुद्विग्न उद्विग्न इव लक्ष्यसे ? कुतो वा मन्दायित ? ।

(ट) चारु इति । अत्रापि पूर्ववद्‌व्याख्यानेन ध्वनिर्ज्ञेय ।

(ठ) विदू इति । कुत कस्माद्धेतो । मन्दायित श्राह्नत ।

मयेति । नृशंसेन घातुकेन, परलोकं नरकाख्यलोकान्तरम्, अजानता, स्त्रीहत्यायां कृतायां घोरनरकयातना भवतीत्यबुध्यमानेनेत्यर्थः, मया खलु स्त्री कामिनी वा अथवा स्त्रीमात्रकथनेन किमित्यर्थः, अविशेषेण अयाथार्थ्येन, रतिः मदनभार्य्येव लोकोत्तर-सौन्दर्य्यात् साक्षात् कामभार्य्येवत्यर्थः, शेषम् एतद्वाक्यावशिष्टाम् मारितेति पदमित्यर्थः, एष नयनभङ्ग्या निर्द्दिश्यमानो जन शकार इति तात्पर्य्यम्, अभिधास्यति वक्ष्यति ; नितान्तामङ्गलव्यञ्जकत्वात् निरतिशयनिष्ठुरतासूचकत्वात् गुरुतरपापप्रत्यायकत्वाच्च मारितेति पद मया नोच्चारयितुं शक्यत इति भाव । अतएव तद्विचारार्थं धर्म्माधिकरणिकेन मन्दायित इति समुदायार्थ ।

अत्र "मया कथमपि न मारिता" इति विशेषप्रतिपत्तये स्त्रीहत्यारूपस्य अनिष्टार्थस्य शेषमित्यादिना सूचितेन मारितेति पदेन विध्याभासकरणात् आक्षेपालङ्कारभेद "अनिष्टस्य तथार्थस्य विध्याभास परो मत" इति दर्पणलक्षणात्, तथा रतिवसन्तसेनयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्ति द्वितीयार्द्धे छेकानुप्रासो वृत्त्यनुप्रासश्च इत्येतेषां मिथो निरपेक्षतया संसृष्टि ।

"उपकृत बहु तत्र किमुच्यते" इत्यादिदर्पणोदाहरणवत् वक्तव्यार्थस्य अत्यन्तासम्भवता-सूचनाय गुरुतरदुःखक्षोभात् स्त्रीकारोक्तिरियम् । अतएव तदर्थे "नाहं नृशंस न वा

(ठ) বিদূষক। বয়স্য! আপনাকে অত্যন্ত উদ্বিগ্নের ন্যায় লক্ষ্য করিতেছি কেন? ডাকানই বা হইয়াছে কেন?।

विदू। किं किं। (ड)

चारु। कर्णे। एवमेवम्। (ढ)

विदू। को एव्वं भणादि ?। (ण)

चारु। अङ्गुल्या शकारं दर्शयति। नन्वेष तपस्वी हेतुभूतः, कृतान्तो मां व्याहरति। (त)

(ड) किं किम्। (ण) क एवं भणति ?।

परलोकानभिज्ञ, अतएव हि सा स्त्री न मया मारिता" इति वस्तु व्यज्यते। अतएवात्र मनोरथो नाम नाट्यालङ्कारश्च। यथा दर्पणे—

"मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्" इति ॥१०॥

(ड) विदू इति। किं किमिति द्विरुक्त्या मनोदुःखं गो व्यज्यते।

(ढ) चारु इति। एवमेवम् अलङ्कारापहरणार्थं मया वसन्तसेना व्यापादितेत्यनेनानेन प्रकारेण मां प्रत्यभियोग इत्यर्थः। कर्णे कथनन्तु ब्राह्मणस्यास्ये तथैव व्यवहारात्।

(त) चारु इति। अङ्गुल्या अङ्गुलीसङ्केतेन। तपस्वी क्षुद्र, हेतुभूत मन्यव्रत इति शेषः। कृतान्तो दैवम्, व्याहरति उत्तमर्णं ब्रवीति। दैवं विना ब्राह्मणस्य विपरीतकार्ये अस्य क्षुद्रस्य का शक्तिरिति भावः।

চারুদত্ত। বয়স্য। নৃশংস এবং পরলোকানভিজ্ঞ আমি, একটী স্ত্রীকে, অথবা সাক্ষাৎ রতিদেবীকে—। এই ব্যক্তি অবশিষ্ট অংশ বলিবে ॥৩০॥

(ড) বিদূষক। কি কি !।

(ঢ) চারুদত্ত। (কর্ণে) এইরূপ এইরূপ।

(ণ) বিদূষক। কে এরূপ বলে ?।

(ত) চারুদত্ত। (অঙ্গুলিসঙ্কেত দ্বারা শকারকে দেখাইলেন)। এই ক্ষুদ্র লোকটা হেতু বটে, (কিন্তু বাস্তবিক পক্ষে) দৈবই আমাকে এই কথা বলিতেছেন।

विदू। जनान्तिकम्। एव्वं कीस ण भणीअदि गेहं गदे त्ति?। (थ)

चारु। उच्यमानमप्यवस्थादोषान्न गृह्यते। (द)

विदू। भो भो अज्जा! जेण दाव पुरट्ठावण-विहाराराम-देउल तड़ाग-कूव-जूवेहिं अलङ्किदा णअरी उज्जइणी, सो अणोसो अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणुचिट्ठदि त्ति?। सक्रोधम्। अरे रे काणेलीसुदा! राअस्साल-सण्ठाणआ! उस्सुङ्खलआ! किद-जण-दोसभण्डआ! बहु-सुवण्ण-

---

(थ) एवं किं न भण्यते गेहं गतेति?।

(ध) भो भो आर्य्याः! येन तावत् पुरस्थापन विहाराराम देवकुल तड़ाग कूप-यूपैरलङ्कृता नगरी उज्जयिनी, स अनीशः अर्थकल्यवर्त्तकारणादीदृशमकार्य्यमनुतिष्ठतीति?। अरे रे काणेलीसुत! राजश्यालसंस्थानक! उच्छृङ्खलक! कृतजनदोष

---

(द) चारु इति। अवस्थादोषात् दारिद्र्यदशाया सर्व्वत्र यत्नदोषात् न गृह्यते विचारपतिना सत्यतया नाङ्गीक्रियते।

(ध) विदू इति। पुरस्थापन पथिकदरिद्रादिनिवासार्थं भवननिर्म्माणम्, विहारो बौद्धभवनम्, आराम उपवनम्, देवकुलं देवगृहम्, तड़ागो बृहज्जलाशयः, कूप क्षुद्र-जलाशय, यूपो यज्ञीयकाष्ठविशेष एतैः स्वयं तैस्तैर्निर्म्मापितैरिति तात्पर्य्यम्। अनीशः निर्धनतया असमर्थः सन्, अर्थकल्यवर्त्तकारणात् अवस्थाविपन्नहेतोः, ईदृश

---

(থ) বিদূষক। (চারুদত্তের প্রতি চুপি চুপি) এইরূপ বলেন নাই কেন? যে বাড়ী গিয়াছে।

(দ) চারুদত্ত। বলিয়া থাকিলেও, অবস্থার দোষে গ্রাহ্য করেন নাই।

(ধ) বিদূষক। ওহে ওহে মহাশয়গণ! যিনি পথিক ও দরিদ্র-গণের বাসের জন্য ভবননির্ম্মাণ, বৌদ্ধশালা, উদ্যান, দেবগৃহ, পুষ্করিণী,

मणिद-मक्कड़ग्रा ! भण भण मम अग्गदो, जो दाणिं मम पिअवग्रस्सो कुसुमिदं माधवीलदं पि आकिट्टिअ कुसुमावचग्रं ण करेदि, कदावि आकिट्टिदाए पल्लवच्छेदो भोदित्ति, सो कधं एरिसं अकज्जं उहअलोअविरुद्धं करेदि ?। चिट्ठ रे कुट्टणि-पुत्ता ! चिट्ठ, जाव एदिणा तव हिअअकुड़िलेण दण्डकट्ठेण मत्थअं दे सदखण्डं करेमि। (घ)

भाण्ड। बहुसुवर्णमण्डितमर्कटक। भण भण ममाग्रतः, य इदानीं मम प्रियवयस्यः कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं न करोति आकृष्टतया पल्लवच्छेदो भवतीति, स कथमीदृशमकार्य्यमुभयलोकविरुद्धं करोति ?। तिष्ठ रे कुट्टनीपुत्र ! तिष्ठ, यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि।

---

त्वीदृश्याकृपम्, अकार्य्यमप्रशस्तकर्म्म, अनुतिष्ठतीति काकु, कथमपि नानुतिष्ठतीत्यर्थः। काणेलीति शकारमातुर्नाम सा च कुलटासीदिति तत्सुतसम्बोधनेन निन्दा व्यज्यते। उच्छृङ्खल ! आत्मलोकव्यवहारादिभिरनियमितस्वभाव। शठौ अन्यान् दोषी येन स चासौ भण्डश्चेति तत्सम्बोधनम्, बहुभिः सुवर्णैः स्वर्णालङ्कारैर्मण्डितो भूषितश्चासौ मर्कटश्च, कुत्सितवानरश्चेति तत्सम्बोधनम्। उभयलोकविरुद्ध निन्दापापाभ्यामिहामुत्र विरुद्धम्। तव हृदयवत् कुटिलेन वक्रेण, दण्डकाष्ठेन मदीयकाष्ठनिर्म्मितलगुडेन।

---

কূপ ও যজ্ঞস্থানপ্রভৃতি করিয়া, এই উজ্জয়িনী নগরীকে অলঙ্কৃত করিয়াছেন, তিনি এখন ধনাভাবে প্রভাবহীন হইয়া, অচিরস্থায়ী ধনের নিমিত্ত, এইরূপ অকার্য্যের অনুষ্ঠান করিতে পারেন কি ?। (ক্রোধের সহিত) ওরে বে কাণেলীর পুত্র ! রাজার শালা সংস্থান। উচ্ছৃঙ্খল ! লোকের দোষকারী ! ভণ্ড ! বহুস্বর্ণভূষিত বানর ! তুই বল্ বল্ আমার সম্মুখে বল্। আকর্ষণ করায় পল্লব ছিন্ন হইতে পারে এই আশঙ্কায়, আমার যে প্রিয়বয়স্য, পুষ্পিত মাধবীলতাকেও, আকর্ষণ করিয়াও, পুষ্প চয়ন করেন না, তিনি এইরূপ উভয়লোকবিরুদ্ধ অকার্য্য

शकारः। सक्रोधम्। सुणन्तु सुणन्तु अज्जमिश्शा। चालुदत्ताकेण शह मम विवादे ववहाले वा, ता कीश एशे काकपदशीशमस्तके मम शिले शदखुण्डे कलेदि?। मा दाव ले दाशीए पुत्ता। दुट्टवडुका।। (न)

विदूषको दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति। शकारः सक्रोधमुत्थाय ताडयति। विदूषकः प्रतीपं ताडयति। अन्योन्यं ताडयतः। विदूषकस्य कक्षदेशादाभरणानि पतन्ति।

शकार। तानि गृहीत्वा दृष्ट्वा ससम्भ्रमम्। पेक्खन्तु पेक्खन्तु अज्जा।

(न) शृण्वन्तु शृण्वन्तु आर्यमिश्राः। चारुदत्तेन सह मम विवादो व्यवहारो वा, तत् केन एष काकपदशीर्षमस्तकः मम शिरः शतखण्डं करोति?। मा तावत् रे दास्याः पुत्र। दुष्टबटुक।।

(न) शकार इति। काकपदवत् वायसचरणवत् विरलं ... शीर्षं शिरः मस्तकञ्च यस्य तत्सम्बोधनम्। शकारवचनादेव शीर्षमस्तकेति द्विरुक्तिः। मा तावत् पुनरेव भवति शेषः।

কি করিয়া করিবেন?। থাক্ রে কুট্টনীর ছেলে। থাক্, তোর মনের ন্যায় কুটিল এই দণ্ডকাষ্ঠ দিয়া তোর মাথা শতখণ্ড করিব।

(ন) শকার। (ক্রোধের সহিত) সভ্যপ্রবরগণ। শুনুন শুনুন। চারুদত্তের সঙ্গে আমার বিবাদ বা মোকদ্দমা, তা, কাকের পায়ের ন্যায় সরু মাথা এই লোকটা, আমার মাথা শতখণ্ড করিতে চায় কেন?। ওরে দাসীর পো। দুষ্টবামুন। ফের ওরূপ বলিস্ না।

(বিদূষক, দণ্ড উত্তোলন করিয়া পূর্ব্বোক্ত পাঠ করিল। শকার, ক্রোধের সহিত উঠিয়া প্রহার করিল। বিদূষক প্রতিপ্রহার করিল। পরস্পর প্রহার করিতে লাগিল। বিদূষকের কক্ষদেশ হইতে অলঙ্কারগুলি পড়িয়া গেল।)

एदे क्खु ताए तवस्सिणीए केलका अलङ्कारा। चारुदत्तमुद्दिश्य। इमश्श अत्थकल्लवत्तश्श कालणादो एशा मालिदा वावादिदा अ। (प)

अधिकृताः सर्वे अधोमुखाः स्थिताः।

चारु। जनान्तिकम्।

अयमेवंविधे काले दृष्टो भूषणविस्तरः।
अस्माकं भाग्यवैषम्यात् पतितः पातयिष्यति ॥३१॥

(प) पश्यन्तु देवतानामार्याः। एते खलु तस्यास्तपस्विन्या अलङ्काराः। अस्य अर्थकल्यवर्त्तस्य कारणादेषा मारिता व्यापादिता च।

(प) शकार इति। आश्चर्येण भयेन सहेति समाध्ययम्। स्वदनेव व्यापादितायाः अलङ्कारदर्शनेन स्वस्यैवापराधप्रमाणात् स च्छलमिति बोध्यम्। तस्यास्तपस्विन्याः शोच्यायाः वसन्तसेनायाः।

अयमिति। अस्माकं ममैव्यर्थं, भाग्यस्य अनुकूलदैवस्य वैषम्यात् वैपरीत्यात् दुर्दैवादिति तात्पर्य्यम्, एवं विधे काले मदपराधप्रवर्त्तनसमये, पतितस्तस्याः कायात् विगलितः, दृष्टो विचारकादिभिः अयमेवावलोकितः, अयं भूषणविस्तरः अलङ्कारसमूहः, पातयिष्यति विपदमतीव मामिति शेषः, एतद्दर्शनेन कस्य कस्य दृढनिश्चयत्वादिति भावः ॥३१॥

(প) শকার। (সেই অলঙ্কারগুলি লইয়া, দেখিয়া, ভয়ের সহিত) সভ্যগণ! দেখুন দেখুন, সেই হতভাগিনীর এই অলঙ্কারগুলি। (চারুদত্তের প্রতি) অচিরস্থায়ী এই ধনের জন্যই বসন্তসেনাকে আগে প্রহার করিয়াছে, পরে খুন করিয়া ফেলিয়াছে।

(সকল বিচারকগণ অধোমুখে অবস্থান করিতে লাগিলেন।)

চারুদত্ত। (বিদূষকের প্রতি চুপি চুপি)

আমার দুর্ভাগ্যবশতঃ এইরূপ সময়ে এই অলঙ্কারগুলি, সকলের দৃষ্টিগোচর হইয়া, পতিত হইল, সুতরাং আমাকেও পাতিত করিবে।৩১।

श्रेष्ठिकायस्थौ । विलोक्य वसन्तसेनामातरमुद्दिश्य । अवहिदा दाव अज्जा एदं सुवस्सभण्डअं अवलोएदु, सो ज्जेव एसो ण वेत्ति । (ब)

वृद्धा । अवलोक्य । सरिसो एसो, ण उण सो । (भ)

शकारः । आं वुड्ढकुट्टणि ! अक्खीहिं मन्तिदं वाआए मूकिदं । (म)

(ब) अवहिता तावत् आर्य्या एतत् सुवर्णभाण्डकमवलोकयतु, तदेवेद न वेति ।

(भ) सदृश एष, न पुनः सः ।

(म) आः वृद्धकुट्टनि ! अक्षिभ्यां मन्त्रितं वाचा मूकितम् ।

---

अयमपरो ग्रहः, उत्थित उदितः । एवञ्च बृहस्पतेरस्तगमनमेव सर्व्वथा सम्भवपरम्, तथा शकारेणाभियुक्तस्य नष्टधनतया प्रक्षीणस्य च चारुदत्तस्य पार्श्वे धूमकेतुरिव तदमङ्गलसूचकः अयमलङ्कारसमूह उपस्थित इति चारुदत्तस्याप्यस्तगमनमेव सम्भवपरमिति भाव ।

अतएवात्र अप्रस्तुतात् तस्मात् प्रस्तुतस्य तस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः श्रौतोपमया सङ्कीर्य्यते ।

अङ्गारकविरुद्धत्वादिफलं ज्यौतिषशास्त्रेऽनुसन्धेयम्, विस्तरभयान्न लिखितम् ॥३३॥

(म) शकार इति । अकममुक्तमिदम् । क्रमस्तु अक्षिभ्यां मूकितम्, वाचा

---

অধিকরণিক । কষ্ট, হায় ! কি কষ্ট ।

বিরুদ্ধভাবে মঙ্গলকর্তৃক আক্রান্ত এবং ক্ষীণ বৃহস্পতির পার্শ্বে ধূমকেতুর ন্যায় এই আর একটা গ্রহ উদয় পাইয়াছে ॥৩৩॥

(ব) শ্রেষ্ঠী ও কায়স্থ । (দেখিয়া, বসন্তসেনার মাতার প্রতি) আপনি মনোযোগ করিয়া, এই অলঙ্কারগুলি দেখুন যে, এগুলি সেই অলঙ্কারই কি না ।

(ভ) বৃদ্ধা । (দেখিয়া) এগুলি, সেই অলঙ্কারেরই সদৃশ বটে, কিন্তু তাহাই নহে ।

वृद्धा । हदास ! अवेहि । (य)

श्रेष्ठिकायस्थौ । अप्पमत्त कधेहि, सा ज्जेव एसो ण वेत्ति । (र)

वृद्धा । अज्ज ! सिप्पिकुसलदाए ओवन्धेदि दिट्ठिं, ण उण सो । (ल)

अधि । भद्रे ! अपि जानासि एतान्याभरणानि ? । (व)

(य) हताश ! अपेहि ।

(र) अप्रमत्त कथय स एव एष न वेति ।

(ल) आर्य ! शिल्पिकुशलतया अवबध्नाति दृष्टिम् न पुनः सः ।

---

लक्षितमिति । यथा च अक्षिभ्यां मूकित मूकवदाचरित चक्षुर्भ्यां न दृष्टमित्यर्थः, वाचा मार्गेण भणित "सदृश एव न पुनः सः" इत्युक्तम् । यथा च अक्षिभ्यां दृष्टवे सदा नैव मया, एतेषां तदलङ्कारत्वाद्वेति भावः ।

(र) श्रेष्ठि इति । अप्रमत्त सावधानम् यथा मनोयोगपूर्व्वकमित्यर्थः ।

(ल) वृद्धा इति । शिल्पिन एतन्निर्म्माणकारकस्य कुशलतया नैपुण्येन दृष्टिं मम नयनम्, अवबध्नाति आकर्षयति, परमसदृश इति भावः ।

(व) अधि इति । जानासि परिचिनोषि ? ।

---

(ম) শকার । আঃ বৃদ্ধকুট্টনি ! তুমি নয়নধারা বলিলে, বাক্যধারা মূক হইলে । (টীকা দ্রষ্টব্য)

(য) বৃদ্ধা । হতভাগা ! দূর হ ।

(র) শ্রেষ্ঠী ও কায়স্থ । সাবধানে বলুন, এগুলি সেই অলঙ্কারই কি না ।

(ল) বৃদ্ধা । শিল্পীর নৈপুণ্যবশতঃ দৃষ্টি আকর্ষণ করিতেছে বটে, কিন্তু তাহাই নহে ।

(ব) অধিকরণিক । ভদ্রে ! আপনি এই অলঙ্কারগুলি চেনেন ? ।

वृद्धा। णं भणामि,—णहु णहु अणभिजाणिदो अहवा कदावि सिप्पिणा घडिदो भवे। (ग)

अधि। पश्य श्रेष्ठिन्।।

वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम् ॥१४॥

(ग) ननु भणामि—न खलु न खलु अनभिज्ञात, अथवा कदापि शिल्पिना घटितो भवेत्।

(ग) हञ्जा दासि। न खलु न खलु अनभिज्ञात अपि तु अभिज्ञात परिचित एवायं। शिल्पिना घटितो भवेत् मम वसन्तसेनाया एव निर्मितमिति भाव।

वस्त्विति। कृत्रिमस्य कारुणा निर्मितस्य कृतनिर्माणस्य रूपस्य यस्य कस्यचिदाकारस्य तथापि भूषणगुणस्य सुन्दरालङ्कारस्य चेत्यर्थ, सदृशानि अनुरूपाणि, वस्त्वन्तराणि अलङ्कारभूषणरूपाणि अन्यानि वस्तूनि नूनं निश्चितं भवन्ति हि यस्मात् शिल्पिवर्गः कृतहस्ततया शिल्पनैपुण्येन, दृष्ट्वा पदार्थान्तरमवलोक्य क्रियां तत्कृतिम् अनुकरोति तदनुरूपमेव वस्त्वन्तरं निर्मिमीते इत्यर्थं कृत । च सधो सादृश्यं दृष्टमेव यथा देशे सर्वं प्रत्यक्षीकृतमेव। अतएवेतानि वसन्तसेनाया एवाभरणानि भवेयुः॥ इत्थं तद्दर्शनेन अन्यस्यार्थेऽपि शिल्पिभिर्निर्माणसम्भवादिति भाव।

अत्राप्रस्तुतक्रियानुकरणविधानात् प्रस्तुतवसन्तसेनालङ्कारक्रियारूपविशेषप्रतीतेः अप्रस्तुतप्रशंसालङ्कारः। तथा सादृश्यमेव दृष्टम् इति वाक्यार्थे पूर्वार्द्धवाक्यार्थस्य कृतहस्ततयेति पदस्य चार्थस्य हेतुत्वात् काव्यलिङ्गद्वयं, न च "दृष्ट्वा क्रियामनुकरोति हि" इत्यर्थान्तरन्यासो सादृश्यमेव

(গ) বৃদ্ধা। আমি ত বলিতেছি—ইহা যে চিনি না, এমন নহে, অথবা, কখনও শিল্পী গড়াইয়া থাকিবে।

অধিকরণিক। দেখ শ্রেষ্ঠি।।

श्रेष्ठिकायस्थौ। अज्जचारुदत्तस्स केरकाइं एदाइं ?। (प)

चारु। न खलु न खलु।

श्रेष्ठिकायस्थौ। ता कस्स ?। (स)

चारु। इहात्रभवत्या दुहितुः। (ह)

श्रेष्ठिकायस्थौ। कधं एदाइं ताए विओअं गदाइं ? (घ)

चारु। एवं गतानि। आं इदम्। (क)

---

(प) आर्य्यचारुदत्तस्यैतानि ?। (स) तत् कस्य ?।

(घ) कथमेतानि तस्या विश्लेषं गतानि ?।

---

[illegible] तथा निर्मितं च दृष्टम्" इति पाठेन समाधेयः। [illegible]
[illegible]

वसन्ततिलका वृत्तम् ॥२४॥

(ह) चारु इति। इह [illegible] स्थाने [illegible], अत्रभवत्या [illegible], दुहितुः कन्याया वसन्तसेनायाः।

(क) चारु इति। एवमनेन प्रकारेण। आम् इति स्वीकारे। इदम् इत्य घटित-

---

কৃত্রিম যে কোন আকৃতির অনুকরণ অন্য আকৃতি এবং সুন্দর অলঙ্কারের অনুরূপ অন্য অলঙ্কার, অবশ্যই হইতে পারে। কারণ, শিল্পিগণ শিল্পনৈপুণ্যবশতঃ, একটী বস্তু দেখিয়া, তাহার নির্ম্মাণের অনুকরণ করিয়া থাকে, তাহার পর সেই বস্তুদ্বয়ের সাদৃশ্যই দেখা যায় ॥২৪॥

(প) শ্রেষ্ঠী ও কায়স্থ। তবে এই অলঙ্কারগুলি আর্য্য চারুদত্তের ?।

চারুদত্ত। না না।

(স) শ্রেষ্ঠী ও কায়স্থ। তবে কাহার ?।

(হ) চারুদত্ত। এইখানে উপস্থিত এই মাননীয়া বৃদ্ধার কন্যার।

(ঘ) শ্রেষ্ঠী ও কায়স্থ। এগুলি, তাহার বিচ্ছেদ প্রাপ্ত হইল কি প্রকারে ?।

श्रेष्ठिकायस्थौ। अज्जचारुदत्त! एत्थ सच्चं वत्तव्वं। पेक्ख पेक्ख। (ख)

सच्चेण सुहं क्खु लब्भइ सच्चालावि ण होइ पादई (१)।
सच्चं त्ति दुवेवि अक्खरा मा सच्चं अलिएण गूहेहि ॥३५॥

चारु। आभरणानि आभरणानीति न जाने, किन्त्वस्मद्-गृहादानीतानीति जाने। (ग)

(ख) आर्यचारुदत्त! अत्र सत्यं वक्तव्यम्। प्रेक्षस्व प्रेक्षस्व।
सत्येन सुखं खलु लभ्यते सत्यालापी न भवति पातकी।
सत्यमिति द्वे अपि अक्षरे मा सत्यमलीकेन गूहय ॥३५॥

मित्यर्थः। वसन्तसेनाया अभावे जीवनस्यानावश्यकता पर्यालोच्य स्वीकारोक्तिप्रायमुक्तमिदमिति बोध्यम्।

सत्येनेति। सत्येन सत्यवाक्येन खलु सुखं लभ्यते लोकैरिति शेषः, सत्येन धर्मजननात् धर्मेण च सुखोत्पादनादिति भावः। सत्यालापी सत्यभाषी जनः, पातकी न भवति तत् कारणाभावादित्याशयः। सत्यमिति द्वे अपि अक्षरे स्वरद्वयात्मकद्व्यक्षरोपहितमपि सत्यं जगत्सु सारमिति शेष, तत्र सत्यम्, अलीकेन अनृतेन मा निगूहय न तिरस्कुरु इत्यर्थः मिताक्षरेणेऽन सारतिरस्करणस्यान्याय्यत्वादिति भावः।

वैतालीयं नाम छन्दः ॥३५॥

(क) চারুদত্ত। এইভাবে পাইয়াছে। ও! এইরূপ ঘটিয়াছে।

(খ) শ্রেষ্ঠী ও কায়স্থ। আর্য্যচারুদত্ত! এখানে সত্য বলিতে হইবে। দেখুন দেখুন—

সত্যে সুখ পাওয়া যায়, সত্যবাদী পাপী হন না এবং "সত্য", এই দুইটী অক্ষর হইলেও, ইহা জগতের সার; মিথ্যাদ্বারা সেই সত্যকে গোপন করিবেন না ॥৩৫॥

(१)⋯सच्चालावि ण होइ पावं।

शकारः । उज्जाणं पवेशिअ पढमं मालेशि, कवड़-कावेड़िआए शम्पदं णिगूहेशि । (घ)

अधि । आर्य्यचारुदत्त! सत्यमभिधीयताम् ।

इदानीं सुकुमारेऽस्मिन् निःशङ्कं कर्कशाः कशाः ।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः ॥३६॥

(घ) उद्यानं प्रवेश्य प्रथमं मारयसि, कपट-कापटिकया साम्प्रतं निगूहसि ।

---

(ग) चारु इति । आभरणानि इमानलङ्कारान्, आभरणानीति न जाने केवलालङ्कारत्वेन नावगच्छामि । तर्हि किं आनाशीत्याह किन्त्विति ।

(घ) शकार इति । कपटस्य स्वभावधूर्त्तस्य कापटिका छलव्यवहारस्तया ।

इदानीमिति । सुकुमारे कोमले, अस्मिन् तव गात्रे, कर्कशाः कठिनाः, कशा अश्वताडनाय व्यवहर्त्तव्या वेत्रदण्डविशेषा, अस्माकं मनोरथैः "तव सर्व्वथैव निष्कृतिर्भवतु" इत्येवमभिलाषैः सह, निःशङ्कं निरुद्वेगं तव मरणभयरहितं यथा स्यात्तथा इदानीं पतिष्यन्ति तव गात्रे दारुणा वेत्रप्रहारा भविष्यन्ति अस्माकं तव निष्कृतिलाभाभिलाषा अपि लोपं यास्यन्तीत्यर्थः ।

अत्र सहोक्तिरलङ्कारः ॥३६॥

---

(গ) চারুদত্ত। এই অলঙ্কারগুলিকে কেবল অলঙ্কার বলিয়া যে জানি তাহা নহে; কিন্তু আমাদের বাড়ী হইতে আনা হইয়াছে, ইহা জানি।

(ঘ) শকার। প্রথমে উদ্যানে প্রবেশ করাইয়া খুন করিয়াছ, এখন কপটাচারী হইয়া গোপন করিতেছ।

অধিকরণিক। আর্য্যচারুদত্ত! সত্য বলুন।

এখন নিঃশঙ্কভাবে আপনার এই কোমল অঙ্গে, আমাদের অভিলাষের সহিত, কঠিন কশাঘাত পতিত হইবে ॥৩৬॥

चारु। अपापानां कुले जाते मयि पापं न विद्यते।
यदि सम्भाव्यते पापमपापेन च किं मया ॥३७॥

(स्वगतम्।) न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम्।

(प्रकाशम्।) भोः! किं बहुना। (ङ)

मया किल नृशंसेन लोकद्वयमजानता।
स्त्री रतिश्च विशेषेण शेषमेषोऽभिधास्यति ॥३८॥

अपापानामिति। अपापानां पुरुषाणां कुले जाते मयि, पापम् एतत्स्त्रीहत्यागतमिति भाव न विद्यते, मया अनृतवादित्वाभावः। तथापि यदि पापं तत्स्त्रीहत्याजनित दुष्कृतम्, सम्भाव्यते त्वया मन्यते, तदा अपापेन तत्पापहीनेनापि मया किं सञ्जीवनेन किं प्रयोजनं किमपि नेत्यर्थः। अतः दुष्प्रतिविचारकस्य पापसम्भावनेन सर्वदैव तत्प्रश्नकारिता जीवनापेक्षया मम मरणमेव श्रेय इति भावः।

अत्र च सति पापे विद्यमानत्वभावं प्रति अपापकुलजनत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥३७॥

(ङ) स्वगतमिति। जीवितेन जीवनेन कृत्यं कार्यं किमपि प्रयोजनं न चेत्यर्थः, जीवने केवलमस्वीकर्तुं दुःखानुभवसम्भवादिति भावः।

मयेति। नृशंसेन क्रूरेण लोकद्वयमजानता इहलोके महती निन्दा परलोके च घोरनरक इत्युभयमजानतेत्यर्थः, मया किल स्त्री सा योषित् विशेषेण रतिमदनुरागेण, एष अभिधीयतां शकारः, शेषम् एतद्वक्तव्यमिहास्य व्यापादितेति पदमित्यर्थः, अभिधास्यति वक्ष्यति। वसन्तसेनाया अभावे जीवनेच्छाया अभावात् मरणमिच्छयैव स्वीकारोक्तिप्रायमिदम्। तत्र च व्यापादितेति पदस्य स्वयमेवाभिधाने मिथ्योक्तिदोषः, अत-

চারুদত্ত। আমি, নিষ্পাপ পূর্ব্বপুরুষদিগের বংশে জন্মিয়াছি, সুতরাং বস্তুতঃ আমাতে পাপ নাই। তবে আপনি যদি পাপের সম্ভাবনা করেন, তবে পাপবিহীন হইলেও আমাদ্বারা কি হইবে ৷৩৭৷

(ঙ) (স্বগত) বসন্তসেনাবিহীন আমার জীবনের প্রয়োজন নাই। (প্রকাশ্যে) মহাশয়। অধিক বলিয়া কি হইবে।

शकारः। वावादिदा। अले! तुमं पि भण—"मए वावादिदा" त्ति। (च)

चारु। त्वयैवोक्तम्। (छ)

शकारः। शुणेध शुणेध भट्टालका! एदेण मालिदा, एदेण ज्जेव शंशए छिण्णे। एदश्श दलिद्दचालुदत्तश्श शालीले दण्डे धालीअदु। (ज)

(च) व्यापादिता । अरे ! त्वमपि भण—मया व्यापादिता इति ।

(ज) शृणुत शृणुत भट्टारकाः ! एतेन मारिता, एतेनैव संशयश्छिन्नः । एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्यताम् ।

---

इत्याथामोक्तेन ... पक्षीणकतया व्यापादितो व्यापादितेति स यदाभिधानभावः शकारोपरि समर्पित इति बोध्यम् ।

अत्र प्रस्तुतायाः स्त्रिया वसन्तसेनाया वने ... व्यापादितेत्येकक्रियाभिसम्बन्धाद्दीपकमलङ्कारः पूर्ववदनुप्रासश्चेति बोध्यम् ॥३८॥

(च) शकार इति । "त्वमेवाभिधास्यसि" इतीङ्गितकरणम् तन्निमित्तं वयमेव व्यापादितेति ।

(छ) चारु इति । दुरात्मा दुर्वृत्तः प्रतीयमानभाव इत्यर्थः ।

(ज) शकार इति । भट्टारका राजानः राजवन्नियुक्ता राजस्थानीया विचारका इत्यर्थः । "राजा भट्टारको देवः" इत्यमरः । संशयश्छिन्नः—"अनेन मारिता न वा" इति सन्देहो दूरीकृतः, व्यापादितेति पदस्य ... अनुपरि ...

নৃশংস এবং ইহলোকে ও পরলোকে অনভিজ্ঞ আমি, একটী স্ত্রীকে এবং তাহার প্রতি অনুরাগকে,—অবশিষ্ট ইনি বলিবেন ॥৩৮॥

(চ) শকার। নষ্ট করিয়াছি। ওরে! তুমিও বল যে, "আমি নষ্ট করিয়াছি।"

(ছ) চারুদত্ত। তুমিই ত বলিয়াছ।

अधि। शोधनक! यथाह राष्ट्रियः। भो राजपुरुषाः! गृह्यतामयं चारुदत्तः। (झ)

राजपुरुषा गृह्णन्ति।

वृद्धा। पसीदन्तु पसीदन्तु अज्जमिस्सा। जो दाव चोरेहिं अवहिदस्स इत्यादि पूर्व्वोक्तं पठति। ता जदि वावादिदा मम दारिआ, वावादिदा, जीवदु मे दीहाऊ। अण्णं च—अत्थि-पच्चत्थिणं ववहारो, अहं अत्थिणी, ता मुञ्चध एदं। (ञ)

(ञ) प्रसीदन्तु प्रसीदन्तु आर्य्यमिश्राः। तद् यदि व्यापादिता मम दारिका, व्यापादिता, जीवतु मे दीर्घायुः। अन्यच्च अर्थिप्रत्यर्थिनोर्व्यवहारः, अहमर्थिनी, तत् मुञ्चत एतम्।

भारार्पणात् मया च तदभिधानादिति भावः। शारीरो दैहिकः। \धार्य्यतामवधार्य्यताम्। दरिद्रतया अस्यार्थदण्डासम्भवादित्याशयः। अतएव दरिद्रविशेषणं दत्तम्।

(झ) अधि इति। राष्ट्रियो राजश्यालः, यथाह यथार्थमेव ब्रवीति। अतएवास्य शारीरो दण्ड एव मया निर्णेय इति भावः। अतएवाह भो इत्यादि।

(ञ) वृद्धा इति। व्यापादितैव भवत्वित्यर्थः। इयन्तु सम्भ्रमोक्तिः। दीर्घायुः चारुदत्तः। अन्यच्च चारुदत्तस्य मारणदण्डाभावेन जीवने अपरस्य कारणं निरस्त इत्यर्थः। अर्थिप्रत्यर्थिनोर्वादिप्रतिवादिनोरेव व्यवहारः प्रसिद्ध इति शेषः, तत्र अहमेव अर्थिनी वादिनी, हताया वसन्तसेनाया जननीत्वेन तत्पक्षीयत्वात्, न पुनः शकार उदासीनत्वेन

(জ) শকার। রাজপ্রতিনিধিগণ! শুনুন শুনুন, ইনিই খুন করিয়াছেন, ইনিই সে সংশয়চ্ছেদ করিলেন। এখন এই দরিদ্র চারুদত্তের শারীরিক দণ্ড নির্দ্দেশ করুন।

(ঝ) অধিকরণিক। শোধনক! রাজশ্যালক, যথার্থই বলিয়াছেন। হে রাজপুরুষগণ! এই চারুদত্তকে ধর।

রাজপুরুষগণ ধরিল।

शकारः । अवेहि गब्भदाशि ! गच्छ, किं तव एदिणा ? । (ट)

अधि । आर्य्ये ! गम्यताम् । हे राजपुरुषाः ! निष्क्रामयतैनाम् । (ठ)

वृद्धा । हा जाद ! हा पुत्तश्र ! । इति रुदति निष्क्रान्ता । (ড)

(ट) अपेहि गर्भदासि । गच्छ, किं तव एतेन ? ।

(ड) हा जात । हा पुत्रक ! ।

साक्षिस्थानीयत्वादित्याशयः । तत् तस्मात् वादिन्या मम प्रार्थनावशादित्यर्थः, एतं चारुदत्तं मुञ्चत । तथा च वादिपक्षस्य आपत्त्यभावादपराधिनो मुक्तिदानं युक्तमेवेति भावः ।

(ठ) अधि इति । एनां वृद्धाम् । तथा च हत्याद्यपराधे राजपक्षीयोऽपि वादी भवति ; तेन बालिकावादिन्यास्तव आपत्त्यभावेऽपि राजपक्षस्य आपत्तिसम्भवाच्चारुदत्तस्य मुक्तिदानमसम्भवमेवेति भावः ।

(ঞ) বৃদ্ধা । বিচারকপ্রবরগণ ! প্রসন্ন হউন, প্রসন্ন হউন । ("চোরে যাহা নিয়াছিল, তাহা যিনি" ইত্যাদি পূর্ব্বোক্ত পাঠ করিল) তা যদি আমার মেয়েকে খুন করিয়া থাকেন, তা করিয়াছেন, আমার দীর্ঘায়ু (চারুদত্ত) বাঁচিয়া থাকুন । আরও এক কথা—বাদি-প্রতিবাদির মোকদ্দমা হইয়া থাকে, আমি বাদিনী, (আমি বলিতেছি) ইঁহাকে ছাড়িয়া দিন ।

(ট) শকার । দূর হ, গর্ভদাসি ! যা, তোর ইহা দিয়া প্রয়োজন কি ? ।

(ঠ) অধিকরণিক । আর্য্যে । আপনি যান । রাজপুরুষগণ ! এই বৃদ্ধাকে বহির্গত কর ।

(ড) বৃদ্ধা । হা বৎস ! হা পুত্র ! । (এই বলিয়া কাঁদিতে কাঁদিতে চলিয়া গেল)

शकारः। (स्वगतम्।) किदं मए एदश्श अत्तणो शलिशं। शम्पदं गच्छामि। (इति निष्क्रान्तः।) (ढ)

अधि। आर्य्यचारुदत्त! निर्णये वयं प्रमाणम्, शेषे तु राजा। तथापि शोधनक! विज्ञाप्यतां राजा पालकः—(ण)

अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत्।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह॥३८॥

(ढ) कृतं मया एतस्य आत्मनः सदृशम्। साम्प्रतं गच्छामि।

(ढ) शकार इति। सदृशम् उपयुक्तं कर्म्मेत्यर्थः।

अहो! शकारस्येदृशं चरित्रं दर्शयित्वा कविना दुर्जनचरित्रस्य पराकाष्ठा दर्शिता।

(ण) अधि इति। पूर्व्वसाधुतास्मरणात् चारुदत्तस्य पुनरार्य्येति विशेषणम्। निर्णये वादिप्रतिवादिनोर्व्यवहारस्य अपराधादिनिर्णये, वयमहमित्यर्थः "अस्मदश्च" इति बहुवचनात्, प्रमाणं समर्था इत्यर्थः, राजा तस्मात् कर्त्तुमेव नियुक्तत्वादिति भावः। शेषे अपराधिनो मुक्तिदानादौ राजा प्रमाणमित्यन्वयः।

अयमिति। अयं विप्रश्चारुदत्तः, पातकी अर्थेन स्त्रीहत्यया पापी सन्नपि, नहि वध्यः। तर्हि किं कर्त्तव्यमित्याह—तु किन्तु अक्षतैः प्रहरणादिभिरविनष्टैः सम्पूर्णैरित्यर्थः विभवैर्धनैः सह, अस्मात् तु राष्ट्रात् राज्यात् निर्वास्यो बहिष्कार्य्यः, इति मनुरब्रवीत्। तथा च—

"वपनं द्रविणादानं देशान्निर्यापनं तथा।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः॥"

(ঢ) শকার। (স্বগত) আমার এই স্বভাবের যোগ্য কার্য্য করিলাম; এখন যাই। (এই বলিয়া চলিয়া গেল)

(ণ) অধিকরণিক। আর্য্য চারুদত্ত! আমরা যথার্থবিষয় নির্ণয়মাত্র করিবার অধিকারী, কিন্তু মুক্তি বা শাস্তি দিতে রাজাই পারেন। তথাপি, শোধনক! তুমি রাজা পালককে জানাও।

शोध। जं अज्जो आणवेदि। इति निष्क्रम्य पुनः प्रविश्य सास्रम्। अज्जा! गदम्हि तहिं। राआ पालओ भणादि—"जेण अत्थ-कल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं ताइं ज्जेव आहरणाइं गले बन्धिअ डिण्डिमं ताडिअ दक्खिण-मसाणं णइअ सूले भञ्जेध त्ति। जो को वि अवरो एरिसं अकज्जं अणुचिट्ठदि, सो एदिणा सणिआरदण्डेण सासीअदि।" (त)

(त) यदार्य आज्ञापयति। आर्याः! गतोऽस्मि तत्र। राजा पालको भणति—"येन अर्थकल्यवर्त्तस्य कारणात् वसन्तसेना व्यापादिता, तं तान्येव आभरणानि गले बद्ध्वा, डिण्डिमं ताडयित्वा, दक्षिणश्मशानं नीत्वा, शूले भङ्क्त" इति। यः कोऽपि अपरः ईदृशमकार्य्यमनुतिष्ठति, स एतेन सनिकारदण्डेन शिष्यते।

---

इति अयं तु धनसम्पत्त्या सह अयं अक्षतो राष्ट्रात् बहिष्क्रियताम्, न पुनर्वध्यतामिति राजा पालको विज्ञाप्यतामित्याशयः ॥३९॥

(त) शोध इति। अर्थकल्यवर्त्तस्य अचिरस्थायिनो धनस्य। तान्येव तदीयान्येव। भङ्क्त आमर्द्दयत विनाशयतेत्यर्थः। निकारेण धिक्कारेण सह वर्त्तमानो यो दण्डस्तेन, शिष्यते अनुशिष्यते।

---

"এই ব্রাহ্মণ পাপী হইলেও, বধ্য নহে, তবে অক্ষুণ্ণ ধনসম্পত্তির সহিত ইহাকে এই রাজ্য হইতে নির্ব্বাসন করা উচিত"—একথা মনু বলিয়াছেন ॥৩৯॥

(ত) শোধনক। আর্য্য যাহা আদেশ করেন। (এই বলিয়া চলিয়া যাইয়া পুনরায় প্রবেশ করিয়া, অশ্রুজলের সহিত) আর্য্য! আমি সেখানে গিয়াছিলাম, রাজা পালক বলিলেন—"অচিরস্থায়ী ধনের জন্য যে, বসন্তসেনাকে খুন করিয়াছে, তাহাকে সেই অলঙ্কারগুলিই গলায় বাঁধিয়া ঢেঁড়া বাজাইয়া, দক্ষিণ শ্মশানে নিয়া শূলে দিয়া হত্যা কর। অন্য যে কেহও এইরূপ অকার্য্য করিবে, তাহাকেও এইরূপ ঘৃণিত দণ্ডে শাসন করা হইবে।"

चारु। अहो! अविमृश्यकारी राजा पालकः।
अथवा—(थ)

ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ॥४०॥

अपि च। ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः।
अपापानां सहस्राणि हन्यन्ते च हतानि च ॥४१॥

(थ) चारु इति। अविमृश्यकारी अविवेचनपूर्वककार्य्यकारी, अधिकरणिककृतनिर्णयस्य साधुत्वमसाधुत्वं वेति विवेचनस्य स्वयमप्यकृतत्वादिति भावः।

ईदृश इति। ईदृशे, व्यवहारो विचार एवाग्निर्विनाशसन्तापकत्वादिति भावः तस्मिन्, मन्त्रिभिर्मन्त्रणादायकैरात्मनिरूपणेन च व्यवहारोपदेशकैरधिकरणिकादिभिरित्यर्थः परिपातिता निक्षिप्ताः, महीपाला राजानः, कृपणां निर्दयत्वरूपां क्षुद्राम्, दशामवस्थाम्, गच्छन्ति प्राप्नुवन्ति, स्थाने खलु एतद्युक्तमेव; अन्यथा स्वतस्तेषां कृपणत्वासम्भव, इति भावः।

अत्राप्रस्तुतमहीपालसामान्यात् प्रस्तुत-पालकरूप-महीपालविशेषप्रतीतेरप्रस्तुतप्रशंसा-लङ्कारः ॥४०॥

ईदृशैरिति। श्वेतकाकीयैः श्वेतवर्णकाकतुल्यैः श्वेतवर्णा, काका यथा बहिः सुन्दरा-दर्शनमात्रेणैवाश्चर्यजनकतया अन्तरमङ्गलाः, तद्वदेव राज्ञो विचारकादयो बहिर्मधुर-भाषिणः अन्यन्तु क्रूरा दुराशयाः, राज्ञः शासनं प्रवर्त्तितनियमं दूषयन्तीति तैः, ईदृशै-रधिकरणिकादिभिर्जनैः, अपापानां निरपराधानां सहस्राणि, हन्यन्ते च वर्त्तमाने, हतानि च पूर्वम्। अत्रायमेव प्रमाणमिति भावः।

(थ) চারুদত্ত। হায়! রাজা পালক, কি অবিমৃশ্যকারী! (বিবেচনা না করিয়া কার্য্যকারী)। অথবা—

মন্ত্রণাদায়ক বিচারকপ্রভৃতি, এই জাতীয় বিচাররূপ অগ্নিতে রাজগণকে নিক্ষিপ্ত করে; তাহাতে তাঁহারা হৃদয়ের ক্ষুদ্র অবস্থা প্রাপ্ত হন, ইহা সঙ্গতই বটে ॥৪০॥

सखे ! मैत्रेय ! गच्छ, मद्वचनादम्बामपश्चिममभिवादयस्व । पुत्रञ्च मे रोहसेनं परिपालयस्व । (ट)

विदू । मूले छिण्णे कुदो पादवस्स पालणं ? । (ध)

चारु । मा मैवम् । (न)

नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः ।
मयि यो वै तव स्नेहो रोहसेने स युज्यताम् ॥४२॥

(ध) मूले छिन्ने कुतः पादपस्य पालनम् ? ।

---

अत्रापि पूर्ववदप्रस्तुतप्रशंसालङ्कारः ॥४१॥

(ट) सखे इति । अम्बा मन्मातरम्, अपश्चिमम् शेषम्, इदमभिवादनमेव यथा शेषं न स्यात्तथा अभिवादयस्व । इतःपरमपि भद्रदेव चिरमभिवादयतेति भावः ।

(ध) विदू इति । मूलीभूतस्य तवाभावे रोहसेनस्य रक्षणमसम्भवमेवेत्याशयः ।

(न) चारु इति । मा मैवं ब्रूहीति शेषः ।

* तत्कारणमाह नृणामिति । सुतः आत्मजः लोकान्तरस्थानां नृणां देहस्य प्रतिकृतिः प्रतिमूर्त्तिः, "आत्मा वै जायते पुत्र" इति स्मरणादिति भावः । अतएव तव मयि यः स्नेहः, रोहसेने स युज्यतामर्प्यताम् ।

---

আরও, দেখিতে উজ্জ্বল অথ চ অমঙ্গলসূচক শ্বেতবর্ণ কাকগণের ন্যায় এই জাতীয় রাজনিয়মদূষক বিচারকগণ, নিরপরাধ সহস্র সহস্র লোককে হত্যা করিয়াছে এবং হত্যা করিতেছে ॥৪১॥

(ট) সখে ! মৈত্রেয় ! যাও, আমার বাক্য অনুসারে মাতৃদেবীকে অদ্য হইতে অভিবাদন করিবে এবং আমার পুত্র রোহসেনকে পরিপালন করিবে।

(ধ) বিদূষক। মূল ছিন্ন হইলে, কিরূপে বৃক্ষের রক্ষা হয় ?।

(ন) চারুদত্ত। না না, এরূপ বলিও না।

विदू। भो वअस्स! अहं ते पिअवअस्सो भविअ, तुए विरहिदाइं पाणाइं धारेमि?। (प)

चारु। रोहसेनमपि तावद्दर्शय। (फ)

विदू। एव्वं जुज्जदि। (ब)

अधि। भद्र! शोधनक! अपसार्य्यतामयं वटुः।

शोधनकस्तथा करोति।

अधि। कः कोऽत्र भोः! चण्डालानां दीयतामादेशः। (भ)

(प) भो वयस्य! अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान् प्राणान् धारयामि?।

(ब) एवं युज्यते।

अत्र पराद्ध प्रति पूर्वार्द्धवाक्यार्थो हेतुरिति काव्यलिङ्गमलङ्कारः। तथा वै-शब्दस्य छन्दःपूरणमात्रार्थत्वात् निरर्थकत्वदोषः, "मयि यो भवतः स्नेहः" इति पाठमाश्रित्य समाधेय ॥४२॥

(फ) चारु इति। दर्शय जीवनोपायमिति शेषः।

(ब) विदू इति। एवं सति युज्यते, मम प्राणधारणमिति शेषः।

(भ) अधि इति। आदेशो दीयताम् अस्य वधायेति शेषः।

पुत्रই, লোকান্তরগত মানবদিগের দেহের প্রতিমূর্ত্তি। সুতরাং আমাতে তোমার যে স্নেহ আছে, তাহা রোহসেনে নিযুক্ত কর ॥৪২॥

(প) বিদূষক। সখে! আমি তোমার প্রিয়বয়স্য হইয়া, তোমা-বিহীন প্রাণ ধারণ করিব?।

(ফ) চারুদত্ত। অন্ততঃ রোহসেনকেও জীবনের উপায় দেখাও।

(ব) বিদূষক। এরূপ হইলে প্রাণধারণ করা সঙ্গত বটে।

অধিকবণিক। ভদ্র! শোধনক! এই ব্রাহ্মণকে সরাইয়া নাও। (শোধনক তাহাই করিল।)

इति चारुदत्तं विसृज्य निष्क्रान्ताः सर्वे राजपुरुषाः।

शोध। इदो आअच्छदु अज्जो। (म)

चारु। सकरुणम् "मैत्रेय भोः! किमिदमद्य" इत्यादि पठति। आकाशे। (य)

विष-सलिल-तुलाग्नि-प्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य।
अथ रिपुवचनात्त्वं ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥४३॥

---

(म) इत आगच्छतु आर्यः।

---

(य) चारु इति। आकाशे मध्यस्थानीनाहूयमेवाधिकरणिकं प्रति वक्तव्यत्वात् शून्ये इत्यर्थः।

विषेति। अद्य, इह अस्मिन् मे मम शरीरे, क्रकचं करपत्रम्, (करात इति यस्य वङ्गभाषा) दातव्यं मत्प्राणदण्डाय चाण्डालैः प्रेरयितव्यम्, इति वीक्ष्य मनसि समालोच्य, विचारे एतद्विवादनिर्णये, विषं गरलम्, सलिलं जलम्, तुला मापनयन्त्रम्, अग्निर्वह्निश्च एभिः एतद्व्यतमपरीक्षोपायैः प्रार्थिते कर्त्तव्यतया याचितेऽपि, अथानन्तरम्, रिपोः शत्रोः शकारस्य वचनाद्वाक्यात्, यदि ब्राह्मणं मां निहंसि नाह्यपरीक्षाद्वारा निर्णयमकृत्वैव व्यापादयसि, तदा पुत्रपौत्रैः समेतः समन्वितस्त्वम्, नरकमध्ये पतसि पतिष्यसीत्यर्थः। भविष्यत्सामीप्ये वर्त्तमाना। अथवा ब्रह्महत्याकरणादिति भावः।

---

(ভ) অধিকরণিক। এখানে কে কে আছ হে! চাণ্ডালগণকে আদেশ দাও।

(ইহার পর চারুদত্তকে পরিত্যাগ করিয়া, সকল রাজপুরুষগণ চলিয়া গেলেন)

(ম) শোধনক। আর্য্য! এদিকে আসুন।

(য) চারুদত্ত। (শোকের সহিত, "হে মৈত্রেয়! আজ আমার এই কি উপস্থিত হইল" ইত্যাদি পাঠ করিলেন। পরে শূন্যে)

अयमागतोऽस्मि। (र)

अत्र विचारकत्वेन गुरुभूतस्याधिकरणिकस्य शोकावेगादीदृशाक्षेपेण लङ्घनात् द्रवो नाम विमर्शसन्ध्यङ्गम्। तथा च साहित्यदर्पणः—

"द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा।"

अत्र निक्षिपीति तृतीयचरणान्तिमाक्षरस्य लघुत्वेऽपि पादान्तस्थत्वेन गुरुत्वाङ्गीकारान्न छन्दःपतनदोषः। एतत् प्रपञ्चितमस्माभिः साहित्यदर्पणटीकायाम्।

विषादिविचारो यथा—"यदि पापी भवेयं तदा विषभक्षणे मम चैतन्यलोपो भवतु" इति सङ्कल्प्य विषं भक्षयेत्, तत्र पापसत्त्वे चैतन्यलोपः, इतरथा न इति विषपरीक्षा। तथैव सङ्कल्प्य सलिले प्रविशेत्, पापसत्त्वे निमज्जनम् अन्यथा नेति सलिलपरीक्षा। तादृशसङ्कल्पेन तुलामारोहेत्, पापित्वे गुरुः, अन्यथा लघुः स्यादिति तुलापरीक्षा। तथैव सङ्कल्प्याग्निप्रवेशे पापित्वे अङ्गदाहः, इतरथा नेत्यग्निपरीक्षा। यथा याज्ञवल्क्यः—

"तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥"

निरपराधस्य दण्डे नरकपातमाह मनुः—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति॥"

मालिनी वृत्तम् ॥४३॥

(र) अयमिति। "इदो आअच्छदु अज्जो" इति पूर्वोक्तशोधनकवचनस्य उत्तरमाह अयमागतोऽस्मीति।

---

আজ আমার এই শরীরে করাত প্রবেশ করাইবে ইহা ধারণা করিয়া, বিষ, জল, তুলা ও অগ্নি—ইহার যে কোনটার দ্বারা পরীক্ষা করিয়া বিচার করুন; এইরূপ প্রার্থনা করিলে পর শত্রু শকারের বাক্য অনুসারে, ব্রাহ্মণ আমাকে যদি হত্যা কর, তবে পুত্র-পৌত্রের সহিত নরকমধ্যে পতিত হইবে ॥৪৩॥

(র) এই আমি আসিতেছি।

इति निष्क्रान्ताः सर्वे।

## इति व्यवहारो नाम नवमोऽङ्कः ॥०॥ (१)

इति महामहोपाध्याय-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यविरचितायां मृच्छकटिक-टीकायां वसन्तसुधमासमाख्यायां नवमाङ्कविवरणं समाप्तम् ॥०॥

(ইহার পর সকলে চলিয়া গেল)

## ব্যবহার (মোকদ্দমা) নামে নবম অঙ্ক সমাপ্ত ॥০॥

(१) व्यवहारो नाम नवमोऽङ्कः समाप्तः।

# दशमाऽङ्कः ।

—:०:—

ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः । (क)

उभौ । तक्किं ण कलध कालणं णव-वह-बन्ध-णअणे णिउणा ।

अचिलेण शीश-छेअण शूलालोविश कुशल्लम्ह ॥१॥

तत् किं न कलय कारणं नव वध बन्ध नयने निपुणौ ।

अचिरेण शीर्षच्छेदन शूलारोपेषु कुशलौ स्वः ॥१॥

(क) अथ नवमाङ्के "चण्डाला आदीयतामादेशः" इत्यधिकरणिकोक्त्या सूचितं चण्डालकर्त्तृकं चारुदत्तश्मशाननयनं दर्शयितुमाह तत इति ।

तदिति । चिन्ताहन् पश्यतो जनान् प्रति उक्तिरियम् । हे जनसङ्घ ! तत् चिर-प्रसिद्धम्, कारणं दक्षिणश्मशानं प्रति अस्य पुरुषस्य आकर्षणे हेतुम्, किं न कलय स्वयमेवावधारय । तथा च नवौ यौ वधबन्धौ कृपाणबन्धनञ्च तयोर्नयने तदर्थं तत्र समाकर्षणे निपुणौ आवां दक्षौ । तथा अचिरेण हठात्, शीर्षस्य मस्तकस्य छेदनानि शूलेषु आरोपाय तेषु कुशलौ स्व आवामिति शेषः । यथार्थमेवामुं पुरुषं दक्षिणश्मशानं नयाव इति भावः ।

अयं गाथाविशेषः ॥१॥

(क) তদনন্তর চারুদত্তের এবং তৎ পশ্চাৎ পশ্চাৎ চাণ্ডালদ্বয়ের প্রবেশ।

চাণ্ডালদ্বয়। হে দর্শকগণ! আপনারা, ইঁহাকে আকর্ষণ করিয়া নিয়া যাইবার কারণ বুঝিতেছেন না কেন? আমরা, সদ্যঃ বধ ও বন্ধনের জন্য নিয়া যাইতে নিপুণ এবং হঠাৎ মস্তকচ্ছেদন ও শূলে আরোপণ করিতে দক্ষ ॥১॥

ओशलध अज्जा ! ओशलध । एशे अज्जचालुदत्ते । (ख)

दिण्ण-कलवील-दामे गहिदे अम्हेहि वज्झपुलिशेहिं ।

दीवे व्व मन्दणेहे थोअं थोअं खअं जादि ॥२॥

चारु । सविषादम् ।

नयनसलिलसिक्तं पांशुरूक्षीकृताङ्गं

पितृवनसुमनोभिर्वेष्टितं मे शरीरम् ।

विरसमिह रटन्तो रक्तगन्धानुलिप्तं

बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥३॥

(ख) अपसरत आर्या ! अपसरत । एष आर्यचारुदत्तः ।

दत्त करवीर दामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् ।

दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ॥२॥

(ख) अपेति । अपसरत अस्मात् गमनपथादिति शेषः ।

दत्तेति । दत्तं करवीरदाम करवीरपुष्पमाल्यं यस्य सः, तथा आवाभ्यां वध्यपुरुषाभ्यां प्राणदण्डेन दण्डितानां जनानां वधाधिकृताभ्यां जनाभ्याम्, गृहीतो धृतः, एष आर्यचारुदत्तः, मन्दः अल्पः स्नेहः तैलं यस्य सः तादृशो दीप इव, स्तोकं स्तोकमल्पमल्पं क्षयं याति क्रमशः क्षीणो विनाशाय भवतीत्यर्थः ।

अत्र श्रौतोपमालङ्कारः । आर्या जातिः ॥२॥

नयनेति । इह इदानीम्, विरसं रटन्तः कर्कशं शब्दायमानाः, वायसाः काकाः,

(খ) সরিয়া যান, হে আর্য্যগণ! আপনারা সরিয়া যান। এই চারুদত্ত—

বধকার্য্যে নিযুক্ত পুরুষ আমরা ইঁহাকে ধরিয়াছি এবং ইঁহার গল-দেশে করবীরপুষ্পের মালা দেওয়া হইয়াছে, এই অবস্থায় এই চারু-দত্ত, অল্পতৈলযুক্ত প্রদীপের ন্যায় অল্প অল্প ক্ষয় পাইতেছেন ॥২॥

चाण्डालौ । ओशलध अज्जा ! ओशलध । (ग)
किं पेक्खध छिज्जन्तं शप्पुलिशा ! काल-पलशु-धालाहिं ।
शुअण-शउणाधिवाशं शज्जण पुलिश-द्दुमं एदं ॥४॥

(ग) अपसरत आर्य्याः । अपसरत ।
किं प्रेक्षध्वे छिद्यमानं सत्पुरुषाः ! काल परशु धाराभ्याम् ।
सुजन शकुनाधिवासं सज्जन पुरुषद्रुममेतम् ॥४॥

---

नयनसलिलेन शीकवशादश्रुजलेन सिक्तम्, पांशुभिर्धूलिभि रूक्षीकृतानि मार्जनादि-संस्काराभावात् अस्निग्धीकृतानि अङ्गानि यस्य तत्, पितृवनसुमनोभिः श्मशानपुष्पैः वेष्टितम्, तथा रक्तगन्धेन रक्तचन्दनेन अनुलिप्तम्, मे मम शरीरम्, वधानन्तरं भूलुण्ठित देहम्, बलिमिव स्वार्थप्रदत्तान्नपिण्डादिद्रव्यमिव, परिभोक्तुं तर्कयन्ति सम्भावयन्ति ।

अत्र श्रौतीपमालङ्कारः । "श्मशानं स्यात् पितृवनम्" इत्यमरः ।

मालिनी वृत्तम् ॥३॥

किमिति । हे सत्पुरुषाः पश्यन्तः सज्जनाः । कालपरशु साक्षाद्यमवत् कुठारद्वय धारयत इति कालदूतः, ताभ्याम् धाराभ्यामित्यर्थः छिद्यमानम्, एतम्, सुजनाः साधुजनाः एव शकुनाः नानादिग्भ्य आगतत्वात् पक्षिणस्तेषाम् अधिवास आवासभूतस्तम्, सज्जन-पुरुष साधुलोक एव द्रुमो वृक्षस्तम्, किं प्रेक्षध्वे यूयं पश्यत ?। एतद्दर्शनं निषिद्ध-मिति भावः । तत्प्रमाणन्तु वक्ष्यते ।

अत्र सुजने शकुनत्वारोपः सज्जनपुरुषे द्रुमत्वारोपस्य निमित्तमिति परम्परितरूपका-लङ्कारः । आर्य्या जातिः ॥४॥

---

চারুদত্ত। (বিষাদের সহিত) কর্কশরবকারী বায়সগণ, অশ্রুজল-সিক্ত, ধূলি রুক্ষীকৃতগাত্র, শ্মশানপুষ্পে বেষ্টিত এবং রক্তচন্দনলিপ্ত আমার শরীরকে, দেবপূজায় দত্ত অন্নাদি দ্রব্যের ন্যায় ভোজন করিবার আশা করিতেছে ॥৩॥

(গ) চাণ্ডালদ্বয়। সরিয়া যান, আর্য্যগণ! আপনারা সরিয়া যান। হে সৎপুরুষগণ! যিনি সজ্জনরূপ পক্ষিগণের বাসস্থান ছিলেন, সেই

आगच्छ रे चारुदत्त ! आगच्छ । (घ)

चारु । पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः ; यदहमीदृशीं दशामनुप्राप्तः । (ङ)

सर्वगात्रेषु विन्यस्तै रक्तचन्दनहस्तकैः ।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥५॥

अग्रतो निरूप्य । अहो ! तारतम्यं नराणाम् । सकरुणम् । (च)

(घ) आगच्छ रे चारुदत्त ! आगच्छ ।

(ङ) चारु इति । व्यापाराः परिवर्त्तनानि । यत्, पूर्वं सर्वसम्मानास्पदमासम्, सोऽहमिति भावः ।

कीदृशीं दशामित्याह सर्वेति । पुरुषो मनुष्यजातीयोऽप्यहम्, सर्वगात्रेषु विन्यस्तैरर्पितैः, रक्तचन्दनानां हस्तकैः प्रसारिताङ्गुलीकहस्तमुद्राभिः प्रसारिताङ्गुलीकैः हस्तैः रक्तचन्दनमनुलिप्य तद्दत्तचिह्नैर्विशिष्ट इत्यर्थः, तथा पिष्टचूर्णैस्तण्डुलगुण्डिकाभिः अवकीर्णः, सर्वगात्रेषु विक्षिप्तः सन्, अपशुः पशुः कृत इति पशूकृतः, बल्यर्थानीतच्छागादिवत् कृत इत्यर्थः ॥५॥

---

সৎপুরুষরূপ এই বৃক্ষটীকে, কালপরশুধারী আমরা ছেদন করিতেছি, ইহা আপনারা দেখিবেন কেন ॥৪॥

(ঘ) আয়, রে চারুদত্ত ! আয় ।

(ঙ) চারুদত্ত । পুরুষের ভাগ্যের পরিবর্ত্তন, চিন্তাও করিতে পারা যায় না । যে হেতু, আমি এইরূপ অবস্থা প্রাপ্ত হইয়াছি ।

আমি মানুষ হইলেও, আমার সমস্ত অঙ্গে, হস্তদ্বারা রক্তচন্দনের চিহ্ন দিয়াছে এবং তণ্ডুলচূর্ণ নিক্ষিপ্ত করিয়াছে, সুতরাং আমাকে পশুর ন্যায় করিয়াছে ॥৫॥

(চ) (সম্মুখে দৃষ্টিপাত করিয়া) হায় ! মানুষের কি আশ্চর্য্য তারতম্য । (শোকের সহিত)

एकः । हन्दे आहीन्ता ! पेक्ख पेक्ख । (अ)
णअली-पधाणभूदे वज्झअन्ते कदन्तअणाए ।
किं लुअदि अन्तलिक्खे ? आदु अणब्भे पड़दि वज्जे ? ॥८॥

(अ) हन्दे आहीन्त ! प्रेक्षस्व प्रेक्षस्व ।
नगरीप्रधानभूते वध्यमाने कृतान्ताज्ञया ।
किं रोदिति अन्तरिक्षम् ? अथवा अनभ्रे पतति वज्रम् ? ॥८॥

इन्द्र गवाद्या वा गर्भनिर्गमनम्, तारायाः नक्षत्रस्य सङ्क्रमः स्थानात् स्थानान्तरे सञ्चरणम्, सत्पुरुषस्य प्राणविपत्तिः रोगादिव्यतिरेकेण प्राणविनाशरूपा विपत्, इमे चत्वारो न द्रष्टव्याः ; दुरदृष्टोत्पत्तिसम्भवादिति भावः ।

अत्र सत्पुरुषप्राणविपत्तिः प्रस्तुता, अन्ये त्रयस्त्वप्रस्तुताः सामीप्यदर्शनक्रियाभिसम्बन्धा-द्दीपकमलङ्कारः । आर्या जातिः ।

उक्तार्थे प्रमाणं यथा कालिकापुराणे—

"उत्थापयेत् ध्वजं सर्वलोकस्य वै पुरः ।
ततो विसर्जयेत् चैनं विधिवोऽस्य प्रपूजने ॥"
"मेघगवाक्षसम्भव केतुपात सतो वधम् ।
नक्षत्राणाञ्च सञ्चारं शुभार्थी नावलोकयेत् ॥"७।

(अ) एक इति । नीचत्वात् हन्दे इति सम्बोधनम् । आहीन्त इति डित्थादिवत् यदृ. शब्द ।

नगरीति । कृतान्ताज्ञया दैवस्य आदेशेन, नगर्याः उज्जयिन्याः प्रधानभूते पुरुषे, वध्यमाने सति, किम् अन्तरिक्षमाकाशं, रोदिति ? मेघं विना ततो जलपातदर्शना-दिति भावः । अथवा अनभ्रे निर्मेघे वज्रं पतति, तद्वदेव महाशब्दश्रवणादित्याशयः ।

নিপত্যমান ইন্দ্রধ্বজ, গরুর প্রসব, নক্ষত্রপতন এবং সৎপুরুষের হত্যা—এই চারিটী ঘটনা দেখিতে নাই ॥৭॥

(অ) একজন চাণ্ডাল । ওরে আহীন্ত ! দেখ্ দেখ্ ।

द्वितीयः। अले गोहा! (झ)

णअ लुअदि अन्तलिक्खे णेअ अणब्भे पडदि वज्जे।
महिलाशमूहमेहे णिवडदि णअणम्बुधालाहिं॥९॥

(झ) अरे गोह!

न च रोदित्यन्तरिक्षं नैवानभ्रे पतति वज्रम्।
महिलासमूहमेघान्निपतति नयनाम्बुधाराभिः॥९॥

---

अत्र स्त्रीणां रोदनजले आकाशरोदनजलत्वसम्भावनया क्रियोत्प्रेक्षा, तथा अभ्राभावेऽपि वज्रपतनाभिमानेन, इत्यनयोर्मिथो निरपेक्षतया संसृष्टिः। रोदनध्वनौ वज्रध्वनिसम्भावनया च गुणोत्प्रेक्षा व्यङ्ग्या। आर्या जातिः॥८॥

(झ) द्वितीय इति। गोह इति गोहः प्रथमचाण्डालस्य नाम।

न चेति। अन्तरिक्षमाकाशं, न च रोदिति, नैव वा अनभ्रे निर्मेघे वज्रं पतति, किं तर्हीत्याह महिलानां दर्शनाय प्रासादशिखरमागतानां स्त्रीणां समूहो मेघ इव कालकुन्तलकलापेनाहतवदनत्वादिति भावः तस्मात्, धाराभिरविच्छिन्नसम्पातैः, नयनाम्बु निपतति, वृष्टिजलमिवेति भावः।

अत्र स्त्रीसमूहे मेघसाम्यं गम्यम्, नयनाम्बुनि वृष्टिजलसाम्यञ्च गम्यम् इत्येकदेशविवर्त्तिन्युपमालङ्कारः। न त्वेकदेशविवर्त्ति रूपकम्, मेघान्नयनाम्बुपतनासम्भवात्। गीतिर्जातिः॥९॥

---

বিধাতার আদেশে নগরের প্রধান লোককে বধ করিতে প্রবৃত্ত হইলে, আকাশ কি রোদন করিতেছে এবং বিনা মেঘে কি বজ্রপাত হইতেছে ? ॥৮॥

(ঝ) দ্বিতীয় চাণ্ডাল। ওরে গোহ!

আকাশও রোদন করিতেছে না, বিনা মেঘেও বজ্রপাত হইতেছে না, তবে, মেঘের ন্যায় স্ত্রীসমূহ হইতে অবিচ্ছিন্ন ধারায় নয়নজল পতিত হইতেছে ॥৯॥

अवि अ। वज्झम्मि णीअमाणे
जणश्श शव्वश्श लोदमाणश्श।
णअणशलिलेहिं शित्ते
लच्छादो ण उश्शमइ लेणु ॥१०॥

चारु। निरूप्य सकरुणम्।

एताः पुनर्हर्म्यगताः स्त्रियो मां
वातायनार्द्धेन विनिःसृतास्याः।
हा! चारुदत्तेत्यभिभाषमाणा
बाष्पं प्रणालीभिरिवोत्सृजन्ति ॥११॥

अपि च। वध्ये नीयमाने जनस्य सर्वस्य रुदतः।
नयनसलिलसिक्तो रथ्यातो न उपशमति रेणुः ॥१०॥

---

वध्य इति। वध्ये चारुदत्ते नीयमाने, रुदतस्तच्छोकेन क्रन्दतः, सर्वस्य जनस्य, नयनसलिलेन सिक्तो रेणुर्धूलिः, रथ्यातो न उपशमति नोत्तिष्ठति।

अत्र रथ्यातो रेणूपशमनसम्भवेऽपि तदसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः।

चतुर्थचरणान्तिमाक्षरस्य दीर्घत्वेऽपि पक्षे गुरुत्वाद्गीतिरार्या जातिः ॥१०॥

एता इति। वातायनार्द्धेन विनिःसृतानि आस्यानि मुखानि यासां ताः, एता दृश्यमानाः, पुनर्हर्म्यगताः प्रासादाग्रभागस्थिताः स्त्रियः, हा चारुदत्त! इत्यभिभाषमाणाः सत्यः प्रणालीभिर्जलनिर्गममार्गैरिव, बाष्पमश्रुजलम्, उत्सृजन्ति परित्यजन्ति, मम शोकादिति भावः।

अत्रोत्प्रेक्षालङ्कारः। इन्द्रवज्रा वृत्तम् ॥११॥

---

আবও, বধ্য চারুদত্তকে নিয়া যাইতে থাকিলে, রোদনকারী সমস্ত লোকের নয়নজলে সিক্ত হইয়া, রাস্তা হইতে ধূলি উঠিতেছে না ॥১০॥

চারুদত্ত। (দেখিয়া শোকের সহিত) অট্টালিকাস্থিত এই সকল স্ত্রীলোকেরা, গবাক্ষ হইতে মুখমণ্ডল অর্দ্ধ বিনির্গত করিয়া, 'হা চারুদত্ত!'

चाण्डालौ। आअच्छ ले चालुदत्ता! आअच्छ। इमं घोशणट्ठाणं, आहणेध डिण्डिमं, घोशेध घोशणं। (ञ)

उभौ। शुणाध अज्जा! शुणाध। एशे शत्थवाहविणअ-दत्तश्श णत्तिके शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम। एदिणा किल अकज्जकालिणा गणिआ वशन्तशेणा अत्थकल्ल-वत्तश्श कालणादो शुण्णं पुप्फकलण्डअ-जिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण मालिदे त्ति, एशे शलोत्ते गहिदे, शअं च पडिवण्णे। तदो लण्णा पालएण अम्हे आणत्ता एदं मालेदुं। जदि अवले ईदिशं उभअलोअविरुद्धं अकज्जं कलेदि, तं पि लाआ पालए एव्वं ज्जेव शाशदि। (ट)

(ञ) आगच्छ रे चारुदत्त! आगच्छ। इदं घोषणास्थानम्, आहत डिण्डिमम्, घोषयत घोषणाम्।

(ट) शृणुत आर्य्याः! शृणुत। एष सार्थवाह-विनयदत्तस्य नप्ता सागरदत्तस्य पुत्रकः आर्य्यचारुदत्तो नाम। एतेन किल अकार्य्यकारिणा गणिका वसन्तसेना अर्थकल्य-वर्त्तस्य कारणात् शून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति, एष सलोप्त्रो गृहीतः, स्वयञ्च प्रतिपन्नः, ततो राज्ञा पालकेन वयमाज्ञप्ता एतं मारयितुम्। यद्यपर ईदृशमुभयलोकविरुद्धमकार्य्यं करोति, तमपि राजा पालक एवमेव शास्ति।

(ञ) चाण्डालाविति। आहत वादनाय ताड़यत। घोषणां राजोपदिष्ट-घोषणावाणीम्।

এইরূপ বলিতে থাকিয়া, প্রণালী (নর্দ্দমা) দ্বারাই যেন নয়নজল মোচন করিতেছে ॥১১॥

(ঞ) চাণ্ডালদ্বয়। আয় রে চারুদত্ত! আয়। এই ঘোষণার স্থান; সুতরাং ডিণ্ডিম তাড়ন কর্ এবং ঘোষণাবাক্য প্রচার কর্।

चारु। सनिर्वेदं स्वगतम्।

मख-शत-परिपूतं गोत्रमुद्भासितं मे
सदसि निविड़चैत्यब्रह्मघोषैः पुरस्तात्।
मम मरणदशायां वर्त्तमानस्य पापैः
तदसदृशमनुष्यैर्घुष्यते घोषणायाम्॥१२॥ (१)

(ट) उद्भासितमिति। चौर्य्यं च चौरितधनेन तदपहारेण चलितमिति उच्चौर्य्यः। "चौरिका स्तैन्यचौर्य्ये च स्तेयं चौर्य्यन्तु मलने" इत्यमरः। प्रतिपन्न, स्वीकृतवान्।

मखेति। मखशतेन बहुतरयज्ञानुष्ठानेन परिपूतं पवित्रीकृतम्, मे मम यद्गोत्रं वंशः, सदसि यज्ञादिसभायाम्, निविडेषु निमन्त्रितजनाकीर्णेषु चैत्येषु, यज्ञपूजाद्यायतनेषु ब्रह्मघोषैर्वेदध्वनिभिः, पुरस्तात् पूर्व्वम्, उद्भासितम् उत्कर्षेण प्रकाशितमासीदिति शेष ; मरणदशायां वर्त्तमानस्य मम तद्गोत्रम्, पापैः, पापकर्म्मैः "वसन्तसेना व्यापादिता" इति पापसूचकवाक्यप्रकारैरित्यर्थः, असदृशमनुष्यैरयोग्यलोक-चाण्डालैः, घोषणायां घोषणावाक्ये घुष्यते उदाक्रियते। तेन न केवलं ममात्मा कलुषित, अपि तु तद्वंश गोत्रमपीति महद् दुःखकारणमिदमिति भाव।

(ট) চাণ্ডালদ্বয়। শুনুন মহাশয়গণ! শুনুন। বণিক্ বিনয়দত্তের পৌত্র, সাগরদত্তের পুত্র ইনি আর্য্যচারুদত্তনামে প্রসিদ্ধ। অকার্য্যকারী এই চারুদত্ত, অচিরস্থায়ী এই ধনের নিমিত্ত, নির্জ্জন পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে প্রবেশ করাইয়া, বসন্তসেনানামে বেশ্যাকে বলপূর্ব্বক বাহু-পাশ দ্বারা হত্যা করিয়াছেন, তা'র পর চোরিত ধনের সহিত ইঁহাকে ধরা হইয়াছে এবং নিজেও, স্বীকার করিয়াছেন। সুতরাং রাজা পালক, ইঁহাকে হত্যা করিবার জন্য আমাদিগকে আদেশ করিয়াছেন। যদি অন্য লোক, এইরূপ উভয়লোকবিরুদ্ধ অকার্য্য করে, তবে তাহাকেও, রাজা পালক এইভাবেই শাসন করিবেন।

(१) स्वार्जितं यत्। निधनदशायाम्। इति दर्पणधृत, पाठः।

उद्वीक्ष्य कर्णौ पिधाय । हा प्रिये ! वसन्तसेने ! (ठ)

शशि-विमल-मयूख-शुभ्र-दन्ति !
सुरुचिर-विद्रुम-सन्निभाधरोष्ठि ! ।
तव वदनभवामृतं निपीय
कथमवशो ह्ययशोविषं पिबामि ॥१३॥

---

अत्र विरुद्धयोः पूर्वार्द्धपरार्द्धयोः सङ्घटनया विषमालङ्कारः । तथा पितृपितामहादि-गुरुजनस्य कीर्त्तनात् "सुणाध अज्जा !" इत्यारभ्य एतदन्तं प्रसङ्गो नाम विमर्शसन्ध्यङ्गम्— "प्रसङ्गो गुरुकीर्त्तनम्" इति साहित्यदर्पणलक्षणात् । उदाहरणं चेदमेव दर्पणे ।

मालिनी वृत्तम् ॥१२॥

(ठ) उद्वीक्ष्येति । उद्वीक्ष्य ऊर्द्ध्वमवलोक्य । ऊर्द्ध्वदर्शनं मरणात् परमूर्द्ध्वगत-वसन्तसेनासम्बोधनार्थम् ।

शशीति । शशिनश्चन्द्रस्य विमला मयूखाः किरणा इव शुभ्रा दन्ता यस्यास्तत्सम्बोधनम् । तथा सुरुचिरो यो विद्रुमः प्रवालस्तत्सन्निभौ अधरोष्ठौ यस्यास्तत्सम्बोधनञ्च । तव वदनभवामृतं मुखमध्यभवं सुधामृतं निपीय, अवशः स्वाधीनताहीनः अहम्, कथं हि केन प्रकारेणैव, अयशः एभिरुक्ता निन्दैव विषं तत् पिबामि, इति सुधीति भाव. ।

अत्रापि अमृतपानविषपानयोर्विरुद्धयोः सङ्घटनया विषमालङ्कारः लुप्तोपमाद्वयम्, निरङ्गरूपकञ्चैकमिति समुदाये सङ्करः । पुष्पिताग्रा वृत्तम् ॥१३॥

---

চারুদত্ত। (আত্মাবজ্ঞার সহিত স্বগত) বহুতর যজ্ঞানুষ্ঠানে পবিত্র আমার যে বংশ, যজ্ঞপ্রভৃতির সভায় জনাকীর্ণ যজ্ঞ-পূজাদিস্থানে বেদধ্বনিতে পূর্ব্বে উজ্জ্বল হইত, মরণদশায় বিদ্যমান আমার সেই বংশকে, অযোগ্য লোকে কুৎসিত বৃত্তান্তদ্বারা ঘোষণা স্থানে প্রচার করিতেছে ॥১২॥

(ঠ) (উপরের দিকে দৃষ্টিপাতপূর্ব্বক কর্ণযুগল আবৃত করিয়া) হা প্রিয়ে! বসন্তসেনে!

उभौ। ओसलध अज्जा। ओसलध। (ड)

एशे गुण-लअण-णिही शज्जणदुक्खाण उत्तलणशेदू।
असुवण्ण मण्डणअं अवणीअदि अज्ज णअलीदो ॥१४॥

अण्णं च। शव्वे क्खु होइ लोए लोअशुहशंठिदाण तत्तिल्ला।
विणिपडिदाण णलाणं पिअकाली दुल्लहो होदि ॥१५॥

---

(ड) अपसरत आर्य्याः। अपसरत।

एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः।
असुवर्णमण्डनकमपनीयतेऽद्य नगरीतः ॥१४॥

अन्यच्च। सर्व्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥१५॥

---

एष इति। गुणा दयादाक्षिण्यादय एव रत्नानि तेषां निधिराश्रयः तथा सज्जनदुःखानाम् उत्तरणे अतिक्रमे सेतुस्तत्स्वरूपः, एतमवलम्ब्यैव तत्तरणादिति भावः। एष चारुदत्तः अद्य नगरीतः सकाशात् न विद्यते सुवर्णमण्डनं स्वर्णालङ्कारो यस्मिन् कर्म्मणि तद्यथा तथा अपनीयते बहिष्क्रियते। लोकानां मृत्युदण्डाय स्वर्णालङ्कारो दीयत इति व्यवहारः दरिद्रत्वादस्य तु तन्नेति इदमपि महादुःखकारणमिति भावः।

अत्र निरङ्ग केवलरूपकमलङ्कारः। गाथा छन्द इति पृथ्वीधरः ॥१४॥

सर्व्व इति। लोके जगति सर्व्वः खलु लोकः सुखसंस्थितानां धनसम्पदादिना

---

চন্দ্রের নির্ম্মল কিরণের ন্যায় শুভ্র দন্ত সমন্বিতে! মনোহর প্রবালের তুল্য অধরোষ্ঠশালিনি! তোমার মুখামৃত পান করিয়া, এখন কি করিয়া নিন্দাবিষ পান করিব ॥১৩॥

(ড) চাণ্ডালদ্বয়। সরুন, মহাশয়েরা! সরুন।

গুণরত্নের নিধি এবং সজ্জন দুঃখের উত্তরণসেতু এই চারুদত্তকে আজ বিনা স্বর্ণালঙ্কারে নগর হইতে বাহির করিতেছি ॥১৪॥

चारु। सर्वतोऽवलोक्य।

अमी हि वस्त्रान्तनिरुद्धवक्त्राः
प्रयान्ति मे दूरतरं वयस्याः।
परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य ॥१६॥

सुखिनां नराणाम्, चिन्तायुक्त शुभानुध्यानपरायणो भवति। किन्तु विनिपतितानां विपन्नानां नराणाम्, प्रियकारी शुभानुष्ठानेन सन्तोषकारी लोकः दुर्लभो भवति। अत एवास्यापि चारुदत्तस्य सम्पत्समये बहव एव शुभानुध्यायिन आसन्, किन्त्विदानीमेकोऽपि नेति भावः।

अत्रैवार्थे अप्रस्तुतात् नरसामान्यात् प्रस्तुतचारुदत्तरूपनरविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः। अत्रापि गाथा छन्द इति पृथ्वीधरः ॥१५॥

अमी इति। अमी दूरं दृश्यमानाः, वयस्या हि पूर्वोक्तप्रणयबन्धुभावा एव जनाः, वस्त्रान्तेन वसनाञ्चलेन निरुद्धवक्त्राः आवृतमुखाः सन्तः, मे मम दूरतरम् अतीवदूरपथं प्रयान्ति अपसरन्ति। यद्वा परिचित्याह्वयेयुरित्यतो वक्त्रनिरोधेन दूरतरं प्रयान्तीति भावः। तथा च समस्थितस्य सम्पन्नावस्थस्य जनस्य सम्बन्धे, परोऽपि अनात्मीयोऽपि जनः, बन्धुर्भवति, उपकारप्रत्याशयेति भावः। किन्तु विषमस्थितस्य विपन्नावस्थस्य जनस्य सम्बन्धे, कश्चिदात्मीयोऽपि, मित्रं बन्धुर्न भवतीति शेषः प्रार्थनीयप्राप्त्यै परि-यमाणाभयेत्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, वक्रोक्तिचतुर्थचरणार्थयोर्विरूपयोः सङ्घटनया विषमालङ्कारश्च अनयोरङ्गाङ्गिभावेन सङ्करः।

उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥१६॥

---

আরও, জগতে সকল লোকই, সুখীদিগের শুভানুধ্যানপরায়ণ হইয়া থাকে, কিন্তু বিপন্নলোকের প্রিয়কারী লোক দুর্লভ হয় ॥১৫॥

চারুদত্ত। (সকলদিকে দৃষ্টিপাত করিয়া) ঐ সকল আমার বয়স্যগণ,

चाण्डालौ। ओशालणं किदं, विवित्तं लाअमग्गं, ता आणेध एदं दिण्णवज्झचिण्हं। (ढ)

चारु। निश्वस्य "मैत्रेय भो! किमिदमद्य" इत्यादि पठति।

नेपथ्ये। हा ताद! हा पिअवअस्स!। (ण)

चारु। आकर्ण्य सकरुणम्। भोः स्वजातिमहत्तर! इच्छाम्यहं भवतः सकाशात् प्रतिग्रहं कर्त्तुम्। (त)

चाण्डालौ। किं अम्हाणं हत्थादो पडिग्गहं कलेशि?। (थ)

(ढ) अपसारणं कृतम्, विविक्तो राजमार्गः, तदानयतैनं दत्तवध्यचिह्नम्।

(ण) हा तात! हा प्रियवयस्य!।

(थ) किमस्माकं हस्तात् प्रतिग्रहं करोषि?।

(ढ) चाण्डालाविति। विविक्तो निर्जनो जातः। एनं चारुदत्तम्।

(ण) नेपथ्य इति। हा तातेति रोहसेनोक्तिः। हा प्रियवयस्येति विदूषकोक्तिः।

(त) चारु इति। स्वजातिषु सर्वचाण्डालेषु महत्तर! श्रेष्ठप्रधान!। सामान्यतो महत्तरेति सम्बोधने उक्ते स्वनीचोक्तिप्रतीतिः स्यादित्यत स्वजातिपदम्।

বস্ত্রাঞ্চলদ্বারা মুখমণ্ডল আবৃত করিয়া, অতিদূর দিয়া যাইতেছেন। কারণ, অনাত্মীয়লোকও, সম্পন্ন অবস্থায় বন্ধু হইয়া থাকে, কিন্তু কোন লোকই, বিপন্ন অবস্থায় লোকের বন্ধু হয় না ॥১৬॥

(ঢ) চাণ্ডালদ্বয়। লোকদিগের অপসারণ করা হইয়াছে, সুতরাং রাজপথ এখন নির্জ্জন। অতএব বধ্যচিহ্নসমন্বিত ইহাকে আনয়ন কর।

চারুদত্ত। (নিশ্বাস ত্যাগ করিয়া, 'হে মৈত্রেয়! আজ এ কি উপস্থিত হইল' ইত্যাদি পাঠ করিলেন।)

(ণ) নেপথ্যে। হা পিতঃ! হা প্রিয়বয়স্য!।

(ত) চারুদত্ত। (শুনিয়া, শোকের সহিত) হে স্বজাতিশ্রেষ্ঠ! আমি আপনার নিকট হইতে প্রতিগ্রহ করিতে ইচ্ছা করি।

चारु। शान्तं पापम्। नापरीक्ष्यकारी दुराचारः पालक इव चाण्डालः। तत् परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये। (द)

चाण्डालौ। एवं क्रियताम्। (ध)

---

(ध) एवं क्रियताम्।

---

(ध) चाण्डालाविति। अस्माकं चाण्डालानाम्। तथा च ब्राह्मणस्य भवतश्चाण्डालात् प्रतिग्रहकरणं किं प्रचलितमासीदित्यर्थः।

(द) चारु इति। शान्तं पापम् इत्थंरूपं न वाच्यमित्यर्थः, चाण्डालात् प्रतिग्रह निषेधात्। तथा च मनुः—

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥"

एवञ्च "इच्छाम्यहं भवतः सकाशात् प्रतिग्रहं कर्तुं न" इति मम पूर्वोक्तौ प्रतिग्रहपदम् अनुग्रहग्रहणार्थं प्रयुक्तम्, तेन अनुग्रहग्रहणं कर्तुं नेच्छामीत्यर्थः इत्याशयः। मन्मपराधिनं ज्ञात्वा भवन्तं प्रति राजा निग्रहमेव कृतवान्, तत्किङ्करौ भूत्वा कथमहमनुग्रहं करोमीत्याह नेति। दुराचारः, पालकस्तदाख्यो राजेव, चाण्डालोऽपि भवान्, न अपरीक्ष्यकारी सर्वतोभावेन असमालोच्य न कार्य्यकारी तेन मुमूर्षुं प्रति अवश्यमनुग्रहः कर्त्तव्य इत्यालोच्य मत्प्रार्थना भवता पूरणीयैवेति भावः। ननु कोऽसावनुग्रह इत्याह तदिति। परलोकार्थं परलोके सद्गतिलाभार्थम्। "मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत स" इति श्रुतेः पुत्रमुखदर्शनेऽपि पुत्रोत्पत्तेरित्यभिप्रायः।

---

(ধ) চাণ্ডালদ্বয়। আপনি আমাদের হাত হইতে প্রতিগ্রহ করিয়া থাকেন ?।

(দ) চারুদত্ত। ওরূপ বক্তব্য নহে। দুরাচার পালকের ন্যায় চাণ্ডাল পর্য্যালোচনা না করিয়া কার্য্য করেন না। অতএব পরলোকের নিমিত্ত আমি পুত্রের মুখ দেখিতে চাহি।

(ধ) চাণ্ডালদ্বয়। ইহা করুন।

नेपथ्ये । हा तात ! हा आवुक ! । (न)

चारु । श्रुत्वा सकरुणम् । "भो स्वजातिमहत्तर !" इत्यादि पठति ।

चाण्डालौ । अले पउला । खणं अन्तलं देध । एशे अज्जचालुदत्ते पुत्तमुह पेक्खदु । नेपथ्याभिमुखम् । अज्ज । इदो इदो, आअच्छ ले दालआ । आअच्छ । (प)

ततः प्रविशति दारकमादाय विदूषकः ।

विदू । तुवरदु तुवरदु भद्दमुहो, पिदा दे मारिदुं णीअदि । (फ)

---

(न) हा तात ! हा आवुक ! ।

(प) अरे पौराः । क्षणमन्तरं दत्त । एष आर्यचारुदत्तः पुत्रमुखं प्रेक्षताम् । आर्य ! इत इतः, आगच्छ रे दारक ! आगच्छ ।

(फ) त्वरतां त्वरतां भद्रमुखः पिता ते मारयितुं नीयते ।

---

(न) नेपथ्य इति । अवति पालयतीति आवुकः, औणादिक उकण् । हे आवुक । जनक ।। "आवुको जनक" इति नाट्योक्तावमरः ।

(प) चाण्डालाविति । अन्तरम् अनयोरागमनाय अवकाशम् । आर्येति विदूषकस्य सम्बोधनम् दारकेति च रोहसेनस्य ।

(फ) विदू इति । भद्रं मङ्गलं सुलक्षणादिना तत्सूचकं मुखं यस्य स रोहसेनः ।

---

(न) নেপথ্যে। হা পিতঃ! হা জনক!।

চারুদত্ত। (শুনিয়া, শোকের সহিত। 'হে স্বজাতিশ্রেষ্ঠ!' ইত্যাদি পাঠ করিলেন)

(প) চাণ্ডালদ্বয়। হে পুরবাসিগণ! আপনারা ক্ষণকাল অবকাশ দেন, এই আর্য্য চারুদত্ত, পুত্রের মুখ দর্শন করুন। (নেপথ্যের দিকে চাহিয়া) আর্য্য! এদিকে এদিকে (আসুন), আয় রে বালক! আয়।

তদনন্তর বালককে লইয়া বিদূষকের প্রবেশ।

दारकः। हा ताद। हा आवुक!। (ब)

विदू। हा पिअवअस्स। कहिं मए तुमं पेक्खिदव्वो?। (भ)

चारु। पुत्र मित्रञ्च वीक्ष्य। हा पुत्र। हा मैत्रेय?। सकरुणम्। भोः! कष्टम्।

चिरं खलु भविष्यामि परलोके पिपासितः।
अत्यल्पमिदमस्माकं निवापोदकभोजनम् ॥१७॥

(ब) हा तात। हा आवुक!।

(भ) हा प्रियवयस्य। कुत्र मया त्वं प्रेक्षितव्यः?।

---

(भ) विदू इति। प्रेक्षितव्यः पुनर्द्रष्टव्यः। इहलोके क्वापि नेति भावः।

चिरमिति। परलोके, चिरं खलु पिपासितस्तृषार्त्तो भविष्यामि। कुत इत्याह इदं मम श्मशानच्छिन्नत्वादयं पुत्र इत्यर्थः, अत्यल्पमेव अस्माकं ममेत्यर्थः, निवापोदकं पितृदेयजलं तस्य भोजनं मम तद्भोजनकारकमित्यर्थः। तथा चायं समवयदैन्यीय-शिशुपुत्र, इदानीमेव मन्मरणे अधुनैव च तर्पणमावश्यकम्, अयञ्च शिशुः तत्तर्पणजलं कियद्दातुं शक्ष्यति? येन ततो मे पिपासानिवृत्तिः स्यात्। अतो यावदयं वयस्थः स्यात् तावदेव पिपासितो भविष्यामीति भावः।

---

(ब) বিদূষক। রোহসেন। সত্বর হও, সত্বর হও, তোমার পিতাকে হত্যা করিবার জন্য নিয়া যাইতেছে।

(ব) বালক। হা পিতঃ। হা জনক।।

(ভ) বিদূষক। হা প্রিয়বয়স্য। আমি আবার কোথায় তোমাকে দেখিতে পাইব?।

চারুদত্ত। (পুত্র ও মিত্রকে দেখিয়া) হা পুত্র। হা মৈত্রেয়। (শোকের সহিত) হায়! কি কষ্ট।

किं पुत्राय प्रयच्छामि ? । आत्मानमवलोक्य । यज्ञोपवीतं दृष्ट्वा ।
आं, एदं तावदस्ति मम च । (म)

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम् ।
देवतानां पितॄणाञ्च भागो येन प्रदीयते ॥१८॥

इति यज्ञोपवीतं ददाति ।

---

अत्र पूर्वार्द्धं प्रति परार्द्धवाक्यार्थो हेतुरिति काव्यलिङ्गम्, तथा भोजनकारकार्थे भोजनपदप्रयोगेण हेतुहेतुमतोरभेदेनाभिधानात् हेतुनामालङ्कारस्य, अनयोः संसृष्टिः ।

"पितृदान निवाप स्यात्" इत्यमरः ॥१७॥

(म) किमिति । आमिति स्मरणार्थमव्ययम् । किञ्चेति चार्थः । मम तावदिदं यज्ञोपवीतरूपं देयमस्तीत्यर्थः ।

अमौक्तिकमिति । इदं यज्ञोपवीतम्, अमौक्तिकं मुक्ताभिरनिर्म्मितम्, असौवर्णं सुवर्णैरघटितम्, ब्राह्मणानां विभूषणं विशिष्टालङ्कारस्वरूपम्, एतेनैव सर्वत्र विशेषाद्दरणीयकरणादित्याशयः । येन यज्ञोपवीतेन, देवतानां भागः पूजाद्यः, पितॄणां भागश्च श्राद्धाद्यः, प्रदीयते, "सव्येनोपवीतिना भाव्यम्" "प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना" इत्यादिस्मृतेरिति भावः ।

अत्र मौक्तिकसौवर्णभिन्नत्वरूपाधिकवैशिष्ट्यस्य आरूढत्वादधिकारूढवैशिष्ट्यरूपकमलङ्कारः ॥१८॥

---

পরলোকে আমি দীর্ঘকাল যাবৎ পিপাসিত থাকিব। কারণ, এই শিশুপুত্র, আমাকে অত্যল্পই তর্পণের জল পান করাইতে পারিবে ।১৭।

(ম) পুত্রকে কি দান করিব ? । (গাত্রের দিকে চাহিয়া যজ্ঞোপবীত দেখিয়া) ও ! আমার এই যজ্ঞোপবীত রহিয়াছে ।

ইহা, মুক্তা বা স্বর্ণনির্ম্মিত নহে, অথচ ইহা ব্রাহ্মণগণের অলঙ্কার, যাহা দেবতা ও পিতৃলোকের ভোগ্য অংশ দেওয়া হয় ।১৮।

(এই বলিয়া যজ্ঞোপবীত দান করিলেন)

चाण्डालः। आअच्छ ले चालुदत्ता। आअच्छ। (य)

द्वितीयः। अले! अज्जचालुदत्तं णिलुववदेण णामेण आलवसि?। अले! पेक्ख। (र)

अब्भुदए अवशाणे तहे अ लत्तिन्दिवं अहटमग्गा।
उद्दामे व्व किशोली णिअदी क्खु पडिच्छिदं (१) जादि ॥१८॥

---

(य) आगच्छ रे चारुदत्त। आगच्छ।

(र) अरे। आर्य्यचारुदत्तं निरुपपदेन नाम्ना आलपसि?। अरे। प्रेक्षस्व।

अभ्युदये अवसाने तथैव रात्रिन्दिवमहतमार्गा।
उद्दामेव किशोरी नियतिः खलु प्रतीष्टं याति ॥१९॥

---

(र) द्वितीय इति। निरुपपदेन गौरवसूचकसन्निहितार्य्यादिविशेषणाभावेन। नैतत् सङ्गतमिति भावः।

अभ्युदय इति। अभ्युदये उन्नतौ तथैव अवसाने क्षये अवनतौ, अहत केनापि न निवारितो मार्गे प्रवर्त्तनपथो यस्याः सा तादृशी, नियतिर्दैवम् उद्दामा उन्मुक्तबन्धना, किशोरी प्रथमयौवनस्था हस्तिनीव, रात्रिन्दिवं खलु सर्व्वदैव प्रतीष्टं स्वाभीष्टविषयम्, याति प्राप्नोति। तथा च तादृशी नियतिरेवास्य ईदृशीं दशां क्षतवती न पुनर्गौरवमपि हृतवतीति गौरवहानिकरं न किञ्चिदकार्य्यमिति भावः।

अत्र श्रौतोपमालङ्कारः। आर्य्या च जातिः॥१९॥

---

(य) প্রথম চাণ্ডাল। আয় রে চারুদত্ত! আয়।

(র) দ্বিতীয় চাণ্ডাল। ওরে। নিরুপপদনাম দ্বারা আর্য্য চারুদত্তের সহিত আলাপ করিতেছিস্?। ওরে। দেখ—

লোকের উন্নতির বা অবনতির সময়ে এবং দিনে বা রাত্রিতে কেহই যাহার পথ রোধ করিতে পারে না, সেই নিয়তি, উন্মুক্তবন্ধনা যুবতি হস্তিনীর ন্যায়, নিজের অভীষ্টবিষয় সম্পাদন করিয়া থাকেন ॥১৯॥

---

(१) पडीच्छिदं।

अन्यं च। सुक्खा ववदेसा (१) से
किं पणमिअ मत्थए ण कादव्वं।
राहुगहिदे वि चन्दे
ण वन्दणीए जणपदस्स ? ॥२०॥

बालकः। अरे रे चाण्डाला! कहिं आवुकं णेध ?। (ल)

चारु। वत्स!

अन्यच्च। शुष्का व्यपदेशा अस्य किं प्रणम्य मस्तके न कर्त्तव्यम् ?।
राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ? ॥२०॥

(ल) अरे रे चाण्डाला! कुत्र मम पितरं नयथ ?।

---

ननु धनलोभेन स्त्रीहत्याकारिणः किं गौरवमित्याह शुष्का इति। व्यपदेशा छलरूपा वसन्तसेनाहत्यापवादा, शुष्का शुष्कजलादिवदकिञ्चित्करा मिथ्या एवेत्यर्थः। अस्य चारुदत्तस्य कुलनामादिकं किं वस्तु, प्रणम्य मस्तके न कर्त्तव्यम्? अपि तु कुलनामादिकं सर्वमेव प्रणम्य मस्तके कर्त्तव्यमित्यर्थः। ननु शकारेण स्त्रीहत्यापवादेन दूषितस्य कथं तादृशं सम्मानम् इत्याह—राहुणा गृहीतो ग्रस्तोऽपि चन्द्रः, जनपदस्य तद्वासिनो जनस्य न वन्दनीयः किमिति काकुः, अपि तु वन्दनीय एवेत्यर्थः सुतरामस्यापि नामादिकं सर्वं वन्दनीयमिति भावः।

अत्रार्थापत्तिदृष्टान्तयोरङ्गाङ्गिभावेन सङ्करः। आर्या च जातिः ॥२०॥

---

আরও, চারুদত্তের অপবাদ, শুষ্ক (মিথ্যা), সুতরাং চারুদত্তের কুল নামাদি কোন বস্তু, প্রণামপূর্ব্বক মস্তকে ধর্ত্তব্য নহে?। চন্দ্র রাহুগ্রস্ত হইলেও, লোকের কি বন্দনীয় নহে? ॥২০॥

(ল) বালক। ওরে রে চাণ্ডালগণ! আমার পিতাকে কোথায় নিয়া চলিয়াছ?।

---

(१) सुक्का विवदेसा।

अंसेन बिभ्रत् करवीरमालां
स्कन्धेन शूलं हृदयेन शोकम्।
आघातमद्याहमनुप्रयामि
शामित्रमालब्धुमिवाध्वरेऽजः ॥२१॥

चाण्डालः। दालआ!। ×
णहु अम्हे चाण्डाला चाण्डालकुलम्मि जादपुव्वा वि (१)।
जे अहिभवन्ति साहुं ते पावा ते अ चाण्डाला ॥२२॥

× । दारक!

न खलु वयं चाण्डालाः चाण्डालकुले जातपूर्वा अपि।
ये अभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥२२॥

---

अंसेनेति। अंसेन गलभागेन, करवीरस्य पुष्पस्य मालाम्, स्कन्धेन शूलम्, हृदयेन शोकञ्च अकारणभाविमृत्युजनितमिति भावः, बिभ्रत् धारयन् अहम्, अध्वरे यज्ञे अजच्छाग इव, आघातं प्रहारम्, आलब्धुं प्राप्तुम्, अद्य इदानीम्, शामित्रं वध्यस्थानम्, अनुप्रयामि अनयोः पश्चात् पश्चात् गच्छामि, न पुनर्निमाविव मां तव नयत इति मात्यमयोः कश्चिद्दोष इति भावः।

अत्र बिभ्रदित्येकया क्रियया अप्रस्तुतानां करवीरमालादीनां प्रस्तुतानामभिसम्बन्धात् तुल्ययोगिता शौतोपमा चानयोर्मिथो निरपेक्षतया संसृष्टिः।

"अंस स्कन्धे विभागे च" इति विश्वः। "शमिता यज्ञे" इति सूत्रात् शमितरि भवं शामित्रमिति घञीयप्रत्ययस्योत्पत्तिः। इन्द्रवज्रा वृत्तम् ॥२१॥

नेति। चाण्डालकुले जातपूर्वा अपि वयम्, न खलु चाण्डालाश्चाण्डालवत् दुष्ट स-

চারুদত্ত। বৎস! গলদেশে করবীরপুষ্পের মালা, স্কন্ধে শূল এবং হৃদয়ে শোক ধারণ করতঃ আমি, যজ্ঞ ছাগের ন্যায় আঘাত পাইবার জন্য আজ বধ্যস্থানে যাইতেছি ॥২১॥

---

(१) जादपुव्वा वा।

दारक.। ता कीस मारेध आवुकं ?। (व)

चाण्डाल.। दीहाऊ ! अत्त लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे। (श)

दारकः। वावादेध मं, मुञ्चध आवुकं। (ष)

(व) तत् केन मारयत आवुकम् ?।

(श) दीर्घायुः ! अत्र राजनियोगः खलु अपराध्यति, न खलु वयम्।

(ष) व्यापादयत माम् मुञ्चत आवुकम्।

---

कश्चाय। तर्हि यूयं कथमथापि चाण्डाला के इत्याह—ये जना, साधु जनम्, अभिभवन्ति उत्पीडयन्ति, ते पापा पापिनः, अतएव ते च चाण्डाला ।

अत्र चाण्डालकुले जातपूर्वत्वरूपकारणे सत्यपि चाण्डालत्वरूपतत्कार्याभावात् विशेषोक्तिरलङ्कार । तथा आत्मनो यूयं कथं चाण्डालत्वाभावप्रतिपादनवाक्यार्थं बालकाक्षेत चाण्डाला इति क्रोधजनितापमानस्य सहनात् छादनं नाम विमर्शसन्धेरङ्गम्। "तदाहुश्छादनं पुनः। कार्यार्थमपमानादेः सहनं खलु यद्भवेत्।" इति दर्पणलक्षणात्। आर्या जातिः ॥२२॥

(श) चाण्डाल इति। राजकिङ्करा वयं राजनियोगादेव मारयाम इति भावः।

(ष) दारक इति। "कश्चित् पुरुषं मारयत" इत्येव राजनियोगश्चेत् तर्हि मां व्यापादयत, तथात्वेऽपि तत्सिद्धेः, आवुकं पितरं मे मुञ्चतेत्याशयः।

---

চাণ্ডাল। বালক! আমরা চাণ্ডালবংশে জন্মিয়াও, চাণ্ডাল নহি। যাহারা সাধু লোকদের উৎপীড়িত করে, তাহারাই চাণ্ডাল এবং তাহারাই পাপাত্মা ॥২২॥

(ব) বালক। তা তোমরা আমার পিতাকে হত্যা করিতেছ কেন ?।

(শ) চাণ্ডাল। দীর্ঘায়ু! এ বিষয়ে রাজাজ্ঞাই অপরাধী, আমরা নহি।

चारु। शान्तं पापम्। दृष्ट्वा स्वगतम्। अद्य अवगच्छामि। "समसंस्थित" इत्यादि पठति। प्रकाशम्। "एता पुनर्हर्म्यगता स्त्रियो माम्" इत्यादि पुनः पठति। (च)

चाण्डालौ। ओशलध अज्जा! ओशलध। (क)

किं पेक्खध शप्पुलिशं अजशवशेण पणट्टजीवाशं।
कूवे खण्डिदपाशं काञ्चणकलशं विअ णिबुडन्तं ॥২৪॥

(क) अपसरत आर्य्याः। अपसरत।

किं प्रेक्षध्वे सत्पुरुषम् अयशोवशेन प्रनष्टजीवाशम्।
कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥২৪॥

---

(ङ) विदू इति। भद्रमुख्याविति चाण्डालयोः सम्बोधनम्।

(च) चारु इति। शान्तं पापं मैत्रेयोक्तं कुतोऽपि न कर्त्तव्यमित्यर्थः। अवगच्छामि "परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद्विषमस्थितस्य" इत्युक्तार्थं सम्यग् बुध्ये। "समसंस्थित" इत्येकदेशेन तदाद्यन्तश्लोकार्द्धं सूचितम्।

किमिति। खण्डितश्छिन्नः पाशो बन्धनरज्जुर्यस्य तम् अतएव कूपे मज्जन्तं काञ्चनकलशं स्वर्णकुम्भमिव, अयशोवशेन वसन्तसेनाया हत्यापवादनिमित्तेन प्रनष्टा जीवस्य जीवनस्य आशा यस्य तम्, अतएव मज्जन्तं भुवनादिच्युच्यमानं साधुजननिन्दाया अशक्यत्वात् स्वयमेव मर्त्तुमिच्छुमित्यर्थः, सत्पुरुषं साधुस्वभावमिमं चारुदत्तम्, किं प्रेक्षध्वे कथं पश्यत, सत्पुरुषप्राणविपत्तिदर्शननिषेधादिति भावः।

---

(ঙ) বিদূষক। হে ভদ্রপ্রধানগণ! তোমরা প্রিয়বয়স্য চারুদত্তকে পরিত্যাগ কর, আমাকে হত্যা কর।

(চ) চারুদত্ত। ওরূপ বলিও না। (দেখিয়া স্বগত) আজ বুঝিলাম। ("সম্পন্ন অবস্থার লোকের" ইত্যাদি পাঠ করিলেন। প্রকাশ্যে। "অট্টালিকাস্থিত এই স্ত্রীলোকগণ" ইত্যাদি পুনর্বার পাঠ করিলেন)

(ক) চাণ্ডাল। সরুন, মহাশয়েরা। সরুন।

चारु। सकरुणम्। "शशिविमलमयूख" इत्यादि पठति।

अपरः। अले! पुणो वि घोशेहि। (ख)

चाण्डालः। तथा करोति। (ग)

चारु। प्राप्तोऽहं व्यसनकृशां दशामनार्य्यां
यत्रेदं फलमपि जीवितावसानम्।
एषा च व्यथयति घोषणा मनो मे
श्रोतव्यं यदिदमसौ मया हतेति॥२५॥

(ख) अरे! पुनरपि घोषय।

---

अत्र श्रौतोपमालङ्कारः। काञ्चनपदेन कलशस्य उत्कर्षं सूचयित्वा चारुदत्तस्यापि उत्कर्षः सूच्यते इति नापुष्टार्थत्वदोषः। आर्या जातिः॥२४॥

(ग) चाण्डाल इति। तथा करोति पुनरपि पूर्वोक्तं घोषयति।

प्राप्त इति। अहम्, व्यसनेन शकाराभियोगरूपविपदा क्रमात् पूर्वं दरिद्रदशातोऽपि हीनीकृताम्, अनार्य्यां स्त्रीहत्यापवादादसाध्वीम्, दशामवस्थाम्, प्राप्तः; यत्र दशायाम्, इदं फलमपि, जीवितस्य जीवनस्य अवसानं परिसमाप्तिर्यस्मिन् तत् तादृशं जातम्। किञ्चेति चार्थः। एषा घोषणा, मे मम मनो व्यथयति; यद्यस्मात्, असौ वसन्तसेना, मया हता, इति सत्यम्, इदं घोषणावाक्यम्, मया श्रोतव्यं भवति।

प्रहर्षिणी वृत्तम्॥२५॥

---

ছিন্নরজ্জু, কূপে নিমগ্ন প্রায় স্বর্ণকুম্ভের ন্যায় অপবাদবশতঃ জীবনাশা-বিহীন সৎপুরুষকে আপনারা দেখিতেছেন কেন? ॥২৪॥

চারুদত্ত। (শোকের সহিত "চন্দ্রের নির্মল কিরণের ন্যায়" ইত্যাদি পাঠ করিলেন।)

(খ) অপর চাণ্ডাল। ওরে! পুনরায় ঘোষণা কর্।

(গ) চাণ্ডাল। (তাহা করিল)

চারুদত্ত। আমি, বিপত্তিনিবন্ধন হীন এবং ঘৃণিত অবস্থা প্রাপ্ত

ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः।

स्थाव। (घोषणामाकर्ण्य सवैक्लव्यम्।) कधं अपावे चालुदत्ते वावादीअदि? हग्गे णिअलेण शामिणा बन्धिदे। भोदु, आक्कन्दामि। शुणाध अय्या! शुणाध, एत्थ दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलण्डअ-जिण्णुय्याणं वशन्तशेणा णीदा, तदो मम शामिणा मं ण कामेशि त्ति कदुअ बाहुपाशबलक्कालेण मालिदा, ण उण एदिणा अय्येण। कधं विदूलदाए ण कोवि शुणादि?। ता किं कलेमि?। अत्ताणअं पाडेमि।

(घ) कथमपापश्चारुदत्तो व्यापाद्यते? अहं निगडेन स्वामिना बद्धः। भवतु, आक्रन्दामि। शृणुत आर्य्याः! शृणुत, अत्र इदानीं मया पापेन प्रवहणपरिवर्त्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता, ततो मम स्वामिना मां न कामयसीति कृत्वा बाहुपाशबलात्कारेण मारिता न पुनरेतेन आर्य्येण। कथं विदूरतया न कोऽपि शृणोति?। तत् किं करोमि?। आत्मानं पातयामि। यद्येवं करोमि, तदा

(घ) स्थाव इति। वैक्लव्येन विह्वलतया, सह सवैक्लव्यम्। न विद्यते पाप वसन्तसेनाहत्याजनित कलुष यस्य स। निगडेन शृङ्खलया, स्वामिना शकारेण। आक्रन्दामि आक्रन्दनं दूरत आह्वानं तद्वदुच्चैर्ब्रवीमि। विदूरतया विप्रकृष्टदूरतया।

अत्र जनसाधारणाश्रवणरूपस्य ईप्सितार्थस्य विप्रकृष्टदूरत्वेन प्रतीघातात् प्रतिषेधो नाम विमर्शसन्धेरङ्गम्। यथा साहित्यदर्पणे—

"ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते।"

হইয়াছি, যাহাতে জীবননাশপর্য্যন্ত এই ফলও, উপস্থিত হইয়াছে। বিশেষতঃ এই ঘোষণা আমার হৃদয়কে ব্যথিত করিতেছে, যে হেতু "আমি বসন্তসেনাকে হত্যা করিয়াছি" ইহা শুনিতে হইল ॥২৫॥

তদনন্তর অট্টালিকার উপরে বদ্ধ অবস্থায় স্থাবরকের প্রবেশ।

(ঘ) স্থাবরক। (ঘোষণা শুনিয়া, বিহ্বলভাব সহিত) নিরপরাধ

विचिन्त्य। जइ एव्वं कलेमि, तदा अज्जचालुदत्ते ण वावादीअदि। भोदु, इमादो पाशादबालग्ग-पदोलिकादो पदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि। वलं हग्गे उवलदे, ण उण एशे कुलपुत्तविहआणं वाशपादवे अज्जचालुदत्ते। एव्वं जइ विवज्जामि, लद्धे मए पललोए। इत्यात्मानं पातयित्वा। ही ही। ण उवलदम्हि। भग्गे मे दण्डणिअले। ता चाण्डालघोशं शमण्णेशामि। इत उपसृत्य। हंहो चाण्डाला! अन्तलं अन्तलं। (घ)

आर्य्यचारुदत्तो न व्यापाद्यते। भवतु अस्मात् प्रासादबालाग्रप्रतोलिकातः पतन् जीर्णगवाक्षेण आत्मानं निक्षिपामि। वरमहमुपरतो न पुनरेष कुलपुत्रविहगानां वासपादप आर्य्यचारुदत्तः। एवं यदि विपद्ये लब्धो मया परलोकः। हो हो! नोपरतोऽस्मि। भग्नो मे दण्डनिगडः। तच्चाण्डालघोषं समन्विष्यामि। हंहो चाण्डालौ! अन्तरमन्तरम्।

अस्मात् इत्यादिकम्। प्रासादे तदुपरितले इत्यर्थः, बाला क्षुद्रा या अग्रप्रतोलिका उच्चवर्त्मिनी रथ्या तस्याः। उपरतः एतावद्दुःखदर्शनात् पतनेन मृतः। कुलपुत्राः सद्वंशोत्पन्ना जना एव विहगाः पक्षिणस्तेषाम्, आश्रयाय पादपो वृक्ष इव। एवमनेन पतनेन। विपद्ये म्रिये। परलोकः स्वर्गः, निरपराधब्राह्मणस्य रक्षितत्वादिति भावः। दण्डनिगडः दण्डवत् शृङ्खला अर्गला। चाण्डालयोः घोषं घोषणाम्।

চারুদত্তকে হত্যা করিতেছে কেন? প্রভু আমাকে শৃঙ্খলদ্বারা বদ্ধ করিয়াছেন। হউক, উচ্চৈঃস্বরে বলি। শুনুন, মহাশয়েরা। শুনুন। এ বিষয়ে পাপাত্মা আমি, গাড়ীর পরিবর্ত্তনক্রমে বসন্তসেনাকে পুষ্পকরণ্ডকনামক জীর্ণোদ্যানে নিয়াছিলাম, তাহার পর আমার প্রভু (শকার) 'আমাকে কামনা করিস্ না' বলিয়া বলপূর্ব্বক বাহুপাশ দ্বারা বসন্তসেনাকে হত্যা করিয়াছেন, কিন্তু এই আর্য্য চারুদত্ত হত্যা করেন নাই। হায়।

चाण्डाली। अले! के अन्तलं मग्गेदि ?। (ङ)

चेट। शृणुत—इति पूर्वोक्तं पठति।

चारु। अये!

कोऽयमेवंविधे काले कालपाशस्थिते मयि।
अनावृष्टिहते शस्ये द्रोणमेघ इवोदितः ?॥२६॥

(ङ) अरे! क अन्तरं मार्गयति ?।

---

क इति। शस्ये, अनावृष्ट्या इति हतप्राये सति, द्रोणमेघ इव अत्यन्तवर्षी द्रोणाख्यो मेघविशेष इव, एवं विधे काले मयि कालपाशस्थिते कृत अस्य बन्धनमुक्तये सतीत्यर्थः, अयं कः उदितः उपस्थितः ?। अप्रार्थित एवायं मे परमोपकारी भविष्यतीति भावः।

अत्र काले काल इति व्यञ्जनसमूहस्य सकृदनेकधा साम्यात् छेकानुप्रासः श्लोकोपमा चानयोः संसृष्टिः। द्रोणमेघमाह ज्योतिषशास्त्रे आर्त्तं धृतम्—

---

অত্যন্ত দূর বলিয়া কেহই শুনিতেছে না। তা' কি করি ?। নিজ দেহকে নিপাতিত করি। (চিন্তা করিয়া) যদি এইরূপ করি, তবে আর্য্য চারুদত্তকে হত্যা করিবে না। হউক, এই অট্টালিকার নূতন বাতাব সম্মুখ হইতে এই জীর্ণ গবাক্ষদ্বারা নিজ দেহকে নিক্ষেপ করি। আমার মৃত্যুও ভাল, কিন্তু সংকুলোৎপন্নলোকরূপপক্ষিগণের বাসবৃক্ষ এই চারুদত্তের মৃত্যু ভাল নহে। ইহাতে যদি আমি মরিয়া যাই, তবে আমি পর লোক লাভ করিলাম। (এই বলিয়া দেহ নিপাতিত করিয়া) কি আশ্চর্য্য। কি আশ্চর্য্য! আমি মরিলাম না, বরং আমার শিকল ভাঙ্গিল!। তা চাণ্ডালের ঘোষণাস্থান অন্বেষণ করি। (দেখিয়া, নিকটে যাইয়া) ওহে! চাণ্ডাল। অবকাশ দাও, অবকাশ দাও।

(ঙ) চাণ্ডালদ্বয়। ওরে। কে অবকাশ চাহিতেছে ?।

ভৃত্য। ('শুন' ইত্যাদি পূর্ব্বোক্ত পাঠ করিল)

भोः! श्रुतं भवद्भिः?। (च)

न भीतो मरणादस्मि केवलं दूषितं यशः।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥२७॥

अन्यच्च। तेनास्म्यप्रकृतवैरेण क्षुद्रेणाल्पबुद्धिना।
शरेणेव विषाक्तेन दूषितेनापि दूषितः ॥२८॥

"विद्युते शाकवर्षे तु चतुर्भिः शोभितक्रमात्।
आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम्॥
आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः।
पुष्करः पुष्करजलो द्रोणः शस्यप्रपूरकः॥" ॥२६॥

(च) भो इति। भवद्भिर्दृष्टजने श्रुतं किमिति काकुः। श्रुतञ्चेत् ममापराधाभाव इति ज्ञातमपीति भावः।

ननु किं मरणाद्भीतोऽसि? येनास्मानेव ब्रवीषीत्याह नेति। अहं मरणात् न भीतोऽस्मि। तर्हि एवं श्रुत्वा कथमस्मान् साक्षिणः करोषीत्याह केवलं यशः साधुत्वख्यातिः, दूषितं स्त्रीहत्यापवादेनेति शेषः। तदयशोदूषणदूरीकरणाय भवतः प्रतिपादयितुमनुरोध इति भावः। हि तथाहि, मे मम विशुद्धस्य स्त्रीहत्यापवादहीनस्य सतः, मृत्युः पुत्रजन्मसमो भवेत्। आनन्दकर इति भावः।

अत्रार्थोपमालङ्कारः ॥२७॥

---

চারুদত্ত। অহে। অনাবৃষ্টিবশতঃ শস্য হতপ্রায় হইলে শস্যবর্দ্ধক মেঘের ন্যায় এই কোন্ ব্যক্তি, এইরূপ সময়ে, আমি কালপাশে থাকিতে উপস্থিত হইল? ॥২৬॥

(চ) মহাশয়গণ। আপনারা শুনিলেন কি?।

আমি মরণ হইতে ভীত নহি, তবে কেবল যশ দূষিত হইয়াছে (সুতরাং এরূপ জিজ্ঞাসা করিতেছি)। নির্দ্দোষ অবস্থায় আমার মৃত্যু হইলে, তাহা পুত্রজন্মের তুল্য হইবে ॥২৭॥

चाण्डालौ । थावलअ ! अवि सच्चं भणासि ? । (छ)

चेटः । सच्चं । हग्गे वि, मा कस्स वि कधइस्ससि त्ति पाशादवालग्ग-पदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते । (ज)

प्रविश्य शकारः । सहर्षम् ।

मशेण तिक्खाम्लिकेण भत्ते शाकेण शूपेण शमच्छकेण ।
भुत्तं मए अत्तणअश्श गेहे शालिश्श कूलेण गुलोदणेण ॥२८॥

(छ) स्थावरक ! अपि सत्यं भणसि ? ।

(ज) सत्यम् । अहमपि, मा कस्यापि कथयिष्यसीति प्रासादबालाग्र प्रतोलिकायां दण्डनिगडेन बद्धा निक्षिप्तः ।

तनेति । न छलं येन गवुता यस्य तम, पुट्टेण भीषस्वभावम, तथा अल्पा बुद्धिना, अन्यथा तिना कारणमेव ममापकारो न क्रियतेति भाव, दूषितेन स्त्रीहत्यापापेनैव विषेणेव च स्वय, दीषदर्शनेत्यर्थं, विषार्त्तेन शरेणेव, तेन शकारेण, अपि अहं दूषित स्त्रीहत्यापवादविषयीकृत । वस्तुतस्तमापवादो मिथ्यैवति भाव ।

अत्र श्रौतीपमालङ्कार ॥२८॥

(ज) चेट इति । अहमपि निक्षिप्त इति परेणान्वय । कस्यापि सकाशे, मा कथयिष्यसि वसन्तसेनाया हत्यावृत्तान्तमिति शेष । अत्र शकारोक्तेरनुवाद । निक्षिप्त स्थापित ।

আবও, আমি শকারের সহিত কোন শত্রুতা করি নাই, তথাপি সেই ক্ষুদ্র এবং অত্যল্পবুদ্ধি শকার, স্বয়ং দূষিত হইয়াও বিষাক্ত শরের স্থায় আমাকে দূষিত করিয়াছে ॥২৮॥

(ছ) চাণ্ডালদ্বয়। স্থাবরক। তুমি কি সত্য বলিতেছ ? ।

(জ) ভৃত্য। সত্য। "কাহারও সহিত বলিস্ না" এই কথা বলিয়া আমার প্রভু আমাকে অট্টালিকার নূতন বাস্তার সম্মুখভাগে দৃঢ়-শৃঙ্খলদ্বারা বদ্ধ করিয়া রাখিয়াছিলেন।

कर्णं दत्त्वा। भिण्ण-कंश-खड्खणाए चाण्डालवाआए शल-शंजोए जधा अ एशे उक्खालिदे वज्झडिण्डिमशद्दे पडहाणं अ शुणीअदि, तधा तक्केमि, दलिद्द-चालुदत्तके वज्झट्ठाणं णीअदि त्ति। ता पेक्खिश्शं। शत्तुविणाशे णाम महन्ते हलअश्श

मांसेन तिक्ताम्लेन भक्तं शाकेन सूपेन समत्स्यकेन।
भुक्तं मया आत्मनो गेहे शालि कूरेण गुडौदनेन ॥२९॥

भिन्न कांस्य खड्खनायाश्चाण्डालवाचाया, स्वरसंयोग, यथा च एष उद्घोषो वध्य डिण्डिमशब्द पटहानाञ्च श्रूयते, तथा तर्कयामि, दरिद्रचारुदत्तो वध्यस्थानं नीयत इति। तत् प्रेक्षिष्ये। शत्रुविनाशो नाम महान् हृदयस्य परितोषो भवति। श्रुतञ्च

मांसेनेति। मया आत्मनो गेहे, शालि शालिसम्बन्धीय शालिधान्यतण्डुलनिर्म्मित-मित्यर्थं, भक्तमन्न मांसेन, तिक्तयुक्तमम्ल तिक्ताम्ल तेन, समत्स्यकेन शाकेन सूपेन च, तथा कूरेण कूपेन अत्पीकृतेन प्रचुरेणेत्यर्थ, गुडौदनेन गुडमिश्रितौदनेन पायसेनेति तात्पर्य्यम्, सह भुक्तम्। सुतरामहं मधुर एव मनुष्य इति भाव।

"कूरं स्तूपे तण्डुले च सैन्धवप्रतीरयो" इति विश्व। इन्द्रवज्रा वृत्तम् ॥२९॥

(क) कर्णमिति। कर्णं दत्त्वा शब्दमभिनीयेत्यर्थ। भिन्न प्रस्तरादौ पतनेन विदीर्णं यत् कांस्य तस्य खड्खनाया खड्खन इत्येव ध्वनिविशिष्टाया, चाण्डालवाचाया-श्चण्डालस्य घोषणावाक्या, स्वरसंयोग, श्रूयत इति परेणान्वय। "वष्टि भागुरिरल्लोप-मवाप्योरुपसर्गयो। टापञ्चापि हलन्तानां यथा वाचा निशा गिरा॥" इति वाक्यस्मात् टाप्प्रत्ययेन वाचेति रूपम्। उद्घोषं उच्चैर्ख्यापित। पटहानां ढक्कानाञ्च शब्द

শকার প্রবেশ করিয়া। (আনন্দের সহিত) আমি নিজের ঘরে মাংস, তিক্ত, অম্ল, শাক, ডাল, মৎস্য এবং প্রচুর পায়সের সহিত শালিধান্য তণ্ডুলের অন্ন খাইয়াছি ॥২৯॥

(ক) (কাণ দিয়া) বিদীর্ণ কাংস্যের ন্যায় 'খন্ খন্' রূপ চাণ্ডাল-বাক্যের শব্দ শুনা যাইতেছে, আর যে হেতু এই বধ্য ডিণ্ডিমের শব্দ উঠিয়াছে এবং ঢাকের শব্দ শুনিতেছি, সেই হেতু বোধ করি, দরিদ্র

पलिदोशे होदि। शुदं अ मए, जोवि किल शत्तुं वावादअन्तं पेक्खदि, तश्श अण्णश्शिं जम्मन्तले अक्खिलोगे ण होदि। मए क्खु विशगण्ठिगब्भपविट्टेण विअ कीड़एण किं पि अन्तलं मग्गमाणेण उप्पाडिदे ताह दलिद्द-चालुदत्ताह विणाशे। शम्पदं अत्तणकेलिकाए पाशादबालग्ग-पदोलिकाए अहिलुहिअ अत्तणो पलक्कमं पेक्खामि। (तथा कृत्वा दृष्ट्वा च।) हीही! एदाह दलिद्द-चालुदत्ताह वज्झं णीअमाणाह एवड्डे जणशम्मद्दे, जं वेलं अम्हालिशे पवले वलमणुश्शे वज्झं णीअदि, तं वेलं

मया, योऽपि किल शत्रुं व्यापाद्यमानं प्रेक्षते, तस्य अन्यस्मिन् जन्मान्तरे अक्षिरोगो न भवति। मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन, किमपि अन्तरं मार्गयता उत्पादितस्तस्य दरिद्रचारुदत्तस्य विनाशः। साम्प्रतमात्मीयाया प्रासादबालाग्रप्रतोलिकायामधिरुह्य आत्मनः पराक्रमं प्रेक्षे। हीही! एतस्य दरिद्रचारुदत्तस्य वध्यं नीयमानस्य एतावान् जनसम्मर्दः; या वेलामस्मादृशः प्रवरो वरमनुष्यो वध्यं नीयते

इति शेषः। अन्यस्मिन् जन्मान्तरे इत्यत्र पुनरुक्तम्, विषग्रन्थिः विषयुक्तपर्वभागस्य गर्भे अभ्यन्तरे प्रविष्टेन, कीटकेन क्षुद्रकीटेनेव। यतो निर्गमाक्षयकत्वाद्दृष्टज्वालाविशेष-द्योतनार्थं विषपदम्। अन्तरस्य दुर्लभताप्रतिपादनार्थं च ग्रन्थिपदम्। कीटकेनेति पञ्चार्थे कमन्वय। अन्तरं छिद्रम्, मार्गयता अन्विष्यता मयेति सम्बन्धः। हीमन्दी

চারুদত্তকে বধ্যস্থানে নিয়া যাইতেছে। তা দেখি। শত্রুনাশে মনের গুরুতর সন্তোষ হয়। বিশেষতঃ আমি শুনিয়াছি—যে ব্যক্তি, শত্রুকে বধ করিতে দেখে, জন্মান্তরে তাহার নয়নরোগ হয় না। বিষবৃক্ষের গিঁটের ভিতরে প্রবিষ্ট কীটের ন্যায় আমি ফাঁক খুঁজিতে থাকিয়া, সেই দরিদ্র চারুদত্তের মৃত্যু ঘটাইয়াছি। এখন নিজের অট্টালিকার নূতন বারান্দার সম্মুখে আরোহণ করিয়া নিজের পরাক্রমটা দেখি। (তাহা করিয়া এবং দেখিয়া) কি আশ্চর্য! কি আশ্চর্য! এই দরিদ্র চারু-

कीदिशे भवे ?। निरीक्ष्य। कधं एशे शे णव-वलद्दके विअ मण्डिदे दक्खिणं दिशं णीअदि। अध किं णिमित्तं मम केलिकाए पाशादबालग्ग-पदोलिकाए शमीवे घोशणा णिवड़िदा णिवालिदा अ ?। विलोक्य। कधं थावलके चेड़े वि णत्थि इध ?। मा णाम तेन इदो गदुअ मन्तभेदे किदे भविश्शदि ?। ता जाव णं अण्णेशामि। इत्यवतीर्य्य उपसर्पति। (झ)

चेटः। दृष्ट्वा। भट्टालका ! एशे शे आगड़े। (ञ)

तां वेलां कीदृशो भवेत्। कथमेष स नव बलीवर्द्द इव मण्डितो दक्षिणां दिशं नीयते। अथ किं निमित्तं मदीयायाः प्रासादबालाग्र प्रतोलिकायाः समीपे घोषणा निपतिता निवारिता च ?। कथं स्थावरकचेटोऽपि नास्तीह ?। मा नाम तेन इतो गत्वा मन्त्रभेदः कृतो भविष्यति। तद्यावदेनमन्विष्यामि।

(ञ) भट्टारका ! एष स आगतः।

विमर्दे, सम्मर्दविमर्दे विवक्षितः। या वेला समय प्राप्स्यत्यर्थः। परमात्मेयम्। एष स चारुदत्तः। मण्डितो भूषितः। निपतिता उपस्थिता, निवारिता हठात् निवर्त्तिता च। मन्त्रभेदो सुमन्त्रसन्तेनापहृत्यात्मप्रकाशः। एनं स्थावरकम्।

দত্তকে বধ্যস্থানে লইয়া যাইতেছে, ইহাতেই এত লোকের ভিড়; যে সময়ে আমাদের মত প্রধান লোককে বধ্যস্থানে নিয়া যাইবে, তখন কি রকম ভিড় হইবে। (দেখিয়া) নূতন বৃষের ন্যায় ভূষিত করিয়া এই সেই চারুদত্তকে দক্ষিণ দিকে নিয়া যাইতেছে। আমার অট্টালিকার নূতন রাস্তার সম্মুখের নিকটে ঘোষণা বিরত ও নিবারিত হইল কেন ? (দেখিয়া) এখানে ভৃত্য স্থাবরক নাই কেন ? এখান হইতে যাইয়া, সেই স্থাবরকদ্বারা গুপ্তবিষয় প্রকাশিত না হয়। তা ইহাকে অন্বেষণ করি। (এই বলিয়া নামিয়া ভিড়ের নিকটে গেল)

(ঞ) ভৃত্য। (দেখিয়া) মহাশয়গণ ! এই তিনি আসিয়াছেন।

चाण्डालौ । ओशलध, देध मग्गं दाल ढक्केध होध तुह्णीआ ।
अविणअ तिक्ख विशाणे दुट्ठवइल्ले इदो एदि ॥३०॥

शकार. । अले । अले । अन्तल अन्तल देध । उपसृत्य ।
पुत्तका । थावलका । चेडा । एहि गच्छम्ह । (ट)

चेटः । ही ही । अणज्ज । वशन्तशेणिअं मालिअ ण

अपसरत, दत्त मार्गम् द्वार पिधत्त भवत तूष्णीकाः ।
अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति ॥३०॥

(ट) अरे । अरे । अन्तरमन्तर दत्त । पुत्रक । स्थावरक । चेट । एहि गच्छाव ।

---

(ञ) चाण्ड इति । भट्टारका इति गौरवप्रकाशाय द्रष्टृजनानां सम्बोधनम् । एष स वसन्तसेनाया प्रहर्तृत्वात् शकारः ।

अपेति । अपसरत अस्य सन्निधानादिति शेष, मार्गम् अस्यागमनपथम् दत्त परित्यजतेत्यर्थ । अन्यथा आघातादनिष्टप्राप्तिसम्भव इति भाव । द्वारं पिधत्त आवृणुत । अन्यथा आभ्यन्तरेऽपि प्रवेशाशङ्केति भाव । तूष्णीकाः मौनावलम्बिन, भवत । न चेत् स्वरमात्रश्रवणादपि समीपागमनसम्भवेति भाव । कथमेतत् तत्राह— अविनयो दुर्व्यवहार एव तीक्ष्णं विषाणं शृङ्गं यस्य स दुष्टबलीवर्दः तत्स्वरूप शकार, इत एति अत्रागच्छति ।

अत्र परम्परितं रूपकमलङ्कार । "तूष्णीं मौनम् तूष्णीकः" इत्यमर ।

आर्या जातिः ॥३०॥

(ट) शकार इति । अन्तरं गन्तुमवकाशम् । द्रष्टृजनान् प्रति उक्तिरियम् ।

---

চাণ্ডালদ্বয়। সরুন, পথ দিন, দ্বার আবৃত করুন এবং নীরব হউন। কারণ, অত্যাচাররূপ তীক্ষ্ণ শৃঙ্গশালী দুষ্ট বৃষ, এদিকে আসিতেছে ॥৩০॥

(ট) শকার। ওরে! ওরে! ফাঁক দাও, ফাঁক দাও। (নিকটে যাইয়া) পুত্র! স্থাবরক! ভৃত্য! আয়, আমরা যাই।

पलितुट्टे ग्नि, शम्पद पणइजण कप्पपादव अज्जचालुदत्त माल-दुदुं ववशिदे ग्नि ?। (ठ)

शकार । णहि लग्रणकुम्भशदिशे हग्गे इत्थिग्रं वावा-देमि । (ड)

सर्वे । अहो ! तुए मारिदा, ण अज्जचारुदत्तेण । (ढ)

शकार । के एव्व भणादि ?। (ण)

सर्वे । चन्दनकं निर्दिश्य । ण एसो साहु । (त)

(ठ) ही ही ! अनार्य ! वसन्तसेनिका मारयित्वा न परितुष्टोऽसि ? साम्प्रत प्रणयिजनकल्पपादपम् आर्य्यचारुदत्तं मारयितुं व्यवसितोऽसि ?।

(ड) नहि रत्नकुम्भसदृशोऽहं स्त्रियं व्यापादयामि ।

(ढ) अहो ! त्वया मारिता न चारुदत्तेन ।

(ण) क एवं भणति ?। (त) नन्वेष साधुः ।

(ठ) चेट इति । प्रणयिजनानां बन्धुलोकानां कल्पपादपम् सर्व्वाभीष्टपूरणादिति भावः । व्यवसित प्रवृत्त ।

(ड) शकार इति । रत्नकुम्भसन्दृशं इत्यनेनात्मन उत्तमत्वम् उत्तमत्वाच्च स्त्रीहत्या वैमुख्यं सूचितम् ।

(ঠ) ভৃত্য। হি আশ্চর্য্য। অনার্য্য! বসন্তসেনাকে হত্যা করিয়া সন্তুষ্ট হও নাই, এখন বন্ধুজনের কল্পবৃক্ষস্বরূপ আর্য্য চারুদত্তকে হত্যা করিতে প্রবৃত্ত হইয়াছ ।।

(ড) শকার। রত্নকুম্ভের তুল্য আমি, স্ত্রীহত্যা করি নাই।

(ঢ) সকলে। ওহে! তুমিই হত্যা করিয়াছ, কিন্তু চারুদত্ত নহে।

(ণ) শকার। কে এরূপ বলে ?।

(ত) সকলে। (ভৃত্যকে লক্ষ্য করিয়া) ওহে! এই সাধু।

शकारः। (अपवार्य सभयम्।) अविदमादिके अविदमादिके। कध थावलके चेडे सुट्ठु ण मए बद्धे। एशे क्खु मम अकज्जश्श शक्खी। (विचिन्त्य।) एव्वं दाव कलइश्शं। (प्रकाशम्।) अलिअं भट्टालका! हं हो! एशे चेडे शुवण्णचोलिआए मए गहिदे, पिट्टिदे, मालिदे, बद्धे अ। ता किदवेले एशे जं भणादि, किं शच्चं? (अपवारितकेन चेटस्य कटकं प्रयच्छति। स्वैरकम्।) पुत्तका! थावलका! चेडा! एदं गेण्हिअ अण्णधा भणाहि। (घ)

(घ) हन्त। कथं स्थावरकश्चेटः सुष्ठु न मया बद्धः। एष खलु मम अकार्यस्य साक्षी। एवं तावत् करिष्यामि। अलीकं भट्टारकाः! अहो! एष चेटः सुवर्णचौरिकया मया गृहीतः, पीडितः, मारितः, बद्धश्च। तत् कृतवैर एष यद्भणति किं सत्यम्? पुत्रक! स्थावरक! चेट! एतद्गृहीत्वा अन्यथा भण।

---

(घ) शकार इति। अविदमादिके इत्यकस्मैव भयविस्मयसूचकमव्ययम्, तस्मात् अत्र द्विरुक्तिः। सुट्ठु सम्यक्। बद्धे बद्धः। हं हो भट्टारका द्रष्टारः। अलीकम् अनेन यदुक्तं तन्मिथ्या। सुवर्णचौरिकया स्वर्णचौर्यकरणेन हेतुना। गृहीतो धृतः पीडितो भर्त्सनेन निग्राहितः मारितः प्रहृतः। तस्मात् कृतं वैरं शत्रुता यस्य सः। किं सत्यं तदिति शेषः। अपवारितकेन अन्येषामदृश्यभावेनेत्यर्थः। स्वैरकं मन्दमुच्चारणमित्यर्थः।

अत्र प्रथमवाक्ये पश्चात्तापो नाम अन्तिमवाक्ये च प्रोत्साहनं नाम नाट्यालङ्कारः। "मोहावधीरितार्थस्य पश्चात्तापः स एव तु।" "प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनात्।" इति दर्पणलक्षणद्वयात्।

(ঘ) শকার। (গোপনে ভয়ের সহিত) হায়! হায়! ভৃত্য স্থাবরককে আমি ভাল করিয়া বাঁধিয়াছিলাম না। এ, আমার অকার্য্যের সাক্ষী। (চিন্তা করিয়া) এইরূপ করিব। (প্রকাশ্যে) মহাশয়গণ! মিথ্যা

चेटः । गृहीत्वा । पेक्खध पेक्खध भट्टालका ! हंहो ! शुवण्णेण मं पलोभेदि । (द)

शकारः । कटकमाच्छिद्य । एशे शे शुवण्णके, जश्श कालणादो मए वद्धे । सक्रोधम् । हंहो चाण्डाला ! मए क्खु एशे शुवण्ण-भण्डाले णिउत्ते, शुवण्णं चोलअन्ते मालिदे, पिट्टिदे, ता जदि ण पत्तिआअध, ता पिट्टिं दाव पेक्खध । (ध)

---

(द) प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः ! । हंहो ! सुवर्णेन मां प्रलोभयति ।

(ध) एतत् तत् सुवर्णकम् । यस्य कारणात् मया बद्धः । हंहो चाण्डालाः ! मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन् मारितः पीडितः । तद्यदि न प्रत्ययध्वे, तदा पृष्ठं तावत् प्रेक्षध्वम् ।

---

(द) चेट इति । हंहो आश्चर्य्यम् । प्रलोभयति एतद्विपरीतं वक्तुमिति शेषः ।

(ध) शकार इति । आच्छिद्य आक्रम्य नीत्वा । प्रत्ययध्वे विश्वसिथ । पृष्ठं मम प्रहारचिह्नसमन्वितमिति भावः । ततः किञ्चित्पूर्वमेव उच्चात् पतनेन चेटस्य पृष्ठे चिह्नमभूत्, तदेव प्रहारचिह्नत्वेन दर्शितमिति बोध्यम् ।

भाषा । मूर्खं शकारस्य प्रत्युत्पन्नमतित्वम् ।

---

কথা। ওহে! এই ভৃত্য সোণা চুরি করিয়াছিল বলিয়া, আমি উহাকে ধরিয়াছিলাম, তিরস্কার করিয়াছিলাম, মারিয়াছিলাম এবং বাঁধিয়া রাখিয়াছিলাম। সুতরাং ইহার সঙ্গে শত্রুতা করা হইয়াছে, তাহাতে এ, যাহা বলে তাহা কি সত্য হয়?। (গোপনে ভৃত্যকে বলয় দান করিল, পরে চুপি চুপি) পুত্র! স্থাবরক! ভৃত্য! ইহা গ্রহণ করিয়া অন্যরূপ বল্।

(দ) ভৃত্য। (গ্রহণ করিয়া) মহাশয়গণ! দেখুন দেখুন, কি আশ্চর্য্য! সোণা দিয়া লুব্ধ করিতেছে।

(ধ) শকার। (বলয় টানিয়া লইয়া) এই সেই সোণা; যাহার

